### टः पुंसि ना ॥१॥४॥२४॥

इदुदन्तात् परं पुंसि, टो नादेशः स्मृतस्ततः ॥
अमुना मुनिना नित्यं, साधुना साध्यते शिवम् ॥२४॥

### ङिडौँ ॥१॥४॥२५॥

सप्तम्येकवचोङेर्डौ–विदुदन्तात्परं भवेत् ॥
मुनौ संप्रीणिते प्रीतिः, प्रभौ भवति निर्मला ॥२५॥

### केवलसखिपतेरौ ॥१॥४॥२६॥

सखिशब्दात् तथा पत्यु–रिदन्तात् केवलान् ङिरौः ॥
सख्यौ पत्यौ मृते साध्वी, ब्रह्मचर्यं चरेच्च चिरम् ॥२६॥

### न ना ङिदेत् ॥१॥४॥२७॥

सखिपतेः परं टो ना, ङित्येत्त्वं च न केवलात् ॥
सख्या पत्या समं प्रीतिः, सख्ये पत्ये प्ररोचते ॥२७॥

### स्त्रियां ङितां वा दै–दास्–दास्–दाम् ॥१॥४॥२८॥

दै दास् दास् दाम् ङितां वा स्त्री–दुदन्तात् स्युर्यथाक्रमम् ॥
प्राप्यं धेनोः पयो धेन्वा, बुध्याः स्वं बुद्धये हितम् ॥२८॥

### स्त्रीदूतः ॥१॥४॥२९॥

नित्यस्त्रीदूत्परेषां स्यु–र्ङितां दायादयः क्रमात् ॥

---

'टा' प्रत्ययस्य 'ना' इत्यादेशः स्यात् । पुंसीति–बुद्ध्या ॥२४॥ ङिरिति निर्देशाच्चतुर्थ्येकवचनस्य ङेरित्यस्य न भ्रमः ॥२५॥ प्रियसखौ, नरपतावित्यादौ केवलाभावादौत्वाभावः ॥२६॥ केवलात् सखिपतेर्यष्टाया ना ङिति परे एच्चोक्तः स न स्यादिति ॥२७॥ अन्योदाहरणान्यूह्यानि स्वयम् ॥२८॥ सरस्वत्यै देव्यै नमः, तस्या देव्याः वरः–वरदानं, वरः–

सरस्वत्यै नमो देव्यै, तस्या देव्या वरो वरः ॥ २९ ॥

## वेयुवोऽस्त्रियाः ॥१॥४॥३०॥

अस्त्रिया वेयुवः स्यादेः, स्त्रीदूतो दैमुखा ङिताम् ॥
श्रियां श्रियि शुभं सर्वं, श्रियै श्रिये श्रियाः श्रियः ॥

## आमो नाम् वा ॥१॥४॥३१॥

स्यादियुवोऽस्त्रिया आमो, नाम् स्त्रीदूतः परं नवा ॥
अतिश्रियां भ्रुवां पातात्, श्रीणां भ्रूणां नतिर्भवेत् ॥३१॥

## ह्रस्वापश्च ॥१॥४॥३२॥

स्याद् ह्रस्वान्तात्तथाऽऽबन्तात्, स्त्रीदूदन्ताच्च नाम् ध्रुवम् ॥
आमः किं जातु देवानां-प्रियो मोहं विमुञ्चति ॥३२॥

## सङ्ख्यानां र्ष्णाम् ॥१॥४॥३३॥

रेफान्तसान्तनान्तानां, संख्यानामाम् च नाम् भवेत् ॥
षण्णां तथैव पञ्चानां चतुर्णामेकमाप्नुहि ॥ ३३ ॥

## त्रेस्त्रयः ॥१॥४॥३४॥

आम्सम्बन्धि त्रिशब्दस्य, त्रयादेशो भवेत् किल ॥

---

श्रेष्ठः ॥२९॥ इयुवः-इयुवृस्थानिनः, स्त्रीदूतः स्यादेः ङितां दैप्रमुखाश्चत्वार आदेशा वा स्युः, स्त्रीशब्दसम्बन्धिनो न स्युरिति । तेन स्त्रियै इत्याद्येव ॥३०॥ इयुवः स्त्रीदूतः परं स्यादेः आमः नाम् वा स्यात्, स्त्रिया न इत्यर्थः ॥३१॥ मालानां, स्त्रीणां, वधूना-मित्याद्यपि बोध्यम् । देवानांप्रियः-मूर्खः मोहं जातु-कदाचिदपि किं विमुञ्चति ? नैवेत्यर्थः ॥३२॥ षण्णां-तपसां, पञ्चानां महाव्रतानां, चतुर्णां-दानादिधर्माणामिति यावत् ॥३३॥ उदाहरणसत्क-श्लोकार्धं वाल्मीकिरामायणे, तत्पूर्वार्धं तु " तव वा वैनतेयस्य, मारुतस्य

त्रयाणामेव भूतानां, शक्तिः सागरलंघने ॥ ३४ ॥

## एदोद्भ्यां ङसिङसो रः ॥१॥४॥३५॥

रेफो ङसिङसोः स्थाने, स्यादेदोद्भ्यां परस्थयोः ॥
मुनेर्गौ रक्षतो धेनोः, हरेर्द्योस्तनयोऽभवत् ॥ ३५ ॥

## खितिखीतीय उर् ॥१॥४॥३६॥

खितिसम्बन्धिनः खीती-सम्बन्धिन इवर्णजात् ॥
यतो ङसिङसोरुर् स्यात्, सख्युः पत्युः सुखात् सुखम् ॥

## ऋतो डुर् ॥१॥४॥३७॥

ङसिङसोर्डुरादेशः, ऋकारात् परयोर्मतः ॥
पितुर्धनं सुतस्य स्यान्, मातुश्च दुहितुर्भवेत् ॥ ३७ ॥

## तृ-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्त्रो घुट्यार् ॥१॥४॥३८॥

स्यात् तृच्-तृन्प्रत्ययान्तस्य, स्वस्रादेश्च ऋतो घुटि ॥
आरादेशोऽरिहन्तारं, स्मारं स्मारं स्मरं हरेत् ॥ ३८ ॥

## अर्डौ च ॥१॥४॥३९॥

ङौ घुटि च ऋतः स्थाने-ऽरादेशो नित्यशः स्मृतः ॥

---

महात्मनः ॥ इति ॥३४॥ मुने, गोः धेनोः रक्षतः हरेस्तन्नामकस्य नृपस्य द्योः -स्वर्गात् तनयः अभवत्-अवातरदिति ॥३५॥ इवर्णजात्-यतः-यकारादिति। अतिसखेरित्यादौ यत्वाभावान्नोर् ॥३६॥ ऌकारान्तादप्यनेन ङसिङसोर्डुरादेशः, रस्थाने लः, तेन आप्लृशब्दस्य आपुल् इति रूपम् ॥३७॥ अरिहन्तारम्-अर्हन्तम् , स्मारं स्मारं-स्मृत्वा स्मृत्वा, स्मरं-कामं, हरेदिति। कर्तारं, कर्तारौ २ कर्तारः इत्यादिरूपसिद्धिर्बोध्या ॥३८॥ ऋतः-

पितरि पितरं बालो, मातरि मातरं नमेत् ॥ ३९ ॥

## मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये ॥१॥४॥४०॥

प्रशंसायां सिनाऽऽमन्त्र्ये मातुर्मातो भवेत् सुते ॥
बहुव्रीहौ समासे हे–वामामात ? चिरं जय ॥ ४० ॥

## ह्रस्वस्य गुणः ॥१॥४॥४१॥

आमन्त्र्ये वर्तमानस्य, ह्रस्वान्तस्य सिना समम् ॥
भवेद् गुणः समासन्नः, मुने ? साधो ? श्रुतं पठ ॥४१॥

## एदापः ॥१॥४॥४२॥

आमन्त्र्ये वर्तमानस्य, ह्याबन्तस्य सिना समम् ॥
एदन्तादेश आदेश्यो, बाले ? मानमपाकुरु ॥ ४२ ॥

## नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः ॥१॥४॥४३॥

द्विस्वराम्बार्थशब्दाना–माबन्तानां सदादिताम् ॥
चामन्त्र्येऽर्थे सिना ह्रस्व, आगोऽम्ब ? क्षम देवि ? मे ॥४३॥

## अदेतः स्यमोर्लुक् ॥१॥४॥४४॥

सेस्तदादेशभूतस्या–मो लुक् सम्बोधने भवेत् ॥

---

ऋकारस्येति ॥३९॥ 'प्रशंसायां' स्थाने 'प्रशंसिते' इत्यपि पाठः। हे वामामात ?–पार्श्वप्रभो ? । चेद् मातृद्वारा पुत्रस्य प्रशंसा न तदा अरे गर्दभीमातृक ? इति मातुर्मात इत्यदन्तादेशोऽपि न ॥४०॥ समासन्नः–'आसन्नः' (७-४-१२०) इतिसूत्रविपर्याभूतः इकारादेरेकारादिर्गुणः स्यादिति ॥४१॥ अपाकुरु–दूरीकुरु इति ॥४२॥ अम्बा, अक्का, अत्ता, अल्ला इत्याबन्ता द्विस्वराम्बार्थशब्दाः। सदादितां–नित्यदितामिति । आगः–अपराधम् ॥४३॥ अम्–नपुंसके सेरमादेशः । परमे ? परमा उत्कृष्टा, ईः–लक्ष्मीर्यस्य सः, तत्सम्बोधने हे परमे !

अदेदन्ताच्च हे देव !, परमे ! परमे वस ॥ ४४ ॥

**दीर्घङ्याब्व्यञ्जनात् सेः ॥१॥४॥४५॥**

ङ्याब्भ्यां परस्य दीर्घाभ्यां, व्यञ्जनाच्च लुगिष्यते ॥
सेरस्तीयं परा देवी, राजा तां वन्दते सदा ॥ ४५ ॥

**समानादमोऽतः ॥१॥४॥४६॥**

लुक् समानात् परस्यामो-ऽकारस्य व्यपदिश्यते ॥
वन्देऽहम् ऋषभं शान्तिं, नेमिं पार्श्वं च वीरपम् ॥४६॥

**दीर्घो नाम्यतिसृचतसृषृः ॥१॥४॥४७॥**

आमादेशे परे नामि, स्यात् समानस्य दीर्घता ॥
तिसृ-चतसृ-षृान्तानां, न जिनानां तपस्तपः ॥ ४७ ॥

**नुर्वा ॥१॥४॥४८॥**

समानस्य नृशब्दस्य, नामि दीर्घो विभाषया ॥
यौवनं धनमायुष्यं, नृणां नृणां विनश्वरम् ॥ ४८ ॥

**शसोऽता सश्च नः पुंसि ॥१॥४॥४९॥**

शसोऽकारेण दीर्घः स्यात्, समानस्य यथोचितः ॥
तथा पुंसि शसः सो नो, मुनीन् देवाननुपाश्रय ॥ ४९ ॥

---

देव !, परमे-परमपदे-मोक्षे ॥४४॥ सेरिति-पूर्वान्वयि । इयं देवी परा-उत्कृष्टा अस्ति, इति तां राजा सदा वन्दते इति ॥४५॥ पितरमित्यादौ विशेषविधानात् प्रथममेवार् ॥४६॥ तिसृ-चतसृ-षान्त-रेफान्त शब्दानां समानस्य आमादेशनामिपरे दीर्घता-दीर्घः न-न स्यादिति, तदन्यसमानस्य स्यादित्यर्थः ॥४७॥ नृणां नृणामिति-मनुष्यमात्राणामित्यर्थः ॥४८॥ शसः सो नः-शस्सम्बन्धिनः सकारस्य नकारः स्यादिति ॥४९॥

## सङ्ख्यासायवेरह्नस्याहन् ङौ वा ॥१॥४॥५०॥

सङ्ख्याभ्यः सायशब्दाच्च, वेरह्नस्य परस्य ङौ ॥
आदेशोऽह्न् भवेद्वा तद्, द्व्यह्नि द्व्यहनि नो चिरम् ॥५०॥

## निय आम् ॥१॥४॥५१॥

नियः परस्य ङेः स्थाने, आमादेशो बुधैर्मतः ॥
सन्नद्धे सति सेनान्यां, सेना स्वर्गं जयेदपि ॥ ५१ ॥

## वाष्टन आः स्यादौ ॥१॥४॥५२॥

स्वसम्बन्ध्यन्यसम्बन्धि-स्यादौ वाष्टन आ भवेत् ॥
अष्टभिः कर्मभिर्भ्रान्ति-रष्टाभिर्मातृभिर्हृता ॥ ५२ ॥

## अष्ट और्जस्शसोः ॥१॥४॥५३॥

कृतात्वस्याष्टशब्दस्य, जस्शसोरौरुदाहृतः ॥
बुद्धेरष्टौ गुणाः सन्ति, सिद्धीरष्टौ नयन्ति ते ॥५३॥

---

द्व्यह्नि, द्व्यहनि इति रूपद्वयं ङौ-'ईङौ वा' (२-१-१०९) इति विकल्पजनितम्, अस्य विकल्पपक्षे तु द्व्यह्ने इति तृतीयं रूपं ज्ञेयम्, एवमन्यत्रापि सायाह्नादौ ॥५०॥ सेनान्यां-सेनापतौ सन्नद्धे सति सेना स्वर्गमपि जयेदित्यन्वयः ॥ ५१ ॥ अष्टभिः कर्मभिः-ज्ञानावरणादिभिः जनिता भ्रान्तिः-भवभ्रमणम् अष्टाभिः मातृभिः पञ्चसमिति-त्रिगुप्तिस्वरूपप्रवचनमातृभिः हृता-अपाकृतेति ॥५२॥ 'शुश्रूषा श्रवणं चैव, ग्रहणं धारणं तथा ॥ ऊहोऽपोहोऽर्थविज्ञानं, तत्त्वज्ञानं च धीगुणाः' ॥१॥ इत्यभिधानचिन्तामणि-द्वितीयकाण्डोक्ता अष्टौ बुद्धिगुणाः । 'लघिमा वशितेशित्वं, प्राकाम्यं महिमाऽणिमा ॥ यत्रकामावसायित्वं, प्राप्तिरैश्वर्यमष्टधा' ॥ २ । ११६ ॥ इत्यष्टौ सिद्धयः ( अभि० ) ॥५३॥

## डतिष्णः सङ्ख्याया लुप् ॥१॥४॥५४॥

डतिषकारनान्तानां, सङ्ख्यानां जस्‌शसोर्हि लुप् ॥
कत्यागच्छन्ति शालायां, षट् सप्त नव वा दश ॥५४॥

## नपुंसकस्य शिः ॥१॥४॥५५॥

नपुंसकस्य शब्दस्य, जायते शिस्तु जस्‌शसोः ॥
कुण्डानि सन्ति कुण्डानि, पश्य तत्र पयांसि च ॥५५॥

## औरीः ॥१॥४॥५६॥

नपुंसकस्य सम्बन्धी, भवेदौकार ईध्रुवम् ॥
पयसी स्तो जले दुग्धे, कोषं नानार्थकं स्मर ॥ ५६ ॥

## अतः स्यमोऽम् ॥१॥४॥५७॥

क्लीबादन्तस्य शब्दस्य, स्यमोरम् जायते ततः ॥
गृहं वनं सुखं दुःखं, समस्तं योगिनां समम् ॥५७॥

## पञ्चतोऽन्यादेरनेकतरस्य दः ॥१॥४॥५८॥

दः क्लीबान्यादिपञ्चानां, स्यमोरेकतराद्दते ॥
चित्ते संचिन्तितं चान्यद्, दैवेनान्यत् पुरस्कृतम् ॥५८॥

---

शालायां कति बाला आगच्छन्ति ? षट् सप्त नव दश वा बाला आगच्छन्ति इति ॥५४॥ तत्र पयांसि च–चात् सन्ति पश्य चेति ॥५५॥ पयसीति–जले दुग्धे इति द्विवचनं न तु सप्तम्येकवचनं प्रकृते । 'पयो जलं पयः क्षीरम्' इति नानार्थकः कोषः ॥५६॥ क्लीबादन्तस्य–अदन्तस्य नपुंसकस्येति । 'श्रयन्तां शासनं जैनं, जैनं जयति शासनम्' इति उत्तरार्धपाठोऽपि ॥५७॥ नपुंसकस्यान्यादिपञ्चकस्य स्यमोर्दः स्यादेकतरं वर्जयित्वेति। अन्य-अन्यतर-इतर-डतर-डतम इत्यन्यादयः पञ्च सर्वाद्यन्तर्वर्तिनः ॥५८॥

## अनतो लुप् ॥१॥४॥५९॥

नपुंसकानदन्तस्य, स्यमोर्लुब् विदुषां मते ॥
जीर्यति गोपयः सद्यो, दधि मासेन जीर्यति ॥ ५९ ॥

## जरसो वा ॥१॥४॥६०॥

क्लीबस्य जरसन्तस्य, स्यमोर्लुब् वा प्रजायते ॥
अतिजरः कुलं पश्या-तिजरसं कृतं सुरैः ॥ ६० ॥

## नामिनो लुग् वा ॥१॥४॥६१॥

लुग्वा भवेत् स्यमोर्नाम्नो, नाम्यन्तस्य नपुंसके ॥
सिद्धे लुपैव लुक्कारः; स्थानिवत्त्वार्थमिष्यते ॥ ६१ ॥

## वान्यतः पुमाँष्टादौ स्वरे ॥१॥४॥६२॥

यो नाम्यन्तोऽन्यतः क्लीबः, स पुंवद्वा स्वरे परे ॥
टादौ स्यात् कर्तृणा कर्त्रा, कुलेन कर्म भुज्यते ॥६२॥

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् ॥१॥४॥६३॥

स्वान्यसम्बन्धिटादौ वा, स्वरे परे नपुंसके ॥
दध्यादीनामनादेशो, दध्नि दधनि सद्घृतम् ॥ ६३ ॥

## अनाम्स्वरे नोऽन्तः ॥१॥४॥६४॥

आम्वर्जिते स्वरे स्यादौ, नाम्यन्तस्य नपुंसके ॥

---

लुक्मकृत्वा लुप्करणं स्यमोः स्थानिवद्भावेन यत् कार्यं तस्य प्रतिषेधार्थं, तेन त्यदाद्यत्व-सत्वादि न स्यादिति ॥५९॥ जरसादेशाभावेऽतिजरमिति ॥६०॥ हे वारे! हे वारि! इत्याद्युदाहरणमुन्नेयमिति॥६१॥ त्रपुणे इत्यादौ अन्यतः क्लीबत्वं नेति न पुँवद्भावविकल्पः।६२।दध्नि-दधनि-दधिमात्रे घृतं सद् नत्वसदिति।६३।अना-

नोऽन्तः स्याद्वारिणा व्याप्तं, विश्वं वर्षति वारिदे ॥६४॥

स्वराच्छौ ॥१॥४॥६५॥

नोऽन्तः शौ जस्शसादेशे, भवेत् क्लीबात् स्वरान्ततः ॥
कुलानि सत्कुलान्येषु, सञ्जाता जनिरर्हताम् ॥६५॥

धुटां प्राक् ॥१॥४॥६६॥

नोऽन्तः स्वरान्तु धुड्जाति-स्तदन्तस्य नपुंसके ॥
प्राग् धुड्भ्यः शौ परे सन्ति, पयांसि सन्ति शर्मणे ॥६६॥

र्लो वा ॥१॥४॥६७॥

रेफलाभ्यां च धुड्जाति-स्तदन्तस्य नपुंसके ॥
नोऽन्तः प्राग् धुटः शौ वा, सूर्ञ्जि सूर्जि कुलानि ते ॥६७॥

घुटि ॥१॥४॥६८॥

यावत् पादसमाप्ति यत्, कार्यं तद् घुटि संभवेत् ॥
यत्र विशेषता तत्र, वक्ष्यति सूत्रकृत् स्वयम् ॥ ६८ ॥

अचः ॥१॥४॥६९॥

धुडन्तस्याञ्चतेर्धातो-र्नोऽन्तः स्याद् घुटि प्राग् धुटः ॥
स्वान्यसम्बन्धिनि प्राञ्चं, तर्कं प्राञ्चः समाश्रिताः ॥६९॥

---

मिति-वारीणाम् ॥६४॥ अत इत्येव सिद्धे स्वरग्रहणमुत्तरार्थम् ॥६५॥ स्वरात् परा या धुड्जातिस्तदन्तस्य नपुंसके शौ परे धुड्भ्यः प्राग् नोऽन्तः स्यादिति । सन्ति-निर्मलानि, पयांसि-वारीणि शर्मणे-सुखाय सन्ति-विद्यन्त इत्यर्थः ॥६६॥ ऊर्जयतीति भ्राजादित्वात् क्विपि ऊर्ज्, शोभना ऊर्जः येषु तानि ॥६७॥ अधिकारसूत्रमिदम् ॥ ६८ ॥ धुडन्तस्याञ्चतेर्धातोः स्वान्यसम्बन्धिनि घुटि परे धुटः प्राग् नोऽन्तः स्यादिति ॥६९॥

## ऋदुदितः ॥१॥४॥७०॥

ऋदुदितो धुडन्तस्य, स्वान्यसम्बन्धिघुट्परे ॥
नोऽन्तः स्वराद् धुटः प्राक् स्यात्, सुदन् बालो भवेन् महान्॥

## युज्रोऽसमासे ॥१॥४॥७१॥

'युजूंपी योग' इत्यस्या–समासे प्राग् धुटो घुटि ॥
धुडन्तस्य भवेन्नोऽन्तो, युञ्जौ हस्तौ मतोऽञ्जलिः ॥७१॥

## अनडुहः सौ ॥१॥४॥७२॥

अनुडुहो धुडन्तस्य, स्वान्यसम्बन्धिसौ परे ॥
नोऽन्तो भवेद् धुटः पूर्वम–नड्वान् वृषभो महान् ॥७२॥

## पुंसोः पुमन्स् ॥१॥४॥७३॥

स्वसम्बन्ध्यन्यसम्बन्धि–घुटि पुंसः पुमन्स् भवेत् ॥
पुमांसं सात्त्विकं नन्ता, सात्त्विकः संभवेत् पुमान् ॥७३॥

## ओत औः ॥१॥४॥७४॥

ओकारस्य भवेदोतो, वहिते औः परे घुटि ॥
यद्गृहे गौश्चगावश्चेद्, व्यर्था द्यौस्तस्य गोमतः ॥७४॥

---

सुदन्निति–शोभना दन्ता यस्येति 'वयसि दन्तस्य दतृ' (७–३–१५१) इति दत्रादेशत्वाद् ऋदित्वात् सूत्रप्राप्तिरिति ॥७०॥ असमास इति–अश्वयुक्। युजिच् समाधावित्यस्य न, प्रकृते विशेषवचनात्, तेन युजमापन्ना मुनय इति ॥७१॥ साविति–अनड्वाहौ ॥७२॥ सूत्रे पुंसोरिति उदिदन्वितस्य रूपम्, वृत्तौ तु पुंसः इति पुंसशब्दस्य स्पष्टप्रतिपत्त्यर्थमुदिद्वर्जितस्य रूपम् ओकारस्य ओत एव विहिते घुटि परे औः भवेदिति। ओत इति–चित्रगुः ॥७४॥

## आ अम् शसोऽता ॥१॥४॥७५॥

स्यादम्शसोरकारेण, ह्योकारस्याः सतां मते ॥
निपीय गा जिनेन्द्रस्य, गच्छ द्यां भव्य ! सत्वरम् ॥७५॥

## पथिन्मथिन्ऋभुक्षः सौ ॥१॥४॥७६॥

पथिन्–मथिन्–ऋभुक्षिन् चे–त्येषामन्तस्य सौ परे ॥
नान्तानाम् आ भवेत् पन्था, गतो येन महाजनः ॥ ७६ ॥

## एः ॥१॥४॥७७॥

पथ्यादीनां च नान्ताना–मिकारस्य परे घुटि ॥
आकारः स्यात् सुपन्थानं, गन्ता मन्था हि कर्मणाम् ॥७७॥

## थो न्थ् ॥१॥४॥७८॥

पथिनो मथिनश्चैव, नान्तयोस्थस्य घुट्परे ॥
न्थादेशो जायते नित्यं, पन्थानं सौम्यमाश्रय ॥७८॥

## इन् ङीस्वरे लुक् ॥१॥४॥७९॥

पथ्यादीनां च नान्तानां, लुप्यते इन्निति ध्रुवम् ॥

---

ओकारस्य अम्–शसोरकारेण सह आः स्यादिति । जिनेन्द्रस्य गाः–वाणीः निपीय, भव्य ! सत्वरं द्यां–स्वर्गं गच्छेति ॥७५॥ पथिन्–मथिन्–ऋभुक्षिन् इत्येषां नान्तानाम् अन्तस्य सौ परे आः भवेदिति ॥७६॥ एरिति इकारस्य पष्ठ्येकवचने । कर्मणां मन्था हि–निश्चयेन सुपन्थानं–मोक्षमार्गं गन्तेति मन्था इति पूर्वसूत्रो–दाहरणतयाऽवसेयमिति ॥७७॥ अनेकवर्णत्वात् सर्वस्य प्राप्तौ 'थः' इतिस्थानिविशेषार्थम्, ऋभुक्षिन्निवृत्त्यर्थं च ॥७८॥ नान्तानां पथ्यादीनाम् 'इन्' इत्यवयवः ङीप्रत्यये स्याद्यघुट् स्वरादौ च प्रत्यये परे लुप्यते–लुक्भवतीत्यर्थः । सुपथी–सन्मार्गगामिनी सती स्त्री पथा–मार्गेण

डौ स्याद्यघुट्स्वरादौ च, यायात् स्त्री सुपथी पथा ॥७९॥

## वोशनसो नश्चामन्त्ये सौ ॥१॥४॥८०॥

आमन्त्ये सौ परे स्याता-मुशनसश्च नश्च लुक् ॥
वान्तादेशादुशनन् हे, उशन ! शिक्षायासुशन ॥८०॥

## उतोऽनडुच्चतुरो वः ॥१॥४॥८१॥

चतुरोऽनडुहो नित्य-मामन्त्ये सौ परे उतः ॥
स्यात् सस्वरो वकारोऽमुं, हेऽनड्वन् ? हलिनं स्मर ॥८१॥

## वाः शेषे ॥१॥४॥८२॥

अनडुच्चतुरोःशेषे, घुट्युकारस्य वाः स्मृतः ॥
यस्य धर्मा न चत्वारः, सोऽनड्वानिति गीयते ॥८२॥

## सख्युरितोऽशावैत् ॥१॥४॥८३॥

इदन्तसखिशब्दस्य, स्वान्यसम्बन्धिनीष्यते ॥
शेषे घुटि शि भिन्ने चे-दैकारान्तः सखाय ए ? ॥८३॥

## ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः ॥१॥४॥८४॥

ऋदुशनस्पुरुदंशो-ऽनेहोभ्यः सखिशब्दतः ॥
परस्य शेषसेर्डाः स्यात्, कर्ता कार्यसौ सखा ॥८४॥

---

न तूत्मार्गेण यायात् ॥७९॥ आमन्त्र्ये वर्तमानस्य उशनस्शब्दस्य सौ परे 'न-लुकौ' अन्तादेशौ वा स्यातामिति । उशनाः शुक्रः । विकल्पपक्षे तु हे उशनः इति ॥८०॥ हे अनड्वन् ? अमुं हलिनं-कर्षकं स्मर, तत्र सुखदातृत्वात् । हे प्रियचत्वः इत्यपि ॥८१॥ चत्वारः-दान-शील-तपो-भावरूपाः ॥८२॥ ए सखाय इति सखि शब्दस्य सम्बोधने बहुवचनम् ॥८३॥ ऋदिति-ऋदन्तस्येति । उशना, पुरुदंशा, अनेहा इत्यप्युदाहरणानि ॥८४॥

## नि दीर्घः ॥१॥४॥८५॥

शेषे घुटि परे यो नस्तस्मिन् प्राक्स्वरदीर्घता ॥
राजा धीमान् प्रजाप्रेमी, दयालुर्भुवि दुर्लभः ॥८५॥

## न्स्महतोः ॥१॥४॥८६॥

शेषे, घुटि स्वरो दीर्घो, महतो नन्तसन्तयोः ॥
श्रेयो यशांसि वाञ्छन्तो, महान्तो यान्ति काननम् ॥८६॥

## इन्हन्पूषार्यम्णः शिस्योः ॥१॥४॥८७॥

इनन्तस्य हनादीनां, स्वरस्य शौ तथा च सौ ॥
शेषे दीर्घो भवेद् दण्डी, वाग्मी नूनं न संशयः ॥८७॥

## अपः ॥१॥४॥८८॥

अपः स्वरस्य शेषे तु, घुटि भवति दीर्घता ॥
आपः स्त्रीभूम्नि तोये स्यात्, स्वाप् सरोजाञ्चितं सरः ॥८८॥

## नि वा ॥१॥४॥८९॥

अपः स्वरस्य दीर्घो वा, नागमे सति घुट्परे ॥
सरांसि स्वाम्पि चेत् स्नानं, स्वम्पि वा स्वस्थताप्रदम् ॥८९

## अभ्वादेरत्वसः सौ ॥१॥४॥९०॥

अत्वन्तासन्तयोर्भ्वादि-वर्जितस्य स्वरस्य वै ॥

---

शेष इत्येव, हे राजन्? ॥८५॥ महतः-महच्छब्दस्येति ॥८६॥ वृत्रहाप्रमुखोदाहरणान्यूह्यानि ॥८७॥ स्त्रीभूम्नि-स्त्रीलिङ्गे बहुवचने इति। सरोजाञ्चितं सरः स्वाप् इति ॥८८॥ स्वाम्पि-स्वम्पि-शोभनजल-समन्वितानि ॥८९॥ चन्द्रमा इव भवान् भाति इत्यन्वयः ॥९०॥ क्रोष्टा-

दीर्घो भवति शेषे सौ, भवान् भातीव चन्द्रमाः ॥९०॥

**क्रुशस्तुनस्तृच् पुंसि ॥१॥४॥९१॥**

क्रुशः परं तुनः शेषे, घुटि तृच् पुंसि जायते ॥
क्रोष्टा पशोः कुले धूर्तो, नराणामिव नापितः ॥९१॥

**टादौ स्वरे वा ॥१॥४॥९२॥**

क्रुशः परं तुनष्टादौ, स्वरादौ तृज् विभाषया ॥
पुंसि क्रोष्ट्रा समुद्योगात्, कूपे सिंहो निपातितः ॥९२॥

**स्त्रियाम् ॥१॥४॥९३॥**

स्त्रीत्वेऽर्थे वर्तमानस्य, निर्निमित्तं क्रुशः परम् ॥
तृजादेशस्तुनः क्रोष्ट्री, क्रोष्टोरपि खलायते ॥९३॥

इति चतुर्थः पादः ॥ प्रथमोऽध्यायः ॥

---

शृगालः ॥९१॥ क्रोष्ट्रा—शृगालेन समुद्योगात् सिंहः कूपे निपातित इति प्रसिद्धेयं कथा ॥९२॥ क्रोष्ट्री—शृगाली । क्रोष्टोः इति पूर्वसूत्रस्य वैकल्पिकमुदाहरणं ज्ञेयम् ॥९३॥

॥ चतुर्थः पादः समाप्तः ॥

॥ प्रथमोऽध्यायः समाप्तः ॥

# अथ द्वितीयोऽध्यायः ॥

## । प्रथमः पादः ।

### त्रिचतुरस्तिसृचतसृ स्यादौ ॥२॥१॥१॥

स्वान्यसम्बन्धिनि स्यादौ, क्रमात् त्रिचतुरोः स्त्रियाम् ॥
तिसृचतसृ इत्येतौ, चतस्रः श्रुतयो मताः ॥ १ ॥

### ऋतो रः स्वरेऽनि ॥२॥१॥२॥

ऋतस्तिसृचतस्रोः स्या-न्नकाराविषये स्वरे ॥
स्यादौ स्वेतरयोरत्वं राज्ञस्तिस्रो हि शक्तयः ॥ २ ॥

### जराया जरस् वा ॥२॥१॥३॥

स्वान्यसम्बन्धिनि स्यादौ, स्वरादौ परतो नवा ॥
जराया जरसादेशो, जरसा हीयते रतिः ॥ ३ ॥

### अपोऽद्भे ॥२॥१॥४॥

अपः स्यादौ भकारादौ, स्वान्यसम्बन्धिनि ध्रुवम् ॥
अदादेशः सदा स्वद्भिः, सरोभी राजते पुरम् ॥२॥१॥४॥

---

श्रुतयः—वेदाः, ऋग्यजुःसामाथर्वणभेदाः ॥१॥ नकाराविषये—नविषयादन्यत्रेति । 'शक्तयस्तिस्रः, प्रभुत्वोत्साहमन्त्रजाः' (३-३९९) इत्यभिधानचिन्तामण्युक्ताः शक्तयः ॥२॥ स्वरादौ परतः—परे इत्यर्थः सार्वविभक्तिकस्तस् । जरयेत्यादि वैकल्पिकं बोध्यम् ॥३॥ भ इति—अप्सु ॥४॥

## आ रायो व्यञ्जने ॥२॥१॥५॥

व्यञ्जनादौ परे स्यादौ, सम्बन्धिनि निजान्ययोः ॥
रैशब्दस्य भवेदात्त्व-मन्ते रा राति योग्यताम् ॥५॥

## युष्मदस्मदोः ॥२॥१॥६॥

युष्मदोऽस्मद इत्यस्य, चाकारान्तो भवेत् किल ॥
व्यञ्जनादौ परे स्यादौ, त्वां मां च शिवमाप्नुयात् ॥६॥

## टाङ्योसि यः ॥२॥१॥७॥

स्वसम्बन्ध्यन्यसम्बन्धि-स्यादिषु युष्मदस्मदोः ॥
टाङिओस्सु भवेद् योऽन्त-स्त्वयाऽध्येयं मया श्रुतम् ॥७॥

## शेषे लुक् ॥२॥१॥८॥

आत्त्वयत्वनिमित्तान्य-स्यादौ स्याद् युष्मदस्मदोः ॥
अन्त्यस्य लुग् नु युष्मभ्यं, शमस्मभ्यं च रोचते ॥८॥

## मोर्वा ॥२॥१॥९॥

शेषे स्यादौ परे मो लुक्, स्यान्मन्तयुष्मदस्मदोः ॥
वाऽस्मभ्यं शतमस्मभ्यं, धारयति स निष्ककान् ॥९॥

---

राः—धनं योग्यतां राति—ददातीति ॥५॥ षष्ठ्या निर्देशोऽन्त्यस्य कार्यमिति दकारस्य आकारादेशः । शिवं कर्तृ, त्वां मां कर्म ॥६॥ टाङिओस्सु—इत्यत्र सन्धिकरणं सञ्ज्ञातिरस्कारार्थम् । त्वया—मया च श्रुतम् अध्येयमिति ॥७॥ नुः—पादपूरणार्थः । युष्मभ्यम् अस्मभ्यं च शं रोचते इति ॥८॥ युष्माद्, युष्मान् वा । अस्मान्, अस्मान् वा आचक्षाणेभ्यो णिचि क्विपि लुकि च—युष्मभ्यम्, युष्मभ्यम् अस्मभ्यम्, अस्मभ्यमिति ॥९॥

## मन्तस्य युवाऽऽवौ द्वयोः ॥२॥१॥१०॥

युवावौ स्तो द्वयोरर्थे, मन्तस्य युष्मदस्मदोः ॥
स्वान्यस्यादौ यथासङ्ख्यं, युवामावां प्रबोधतम् ॥१०॥

## त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥२॥१॥११॥

एकत्वे प्रत्यये स्यादौ, मान्तस्य युष्मदस्मदोः ॥
पदोत्तरे यथासङ्ख्यं, त्वमौ त्वां मां स रक्षतु ॥११॥

## त्वमहं सिना प्राक् चाकः ॥२॥१॥१२॥

स्वान्यसम्बन्धिना सार्धं, सिना स्तो युष्मदस्मदोः ॥
त्वमहञ्च यथासङ्ख्यं, प्रागकोऽहं स्तुवे जिनम् ॥१२॥

## यूयं वयं जसा ॥२॥१॥१३॥

जसा सह क्रमाद् यूयं, वयं च युष्मदस्मदोः ॥
अकः प्राक् चाऽधुना जातं, यूयं यूयं वयं वयम् ॥१३॥

## तुभ्यं मह्यं ङया ॥२॥१॥१४॥

तुभ्यं मह्यं ङया साकं, क्रमात् स्तो युष्मदस्मदोः ॥
तुभ्यं नमो जिनेन्द्राय, मह्यं देहि सुखं विभो ॥१४॥

## तव मम ङसा ॥२॥१॥१५॥

तवममौ ङसा साकं, क्रमशो युष्मदस्मदोः ॥

---

अतियुवामित्यादि बोध्यम् ॥१०॥ त्वदीयः, मदीय इत्याद्युन्नेयम् ॥११॥ प्राक् चाक इति त्वकम्, अहकमिति ॥१२॥ यूयं वयं वयं यूय-मित्यासीदावयोः पुरा ॥ अधुना किमु सञ्जातं, यूयं यूयं वयं वयम् ॥१॥ इति श्लोक-घटकमुदाहरणम् ॥१३॥ तुभ्यकं मह्यकमित्याद्यर्थं प्राक् चाक इत्यनुवर्त-नीयम् ॥१४॥ स्वं-धनमित्यर्थः । अत्रापि 'प्राक् चाक' इत्यस्य-

तव स्वं मत्कृते भूयात, मम स्वं त्वत्कृते क्वचित् ॥१५॥

## अमौ मः ॥२॥१॥१६॥

मादेशो युष्मदस्मद्भ्याम्, अम्-औ इत्येतयोर्भवेत् ॥
त्वां च मां नीतवान् धर्मं, तेनावां खलु धार्मिकौ ॥१६॥

## शसो नः ॥२॥१॥१७॥

शसो हि युष्मदस्मद्भ्यां, नादेशो जायते यतः ॥
युष्मान् ब्रूमो वयं सत्यं, यूयं सद् वदतास्मकान् ॥ १७ ॥

## अभ्यं भ्यसः ॥२॥१॥१८॥

तुर्याबहोर्भ्यसोऽभ्यं स्या-द्युष्मदस्मत्परस्य तत् ॥
युष्मभ्यं दीयतेऽस्मभ्यं, शं जिनेन नमोऽर्हते ॥१८॥

## ङसेश्चाद् ॥२॥१॥१९॥

युष्मदस्मत्परस्य स्यात्, पञ्चम्याश्च भ्यसो ङसेः ॥
अदादेशो वियुक्तास्त्वद्, मत्तस्ते युष्मदस्मदाः ॥१९॥

## आम आकम् ॥२॥२॥२०॥

युष्मदस्मत्परस्यामः, स्थाने आकं भवेद् ध्रुवम् ॥

---

सुवृत्तिः ॥१५॥ युष्मदस्मद्भ्यां परयोः अम्-औ इत्येतयोर्मादेशो भवेदित्यन्वयः । स त्वां मां च धर्मं प्रति नीतवान् तेन आवां धार्मिकौ खलु सञ्जाताविति ॥१६॥ युष्मदस्मद्भ्यां परस्य शसो नादेशो जायते इति ॥१७॥ युष्मदस्मत्परस्य तुर्याबहोः-चतुर्थीबहुवचनस्य भ्यसः 'अभ्यम्' इत्यादेशः स्यादिति । जिनेन युष्मभ्यम् अस्मभ्यं च शं-कल्याणं दीयते इति अर्हते नमः ॥१८॥ आः-इति खेदे त्वद्-त्वत्तः, मत्तः, युष्मद्-युष्मत्तः, अस्मद्-अस्मत्तः ते वियुक्ताः-वियोगं प्राप्ताः ॥१९॥ हे अर्हन् युष्माकं ?

युष्माकं वैरिणो येऽर्हे-न्नस्माकं ते हि वैरिणः ॥२०॥

**पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे ॥२॥१॥२१॥**

बहुत्वे युग्विभक्त्यैक-वाक्ये चेद् युष्मदस्मदोः ॥
पदाद्वा वस्नसौ स्यातां, धर्मो वो नोऽस्तु कामधुक् ॥२१॥

**द्वित्वे वाम्नौ ॥२॥१॥२२॥**

द्वित्वेऽर्थे युग्विभक्त्यै-कवाक्ये वा युष्मदस्मदोः ॥
पदाद्वाम्नौ यथासङ्ख्यं, धर्मो वां नौ च रक्षतु ॥२२॥

**ङेङसा ते मे ॥२॥१॥२३॥**

एकवाक्ये पदादूर्ध्वं, ङेङसा युष्मदस्मदोः ॥
ते मे वा स्तः स शं ते मे, दद्यात् शं तेन तेऽस्तु मे ॥२३॥

**अमा त्वा मा ॥२॥१॥२४॥**

पदात्परं द्वितीयैक-वचसा युष्मदस्मदोः ॥
त्वा मा वा क्रमशस्त्वा मा, धर्मो रक्षति रक्षितः ॥२४॥

**असदिवामन्त्र्यं पूर्वम् ॥२॥१॥२५॥**

स्यात् प्रागसदिवामन्त्र्यं, ताभ्यां न स्यात्तथासति ॥
पूर्वोक्तं तेन भो साधो-ऽस्मभ्यं शर्म प्रदीयताम् ॥२५॥

---

ये मोहादयो वैरिणः, ते हि-निश्चयेनास्माकं वैरिणः इति ॥२०॥ धर्मः वः-नः युष्मान् अस्मान् प्रति, युष्मभ्यम् अस्मभ्यं, युष्माकम् अस्माकञ्च कामधुक् अस्तु इति, द्वितीयाचतुर्थीषष्ठीबहुत्वेऽनुसन्धेयमर्थतः ॥२२॥ ते-मे, तुभ्यं, मह्यम् । ते-मे, तव-मम ॥२३॥ त्वा-मा, त्वां माम् ॥२४॥ ताभ्यां-युष्मदस्मद्भ्यां प्राक्-पूर्वम्, आमन्त्र्यम् असदिव स्यात्, तथासति पूर्वोक्तं वस्नसादि न स्यादित्यर्थः ॥२५॥

## जस्विशेष्यं वाऽऽमन्त्र्ये ॥२॥१॥२६॥

ताभ्यां पूर्वं जसन्तं त-द्विशेष्यं हि विशेषणे ॥
आमन्त्र्येऽसदिव स्याद्वा, जिना? धीरा व आश्रये ॥२६॥

## नान्यत् ॥२॥१॥२७॥

ताभ्यां पूर्वं जसन्तान्य-त्तदामन्त्र्यं विशेष्यकम् ॥
नैव विशेषणेऽसद्वत्, साधो ? सन् ? त्वा नमाम्यहम् ॥२७॥

## पादाद्योः ॥२॥१॥२८॥

पदात् परं यदुक्तं तत्, पादादौ वस्नसादि न ॥
वीरो विश्वेश्वरो देवो, युष्माकं कुलदेवता ॥२८॥

## चाहहवैवयोगे ॥२॥१॥२९॥

चादिपञ्चकयोगे हि, वस्नसादि न जायते ॥
आत्मनीनः सदाराध्यो, धर्मस्त्वां मां च रक्षतु ॥२९॥

## दृश्यर्थैश्चिन्तायाम् ॥२॥१॥३०॥

चिन्तार्थकैर्हि दृश्यर्थै-र्धातुभिर्युष्मदस्मदोः ॥
वस्नसादि न जायेत, मनसा त्वां स पश्यति ॥३०॥

---

'व' इति वैकल्पिकमुदाहरणम्, पक्षे 'युष्मान्' इति ॥२६॥ साधो ? सन् ? अत्र जसन्तादन्यदामन्त्र्यं विशेष्यमिति ॥२७॥ नियत-परिमाणमात्राक्षरपिण्डः पादः। अपवादसूत्रमिदम्। वीर इति-वीरो विश्वेश्वरो देवो, युष्माकं कुलदेवता। स एव नाथो भगवा-नस्माकं पापनाशनः ॥ इति पूर्णः श्लोकः ॥२८॥ ज्ञानञ्च शीलञ्च ते स्वमित्यादाविव चादेः पृथग्योगे, वस्नसादि स्यात् ॥२९॥ प्रकृते 'पश्यति' इत्यस्य चिन्तयतीत्यर्थः ॥३०॥

## नित्यमन्वादेशे ॥२॥१॥३१॥

किञ्चिदुक्त्वा वचस्तस्या-न्यदन्वादेश उच्यते ॥
वस्नसादि ध्रुवं तस्मिन्, त्वं सँस्तत्ते नमो नमः ॥३१॥

## सपूर्वात् प्रथमान्ताद्वा ॥२॥१॥३२॥

सपूर्वात् प्रथमान्ताद्वा-ऽन्वादेशे वस्नसादयः ॥
त्वमसि सद्विनीतस्तद्, गुरुर्ज्ञानं ददाति ते ॥ ३२ ॥

## त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते ॥२॥१॥३३॥

त्यदादेरेतदस्त्वन्वा-देश एनदिति ध्रुवम् ॥
द्वितीयाटौस्यवृत्त्यन्ते-ऽस्त्येतदेनद् गृहाण भोः ॥३३॥

## इदमः ॥२॥१॥३४॥

पूर्ववदिदमश्चान्वा-देशे एनदितीष्यते ॥
उद्दिष्टोऽयं पुराऽध्यायो-ऽधुनैनं विवृणोतु सन् ॥३४॥

## अद्व्यञ्जने ॥२॥१॥३५॥

अत् स्यादौ व्यञ्जनादौ स्या-दन्वादेशे इदं खलु ॥
इमकाभ्यामधीतं स-दथो आभ्यामधीयते ॥३५॥

---

किञ्चिद्विधातुं कथितस्य पुनरन्यद्विधातुं कथनमन्वादेशः । अत्र न विकल्पः तेन ‘त्वं सन् तत् तुभ्यं नमो नमः इति न स्यात् ॥३१॥ विद्यमानपूर्वपदात् प्रथमान्तात् पदात् परयोर्युष्मदस्मदोरन्वादेशे वस्नसादिर्वा स्यादित्यर्थः ॥३२॥ त्यदामिति किम् ? संज्ञायामेतदं नय अथो एतदमध्यापय । अथो परमैतं पश्येत्यादौ वृत्यन्तत्वादेनदभावः ॥३३॥ पूर्ववदिति त्यदां, द्वितीयाटौसिपरे, अवृत्यन्ते इत्यनुसन्धेयम् ॥३४॥ उत्तरत्र ‘ अनग् ’ इति वक्ष्यमाणादिह साक एव विधिः ॥३५॥

## अनक् ॥२॥१॥३६॥

इदमद् व्यञ्जनादौ स्यात्, स्यादौ परेऽगूविवर्जितः ।
इदमेभिः कृतं तस्मा-देभ्यो दानं प्रदीयताम् ॥३६॥

## टौस्यनः ॥२॥१॥३७॥

टायामोसि परेऽनः स्या-दिदमस्तत्र चाग्युजः ॥
अनयोक्तः श्रुतोऽनेना-नयोः पाठः स्थिरोऽभवत् ॥३७॥

## अयमियं पुंस्त्रियोः सौ ॥२॥१॥३८॥

पुंसि स्त्रियां परे सौ स्या-दिदमोऽयं क्रमादियम् ॥
अयं नेयं च नारी त-दियं भ्राता स्वसा त्वियम् ॥३८॥

## दो मः स्यादौ ॥२॥१॥३९॥

इदमो दस्य मः स्यादौ, त्यदादेः खलु जायते ॥
इमौ शास्त्रं पठेतां चे-दिमौ ब्रूमो हि पण्डितौ ॥३९॥

## किमः कस्तसादौ च ॥२॥१॥४०॥

क आदेशः किमः स्यादौ, तसादौ च परे भवेत् ॥
को धर्मो ? यो दयामूलः, के धीरा ? ये स्त्र्यवञ्चिताः ॥४०॥

## आद्वेरः ॥२॥१॥४१॥

द्व्यन्तानां हि त्यदादीना-मन्तस्य त्वद् विधीयते ॥

---

अनगिति किम् ? इमकाभ्याम् ॥३६॥ अगूवर्जनात्-इमकेन ॥३७॥ क्रमादिति-पुंसि-अयम्, स्त्रियाम्-इयमिति । अयं ना, इयं च नारीतिविश्लेपः ॥३८॥ प्रियेदमावित्यादौ त्यदादित्वाभावान्मत्त्वाभावः ॥३९॥ कदा-कर्हि-प्रमुखं तसाद्युदाहरणमुन्नेयम् ॥४०॥ त्यदादीनां द्विपर्यन्तानां हि अन्त्यस्य

स्वे स्यादौ च तसादौ च, तौ द्वौ परमधार्मिकौ ॥४१॥

## तः सौ सः ॥२॥१॥४२॥

द्विपर्यन्तत्यदादीनां, स्यादिसम्बन्धिसौ परे ॥
तकारस्य सकारस्स्यात्, स एष गतवान् शिवम् ॥४२॥

## अदसो दः सेस्तु डौ ॥२॥१॥४३॥

त्यदादेः सौ परे दस्या–दसः सः सेस्तु डौः स्मृतः ॥
शान्तिप्रियो महात्माऽसौ, सदा शान्ति समीहते ॥४३॥

## असुको वाकि ॥२॥१॥४४॥

त्यदादेरदसः साको, दस्य सः सादतश्च उत् ॥
डौत्वाभावश्च सेर्वा स्यात्, गतोऽसुकोऽसकौ ? पुरम् ॥४४॥

## मोऽवर्णस्य ॥२॥१॥४५॥

त्यदादेरदसोऽवर्णा–न्तस्य दस्य तु मो भवेत् ॥
अमू वीरावमी दीना, यतोऽमी संसृतिं श्रिताः ॥४५॥

## वाऽद्रौ ॥२॥१॥४६॥

अद्रावन्तेऽदसोदस्य, संभवेन्मो विभाषया ॥
अमुमुयङदद्र्यङ्को–ऽदमुयङ्कोऽमुमश्चति ॥४६॥

---

तु अद्–अः विधीयत इति स्पष्टम् । ततः तदेत्यादि तसाद्युदाहरणम् ॥४१॥ त्यदामित्येव, प्रियतद् ॥४२॥ अदसो दस्य त्यदादेः सौ परे सः स्यादित्यर्थः ॥४३॥ त्यदादेः साकः–अक्सहितस्य, अदसो दस्य सः, सात्–सकारात् परस्य अतश्च उत्–उकारः, तथा सति सेः डौर्न, सर्वमेतद्वा-विकल्पेनेत्यर्थः ॥४४॥ अवर्णस्येति किम् ? अदः कुलम् ॥४५॥ अमुद्र्यङित्यपि ॥४६॥

## मादुवर्णोऽनु ॥२॥१॥४७॥

अदसो मात्परस्य स्या-द्वर्णमात्रस्य सर्वतः ॥
पश्चादुवर्ण आदेशो, वन्देऽमुं जिनभास्करम् ॥४७॥

## प्रागिनात् ॥२॥१॥४८॥

अदसो मादुवर्णः स्या-द्वर्णमात्रस्य प्रागिनात् ॥
अमुना कृतिना कार्यं, सत्कार्यं स्वात्ममुक्तये ॥४८॥

## बहुष्वेरीः ॥२॥१॥४९॥

स्याद् बहुष्वदसो मात्तु, परैकारस्य नूलमीः ॥
अमी बाला अमीषां त-दमीभ्यः स ददाति तान् ॥४९॥

## धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ॥२॥१॥५०॥

इवर्णोवर्णयोर्धातोः, स्वरादौ प्रत्यये परे ॥
इयुवौ स्तो यथाह्वयं, नेतारः श्रेयसां नियः ॥५०॥

## इणः ॥२॥१॥५१॥

स्यादिण्धातोरियादेशः, स्वरादौ प्रत्यये परे ॥
पान्थाः स्वनगरीमीयु-स्तस्माद् यन्तु पथाऽमुना ॥५१॥

## संयोगात् ॥२॥१॥५२॥

इवर्णोवर्णयोर्धातोः, संयोगात् प्रत्यये स्वरे ॥

---

उवर्णादेशकरणाद् ह्रस्वस्थाने ह्रस्वः, दीर्घस्थाने च दीर्घ आदेशः ॥४७॥ निजात्ममुक्त्यर्थममुना कृतिना-पण्डितेन सत्कार्यं कार्यं-करणीयमिति । इनादिति किम् ? अमुया ॥४८॥ एरिति किम् ? अमूः स्त्रियः ॥४९॥ श्रेयसां नियः-नायकाः नेतारः ॥५०॥ अमुना पथा-मार्गेण पान्थाः स्वनगरीमीयुः-गताः तस्मादनेन पथा श्रीमन्तोऽपि यन्तु इति ॥५१॥ सश्रियं जनं जना

भवेतामियुवौ कामं, शिश्रियुः सश्रियं जनम् ॥५२॥

### भ्रूश्नोः ॥२॥१॥५३॥

स्वरादौ प्रत्यये भ्रूश्नोः, संयोगादुव्विधीयते ॥
आप्नुवन्ति हि ते श्वभ्रं, भ्रान्ता ये सुभ्रुवा भ्रुवा ॥५३॥

### स्त्रियाः ॥२॥१॥५४॥

स्त्रीवर्णस्य त्वियादेशः, स्वरादौ प्रत्यये परे ॥
संसारे चेत् स्त्रियो नस्यु-रीयुः सर्वेऽपि श्रेयसम् ॥५४॥

### वाम्शसि ॥२॥१॥५५॥

इयादेशः स्त्रियो वा स्या-दिवर्णस्यामि वै शसि ॥
स्त्रियं त्यज त्यजेत् स्त्रीं यत्, समीहन्ते स्त्रियः स्त्रियः ॥५५॥

### योऽनेकस्वरस्य ॥२॥१॥५६॥

अनेकस्वरधातोरि-वर्णस्य यः प्रजायते ॥
स्वरादौ प्रत्यये निन्यु-र्मोक्षं शश्वज्जिना जनान् ॥५६॥

### स्यादौ वः ॥२॥१॥५७॥

अनेकस्वरधातोरु-वर्णस्य वो भवेत् परे ॥
स्वरादौ प्रत्यये स्यादौ, वस्वौ हि वसुमिच्छतः ॥५७॥

---

शिश्रियुः ॥ ५२ ॥ सुभ्रुवां-स्त्रीणां भ्रुवा ये भ्रान्तास्ते हि-नूनं श्वभ्रं-नरकम् आप्नुवन्ति ॥५३॥ स्त्रिया इवर्णस्य-स्त्रीवर्णस्य, तु इयादेशः ॥५४॥ स्त्रीवाचरन्तीति स्त्रियः कर्तृपदम् ॥५५॥ जिना जनान् शश्वद् मोक्षं निन्युः ॥५६॥ स्यादाविति किम्? लुलुवुः ॥५७॥

## क्विब्वृत्तेरसुधियस्तौ ॥२॥१॥५८॥

सुधीवर्जितक्विब्वृत्ते-रिवर्णावर्णयोर्यवौ ॥
स्वरादौ प्रत्यये स्यादा-वुन्न्यः समीयुरुन्नतिम् ॥५८॥

## दृन्पुनर्वर्षाकारैर्भुवः ॥२॥१॥५९॥

क्विब्वृतेर्दृन्पुनर्वर्षा-कारैस्सह भुवश्च वः ॥
स्वरादौ प्रत्यये स्यादौ, पुनर्भ्वो न पतिव्रताः ॥५९॥

## णषमसत् परे स्यादिविधौ च ॥२॥१॥६०॥

इतः सूत्रात् समारभ्य, कार्यं यद्धि विधास्यते ॥
तस्मिन् स्यादिविधौ चासन्, णत्वं षत्वं च जायते ॥६०॥

## क्तादेशोऽषि ॥२॥१॥६१॥

क्तस्यादेशः षभिन्ने चेत्, कार्ये स्यादिविधौ तथा ॥
कर्तव्येऽसन् स विज्ञेयः । क्षामिमानेनसः सुखी ॥६१॥

## षढोः कः सि ॥२॥१॥६२॥

षस्य ढस्य सकारे हि, ककारः क्रियते बुधैः ॥
मुनिं काञ्चनवर्णाभ-मद्राक्षं गहने वने ॥६२॥

## भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने ॥२॥१॥६३॥

दीर्घः स्यान्नामिनो भ्वादे-स्तस्य रेफवकारयोः ॥

---

सुधीवर्जनात्-सुधिय इति॥५८॥ दृनादिभिरिति किम्-प्रतिभुवः॥५९॥ अधिकारसूत्रमिदम्, 'असत् परे' इत्यधिकारो 'रात्सः' । २।१।९०। इति यावत्, 'स्यादिविधौ चेतितु' नोर्म्यादिभ्यः । २ । १ । ०१ । इति ॥६०॥ एनसः-पापस्य ॥६१॥ लेक्ष्यतीत्यत्र ढस्य कः ॥६२॥ कुर्कुरीयति, दिव्यति इत्यादौ नामधातुत्वाद् भ्वादित्वाभावाद् दीर्घाभावः, मूर्च्छितः, भुवि-पृथिवीतले दीव्यति

व्यञ्जनं स्यात्तदूर्ध्वं चेत्, मूर्च्छितो भुवि दीव्यति ॥६३॥

## पदान्ते ॥२॥१॥६४॥

पदान्तस्थादिसत्के रे, वकारे च परे भवेत् ॥
तस्यैव नामिनो दीर्घ, आशीर्वादोऽपि मङ्गलम् ॥६४॥

## न यि तद्धिते ॥२॥१॥६५॥

न दीर्घो नामिनोर्वोः स्या-द्यकारादौ तु तद्धिते ॥
धुरं वहति धर्मस्य, धुर्य्यो धर्मधुरन्धरः ॥६५॥

## कुरुच्छुरः ॥२॥१॥६६॥

रेफे परे न दीर्घः स्या-न्नामिनश्चेत् कुरुच्छुरोः ॥
कुर्याद्धर्मं यथाशक्ति, छुर्याच्च भवबन्धनम् ॥६६॥

## मो नो म्वोश्च ॥२॥१॥६७॥

पदान्ते स्यादिमान्तस्य, म्वोः परे चान्तिमस्य हि ॥
नोऽन्तः स्यात् श्लाघनीयोऽसौ, नूत्नेऽपि वयसि प्रशान् ॥६७॥

## स्रंस्ध्वंस्क्वस्सनडुहो दः ॥२॥१॥६८॥

सकारान्तक्वसन्तस्य, स्रंस्ध्वंसनडुहां तथा ॥
अन्त्यस्य शब्दविद्वद्भिः, पदान्ते दो विधीयते ॥६८॥

---

पततीतिभावः ॥६३॥ पदान्त इति किम् ?–गिरः ॥६४॥ यो धर्मस्य धुरं वहति स धुर्य्यः धर्मधुरन्धरः ॥६५॥ कुर्विंत्युकारः कुरत् शब्दे–कूर्यादित्यतो व्यावृत्त्यर्थः। छुर्यादिति ' छुरत्–छेदने ' इति तुदादिधातोः ॥६६॥ नूत्ने–नवीने यौवने वयस्यपि असौ प्रशान् ततः श्लाघनीय इति ॥६७॥ क्वस्सिति द्विसकारपाठादिह माभूत् 'विद्वान् " ॥६८॥

## ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः ॥२॥१॥६९॥

स्रज्दधृषुष्णिहश्चैव, ऋत्विजो दिश्दृशोः स्पृशः ॥
गोऽन्तादेशः पदान्ते स्यात्, सुदृक् राजा विराजते ॥६९॥

## नशो वा ॥२॥१॥७०॥

पदान्ते गोऽन्त आदेशो, नश्धातोर्जायते नवा ॥
जीवनग् जीवनड् ज्ञेयो, यस्मै धर्मो न रोचते ॥७०॥

## युजञ्चक्रुञ्चो नो ङः ॥२॥१॥७१॥

युजादीनां नकारस्य, पदान्ते ङः प्रजायते ॥
युङ् चेन्मिलितः प्राङ्भ्यां, क्रुङ्क्षु कोलाहलो भवेत् ॥७१॥

## सो रुः ॥२॥१॥७२॥

पदान्ते वर्तमानस्य, सकारस्य रुरुच्यते ॥
आशीर्नमःपदे वस्तु-निर्देशो मङ्गलं त्रिधा ॥७२॥

## सजुषः ॥२॥१॥७३॥

स्यात् सजुषो रुरादेशः, पदान्ते शब्दलक्षणे ॥
सजूर्भ्यां दम्पतीभ्यां तौ, सजुषौ जनितौ सुतौ ॥७३॥

---

सूत्रक्रमोल्लङ्घनं वृत्तौ वृत्तमनुसृत्यावसेयम् ॥६९॥ यस्मै धर्मो न रोचते स जीवनग्–जीवनड्-नष्टजीवो ज्ञेय इति ॥७०॥ प्राङ्भ्यां–प्राचीनपण्डिताभ्यां–युङ् योजकः समुचितस्थलनियोजकः चेद् यदि मिलितस्तदा क्रुङ्क्षु–तत्स्थलनियतेषु क्रौंचसमानसाधारणपण्डितेषु कोलाहलो भवेदिति स्पष्टोऽर्थः ॥७१॥ आशीः, नमः, निर्देशः, इत्युदाहरणत्रयम् ॥७२॥ सजूर्भ्यां प्रीतियुक्ताभ्यां सेवासमन्विताभ्यां वा दम्पतीभ्यां–जायापतीभ्यां तौ–प्रसिद्धौ सजुषौ–सेवापरायणौ स्नेहलौ सुतौ जनितौ ॥ सजुषौ प्रत्युदाहरणम् ॥७३॥

## अह्नः ॥२॥१॥७४॥

पदान्तेऽह्नो भवेद् सः सो-ऽसँश्च स्यादिविधौ परे ॥
अयि निदाघ ! दीर्घाह-स्तेऽहस्सु तप्यते जनैः ॥७४॥

## रो लुप्यरि ॥२॥१॥७५॥

पदान्तेऽह्नश्च रोऽन्तः स्या-ल्लुप्यरेफे परे सदा ॥
नाहर्भुङ्क्ते तपस्वी य-दहोरात्रं तपस्यति ॥७५॥

## धुटस्तृतीयः ॥२॥१॥७६॥

पदान्ते वर्तमानानां, तृतीयः स्याद् धुटां स्वकः ॥
वागीश्वरी सदा वाग्भि-र्जगज्जाड्यमपाकरोत् ॥७६॥

## गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये ॥७७॥

गडदबादि तुर्यान्तै-कस्वरस्य चतुर्थकः ॥

---

अत्र ' णषमसत्परे- ' । २। १ ।६० । इत्यतोऽसत्परे स्यादिविधौ चेति अनुवर्तते तेन दीर्घाहा निदाघः इत्यपि स्यात् । अयि दीर्घाहो निदाघ ? ते अहस्सु जनैस्तप्यत इत्यन्वयः ॥७४॥ लुपि सत्यां पदान्तेऽहन्शब्दस्य रः अन्तादेशो भवति, अरेफे परे-रेफपरे तु न भवतीत्यर्थः । पूर्वसूत्रापवादक-मिदं सूत्रम् । तपस्वी सदा अहर्न भुङ्क्ते, यत् सोऽहोरात्रं तपस्यति, अह-रित्यत्र व्याप्तौ द्वितीया । अत्रानेन रत्वाभावे पूर्वेण रुत्वे सति अहोभुङ्क्ते इति रेफनिषेधाभावे अहरात्रामित्याद्यनिष्टमापद्येत ॥७५॥ स्वकः-यद्वर्गीयो धुट् तद्वर्गीय इत्यर्थः ॥७६॥ गडदबादीति-गडदबादेः, तुर्यान्तस्य चतुर्थान्तस्य एकस्वरस्येत्यर्थः, धातोरित्यस्य विशेषणम्, कर्मधारयः समासः । चतुर्थकः-

धातोरादेः पदान्ते स्यात्, सादौ ध्वादौ च प्रत्यये ॥७७॥

## धागस्तथोश्च ॥२॥१॥७८॥

तुर्यान्तस्य दधातेः स्या-दादिदस्य तथोः परे ॥
सादौ ध्वादौ चतुर्थो वै. धत्ते धर्मः सुखे जनान् ॥७८॥

## अधश्चतुर्थात् तथोर्धः ॥२॥१॥७९॥

धाभिन्नधातुसंस्थित्यो-श्चतुर्थात् परयोस्तथोः ॥
भवेद् धकार आदेशो, दोग्धा दोग्धुं हि गामगात् ॥७९॥

## नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः ॥२॥१॥८०॥

रेफनाम्यन्तधातूनां, परोक्षाद्यतन्याशिषाम् ॥
विभक्तीनां धकारस्य, ढः स्यादतोढ्वमम्बुधिम् ॥८०॥

## हान्तस्थाञ्जीड्भ्यां वा ॥२॥१॥८१॥

अन्तस्थातो हकाराच्च, यौ ञिजिटौ ततः परम् ॥
परोक्षादेर्धकारस्य, ढो वाऽग्राहिढ्वमुत्पथात् ॥ ८१ ॥

## हो धुट्-पदान्ते ॥२॥१॥८२॥

हस्य ढत्वं भवेन्नित्यं, पदान्ते धुटि प्रत्यये ॥

---

चतुर्थः । पर्णधुट्, तुण्डिभ्, गर्दभ्, धर्मभुदित्यादि ॥७७॥ तुर्यान्तस्य-चतुर्थान्तस्येत्यर्थः ॥७८॥ दोग्धा-दोहकः, गां-पयस्विनीं धेनुं, दोग्धुम्, अगात्-अगच्छदिति ॥७९॥ अत्रद्वितीयचरणे पञ्चमस्य गुरुतायामपि श्रव्यताया अनुसन्धानेन न क्षतिः ॥८०॥ परोक्षादेरिति-परोक्षाद्यतन्याशिषामित्यर्थः । वैकल्पिकत्वाद् अग्राहिध्वमित्यपि । उत्पथात्-उन्मार्गतः । यूयमिति शेषः ॥८१॥ पद्मिनीसक्तो मधुलिड् भ्रमरः अनीश्वरः-तत आत्मानं मोचयितुमसः-

मधुलिट् पद्मिनीसक्तो, वोढा दुःखमनीश्वरः ॥८२॥

## भ्वादेर्दादेर्घः ॥२॥१॥८३॥

दादेर्भ्वादेर्हकारस्य, धुट्प्रत्ययपदान्तयोः ॥
घादेशो नहि केनापि, दग्धं दारिद्र्यमग्निना ॥८३॥

## मुहद्रुहस्नुहस्निहो वा ॥२॥१॥८४॥

मुहद्रुहस्नुहां तद्वत्, स्निहश्च धुटि प्रत्यये ॥
पदान्ते हस्य घो वा स्यात्, द्रोग्धा द्रोढा समार्थकौ ॥८४॥

## नहाहोर्धतौ ॥२॥१॥८५॥

नहेर्ब्रूस्थानजाताहो, धातोश्च धुटि प्रत्यये ॥
क्रमात् धतौ पदान्ते चो-पानत्कल्पं किमात्थ भोः ॥८५॥

## चजः कगम् ॥२॥१॥८६॥

कगौ स्यातां पदान्ते च, धुडादिप्रत्यये चजोः ॥
वक्ता सत्यं वदेत् सैव, त्यक्ता स्यात् पापमोचकः ॥८६॥

---

मर्थः सन् दुःखं वोढा—सोढेतिभावः ॥८२॥ केनापि अग्निना दारिद्र्यं नहि दग्धमिति । दग्धं खाण्डवमर्जुनेन वलिना, दिव्यैर्द्रुमैः सेवितं, दग्धा वायुसुतेन रावणपुरी, लङ्का पुनः स्वर्णभूः ॥ दग्धः पञ्चशरः पिनाकपतिना, तेनाप्ययुक्तं कृतं, दारिद्र्यं जनतापकारकमिदं, केनापि दग्धं नहि ॥१॥ इति प्रसिद्धसूक्तस्मारकमुदाहरणमिदम् ॥८३॥ समार्थकौ—समानार्थकाविति ॥८४॥ नहेर्ब्रूस्थानापन्नाहश्चधातोर्हो धुट्प्रत्यये पदान्ते च क्रमात् धतौ स्यातामित्यर्थः। भोः ? उपानत्कल्पं—पादत्राणसदृशं तुच्छं किमात्थ—वदसि ॥८५॥ यः वक्ता सत्यं वदेत् स एव पापमोचकः त्यक्ता—त्यागी स्यात् ॥८६॥

## यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः ॥२॥१॥८७॥

चजोः शः षो यजादीनां, पदान्ते धुटि प्रत्यये ॥
देवं यष्टा कलेर्मार्ष्टा, विभ्राट् सम्राट् प्रशस्यते ॥८७॥

## संयोगस्यादौ स्कोर्लुक् ॥२॥१॥८८॥

संयोगस्याद्ययोः स्कोर्लुक्, पदान्ते धुटि प्रत्यये ॥
ध्याने लग्नः प्रभोर्मग्नो, भृज्जति तपसा भृगुः ॥८८॥

## पदस्य ॥२॥१॥८९॥

संयोगस्य पदान्ते लु–गन्तादेशो विधीयते ॥
परे स्यादिविधौ चासन्, कुर्वन् श्रेयः पुमान् महान् ॥८९॥

## रात् सः ॥२॥१॥९०॥

रेफात् परस्य सस्यैव, संयोगस्य लुगिष्यते ॥
चिकीः कलाकलापस्य, कलाचार्यं स सेवताम् ॥९०॥

---

यजादीनामष्टानां धातूनां चकारस्य जकारस्य च षकारः स्यात् पदान्ते धुटि प्रत्यये चेति ॥८७॥ संयोगस्य आद्ययोः—आदिस्थयोः स्कोः–सकारस्य ककारस्य च पदान्ते धुटि प्रत्यये च लुक् स्यात् । प्रभोर्ध्याने लग्नो मग्नो भृगुः तपसा भृज्जति पचत्यात्मानमिति शेषः ॥८८॥ पदान्ते वर्तमानस्य संयोगान्तस्य लुगन्तादेशो विधीयते, स च परे स्यादिविधौ चासन् । श्रेयः कुर्वन् पुमान् महान् इति स्पष्टम् ॥८९॥ संयोगस्येति–पदान्ते वर्तमानस्येत्यनुसन्धेयम् । चिकीः—चिकीर्षतीति क्विपि 'अतः' । ४ । ३ । ८२ । इत्यकारलोपे भवति ॥९०॥

## नाम्नो नोऽनह्नः ॥२।१।९१॥

पदान्ते वर्तमानस्य, नाम्नोऽनह्नो लुगिष्यते ॥
नस्यासन् स विधौ स्यादेः, राजा वाग्मी कचिद्भवेत् ॥९१॥

## नाऽऽमन्त्र्ये ॥२।१।९२॥

आमन्त्र्ये वर्तमानस्य, नाम्नो नस्य न लुग् भवेत् ॥
राजन्! प्रयततामात्म-ज्ञाने वै मुक्तिसाधने ॥९२॥

## क्लीबे वा ॥२।१।९३॥

आमन्त्र्यविषये नाम्नो, नो लुक् क्लीबे विभाषया ॥
ब्रूते दशमुखो ब्रह्मन्!, पाठः सम्प्रत्यसाम्प्रतम् ॥९३॥

## मावर्णान्तोपान्त्यापञ्चमवर्गान्मतोर्मो वः ॥२।१।९४॥

मान्ताच्च तदुपान्ताच्चा-वर्णान्तात्तदुपान्ततः ॥
नाम्नोऽपञ्चमवर्गान्ताद्, मतोर्वो मस्य शंवताम् ॥९४॥

## नाम्नि ॥२।१।९५॥

मतोर्मस्य वकारः स्यात्, संज्ञायां विदुषां मते ॥

---

अहन्वर्जितस्य पदान्त वर्तमानस्य नाम्नो नकारस्य लुक् स्यात्, स चासन् परे स्यादिविधौ चेत्यर्थः ॥९१॥ स्पष्टम् ॥९२॥ पक्षे हे ब्रह्म ? इत्यपि । ब्रह्मन्नध्ययनस्य नैप समयस्तूष्णीं बहिः स्थीयतां, स्वल्पं जल्प बृहस्पते ? जडमते ?, नैपा सभा वज्रिणः ॥ वीणां संहर नारद ? स्तुतिकथा-लापैरलं तुम्बुरो ? सीतारल्लकभल्ल भग्नहृदयः,स्वस्थो न लङ्केश्वरः ॥१॥ श्लोकमेतं स्मारयत्युदारणमिदम् ॥९३॥ तदुपान्तात्-मोपान्तात्, तदुपान्ततः-अवर्णोपान्ततः, अपञ्चमेति-पञ्चमवर्जवर्गान्ततः शमीवान्, वृक्षवान्, मालावान्, अहर्वान्, भास्वान्, मरुत्वान् इत्यवशिष्टान्युदाहरणानि ॥९४॥ अहीवत्याम्-

अहीवत्यां तरङ्गिण्या-महीनां ननु शासनम् ॥९५॥

**चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ॥२॥१॥९६॥**

एते शब्दा मतौ नाम्नि, निपात्यन्ते नु शाब्दिकैः ॥
चक्रीवान् गर्दभो यस्य, कुम्भकारः स भाग्यवान् ॥९६॥

**उदन्वानब्धौ च ॥२॥१॥९७॥**

मतावुदकशब्दस्य, ह्युदन्निति निपात्यते ॥
संज्ञायामुदधौ चैव-मुदन्वन्तं घटं नय ॥९७॥

**राजन्वान् सुराज्ञि ॥२॥१॥९८॥**

भवेत् सुराज्ञि राजन्वान्, मतौ न लोपवारणात् ॥
राजन्वति भवेद् देशे, राजन्वती प्रजाऽवनिः ॥९८॥

**नोम्यादिभ्यः ॥२॥१॥९९॥**

ऊर्म्यादिभ्यः परं मस्य, मतोर्वो नैव जायते ॥
'नाम्नी'ति 'प्रतिषेधोऽयं, हनूमान् सर्वतो बली ॥९९॥

**मासनिशासनस्य शसादौ लुग्वा ॥२॥१॥१००॥**

मासनिशासनानां लुक्, शसादौ स्यादिके नवा ॥
ग्रीष्मे मासि निशि स्वस्थ-मासनि स्थीयते नहि ॥१००॥

---

एतन्नामिकायाम् ॥९५॥ चक्रीवान्-चक्रवद् भ्रमणमस्यास्तीति गर्दभस्याभिधानम्। चर्मण्वती नामनदी, अष्ठीवान् जानुः, कक्षीवान् ऋषिः, रुमण्वान् गिरिः॥९६॥ उदन्वान्-घटः, समुद्रः, ऋषिः, आश्रम इत्येतेषामभिधा ॥९७॥ सुराज्ञि-सुराजके ॥९८॥ परं-परस्य । 'नाम्नि' । २ । १ । ९५ । इति प्राप्ते । बहुवचनमाकृतिगणार्थम् ॥९९॥पक्षे मासे, निशायाम्, आसने, इत्यादि॥१००॥

दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्-हृदसन्यूषन्नुदन्दोषन्यकञ्शकन् वा ॥२॥१॥१०१॥

दन्तपादादिशब्दानां, क्रमाद् दत्पन्नसादयः ॥
नवा स्यादौ शसादौ स्यु-र्दद्भ्यां दन्ती विशिष्यते ॥१०१॥

यस्वरे पादः पदणिक्यघुटि ॥२॥१॥१०२॥

यस्वरे णिक्यघुड्भिन्ने, पादित्येतस्य पद् भवेत् ॥
स्वस्त्यस्तु द्विपदे तस्मै, गाथां यस्त्रिपदीं पठेत् ॥१०२॥

उदच उदीच् ॥२॥१॥१०३॥

यकारादौ स्वरादौ च, णिक्यघुड्वर्जिते परे ॥
उदचः स्यादुदीच् नित्य-मुदीची स्त्री कुलोत्तमा ॥१०३॥

अच्च् प्राग् दीर्घश्च ॥२॥१॥१०४॥

अचश्चो जायते यादौ, स्वरे चाणिक्यघुट्परे ॥
तथाच प्राक्स्वरो दीर्घः, प्राचः श्रीर्वृणुते स्वयम् ॥१०४॥

क्वसुष्मतौ च ॥२॥१॥१०५॥

णिक्यघुड्वर्जिते यादौ, स्वरादौ च मतौ परे ॥
क्वस उष् संभवेद्विश्वं, विदुषा नैव दुष्यते ॥१०५॥

---

पक्षे दन्ताभ्यामित्यादि । दन्ती—हस्ती ॥१०१॥ द्विपदे—नराय । त्रिपदीं—पादत्रयात्मिकाम् ॥१०२॥ उदीची—उत्तरा, उत्तमा वा ॥१०३॥ प्राचः—प्रकर्षभाजः ॥१०४॥ एतदन्तसूत्रचतुष्के णि—क्य—घुड्वर्जनफलं बृहद्वृत्ते-रवसेयम् ॥१०५॥

## श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः ॥२।१।१०६॥

ङीस्याद्यघुट्स्वरे स्याद् उः, श्वनादेर्वस्तु सस्वरः ॥
अहो ! कामस्य दुष्टत्वं, दुःशुनी सेव्यते शुना ॥१०६॥

## लुगातोऽनापः ॥२।१।१०७॥

आभिन्नस्य लुगातः स्याद्, ङीस्याद्यघुट्स्वरे परे ॥
मधुद्राक्षादयोऽत्यन्तं, मिष्टाः कीलालपः कृते ॥१०७॥

## अनोऽस्य ॥२।१।१०८॥

ङीस्याद्यघुट्स्वरे नित्य-मनोऽकारस्य लुग् भवेत् ॥
धृतिबुद्धिर्मतिर्दाक्ष्यं, राज्ञो वै जन्मनो गुणाः ॥१०८॥

## ईङौ वा ॥२।१।१०९॥

अनोऽकारस्य चेकारे, ङौ परे लुग् विभाषया ॥
स्वस्थे राज्ञि महाराज्ञी, स्वस्था भवति राजनि ॥१०९॥

## षादिहन्धृतराज्ञोऽणि ॥२।१।११०॥

षादेरनो धृताद् राज्ञो, हनोऽणि लुग् भवेदतः ॥
ताक्ष्णश्च धार्तराज्ञश्च, भ्रौणघ्नः संभवेन्न किम् ? ॥११०॥

---

यूनः, मघोन इत्यादि । कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो, व्रणी पूयक्लिन्नः कृमिकुलशतैराचिततनुः ॥ क्षुधाक्षामो जीर्णः पिठरककपालावृतगलः, शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥१॥ एतत्स्मारकमुदाहरणमिह ॥१०६॥ कीलालपः–वारिपानकारकस्य ॥१०७॥ ङ्यां–राज्ञी ॥१०८॥ साम्नी सामनी इत्यादि ईप्रत्ययोदाहरणम् ॥१०९॥ ताक्ष्णः–तक्ष्णस्त्वष्टुरपत्यं पुमान्, एवमग्रेऽपि । किं न संभवेत् ? अपि तु भवेदेव, तत्रेदं सूत्रमेव प्रमाणम् ॥११०॥

न व मन्तसंयोगात् ॥२॥१॥१११॥

वान्तान्मान्ताच्च संयोगा-दनो नो लुगतो भवेत् ॥
सत्पर्वणा सुपर्वाणः, सत्कर्माणः सुकर्मणा ॥१११॥

हनो ह्नो घ्नः ॥२॥१॥११२॥

हन्तेर्ह्नं इति रूपस्य घ्नादेशो जायते यतः ॥
भ्रूणघ्नी नरकं याति, घ्नन्ति भ्रूणान् हि दुर्भगाः ॥११२॥

लुगस्यादेत्यपदे ॥२॥१॥११३॥

अपदादावकारे चै-कारे च लुगतो भवेत् ॥
ते नयन्ति कथं कालं, शास्त्रं नैव पठन्ति ये ॥११३॥

डित्यन्त्यस्वरादेः ॥२॥१॥११४॥

अन्त्यस्वरादिभागस्य, लुग् जायेत परे डिति ॥
मुनौ भवति माता स्यात् , स्वसा वा निखिलाः स्त्रियः ॥११४॥

अवर्णादश्नोऽन्तो वातुरीङ्योः ॥२॥१॥११५॥

अन्तोऽवर्णात् परस्यातु-रीङी प्रत्यययोर्नवा ॥
श्नापरस्य न जायेत, तुदन्ती तुदती खरी ॥११५॥

सत्पर्वणेत्यादि-पर्वाधिराजश्रीपर्युषणादिपर्वागमहेतुना देवाः नन्दीश्वरद्वीपगमनाष्टाह्निकामहोत्सवादिकरणेन सत्कर्माणः इति ॥१११॥ दुर्भगाः-दुराचारदोषदूषिता योषितः । अर्थान्तरन्यासोऽत्र ॥११२॥ ये शास्त्रं नैव पठन्ति ते मूढाः कालं-समयं मरणं वा कथं नयन्ति-अपसारयन्तीति । पचे इत्याद्येकारपरोदाहरणम् ॥११३॥ भवति-सतिसप्तमीयं । माता वा स्वसेति विधेयम् ॥११४॥ खरी एतत्समाना भामिनी, तुदन्ती तुदती-द्विरुक्तिव्यर्थताधिक्यसूचिका ॥११५॥

## श्यशवः ॥२॥१॥११६॥

श्यात् शवश्च परस्यातु-रीङ्योरन्तः प्रजायते ॥
दीव्यन्तीयं यदि द्यूतं, चोरयन्ती न संशयः ॥११६॥

## दिव औः सौ ॥२॥१॥११७॥

और्जायते दिवोऽन्तस्य, सौ परे शब्दशासने ॥
यदि प्रिया भवेद् द्यौस्ते, सुकृत कुरु सत्वरम् ॥११७॥

## उः पदान्तेऽनूत् ॥२॥१॥११८॥

दिवोऽन्तस्य पदान्ते स्या-दुस्तस्य न च दीर्घता ॥
च्युतिः पुण्यक्षये द्युभ्यो, भवोऽपि द्युभवेत् सताम् ॥११८॥

॥ इति द्वितीयाध्याये प्रथमः पादः ॥

---

इयं यदि द्यूतं दीव्यन्ती–रममाणा तदा चोरयन्ती, न तत्र संशयः ॥११६॥ द्यौः–देववसतिः, दिव्शब्दस्य स्त्रीत्वम् ॥११७॥ च्युतिरित्यादि–क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यस्य भावः । भवोऽपीति–सतां संसारोऽपि द्युभवेत्–स्वर्गीभवेत् ॥११८॥

॥ इति द्वितीयाऽध्यायेः प्रथमः पादः समाप्तः ॥

## ॥ द्वितीयः पादः ॥

### क्रियाहेतुः कारकम् ॥२।२।१॥

क्रियायाः कारणं शास्त्रे, भवेत् कारकसंज्ञकम् ॥
कर्तृकर्मादिभेदेन, षड्विधं तद्धि जायते ॥१॥

### स्वतन्त्रः कर्ता ॥२।२।२॥

स्वातन्त्र्येण क्रियासिद्धौ, विवक्षा यस्य जायते ॥
सोऽर्थः कारकसंज्ञोऽपि, कर्ता शिष्येण पठ्यते ॥२॥

### कर्तुर्व्याप्यं कर्म ॥२।२।३॥

आप्तुमिष्टतमं कर्तुः, क्रियया कर्मसंज्ञकम् ॥
देवं भज नयात्मानं, मोक्षं प्राप्नुहि सत्सुखम् ॥३॥

### वाऽकर्मणामणिकर्ता णौ ॥२।२।४॥

अकर्मणामणिकर्ता, णौ सति कर्म वा भवेत् ॥
शिष्यः पठति शिष्येण, शिष्यं पाठयते गुरुः ॥४॥

---

कर्ता कर्म च करणं, सम्प्रदानं तथैव च ॥ अपादानाधिकरणे, इत्याहुः कारकाणि षट् ॥१॥ कर्ता–कर्तृसंज्ञः ॥२॥ कर्म त्रिविधम्, निर्वर्त्यं विकार्यं प्राप्यञ्च, कटं करोति, काष्ठं दहति, ग्रामं यातीत्यादि ॥३॥ अकर्मणाम्–अविवक्षितकर्मणां धातूनाम् अणिकर्ता–णिगः प्राग् यः कर्ता स णौ सति कर्म वा भवेत् ॥४॥

**गतिबोधाहारार्थशब्दकर्मनित्याऽकर्मणामनी-
खाद्यदिह्वाशब्दायक्रन्दाम् ॥२॥२॥५॥**

धीगत्यभ्यवहारार्थ-शब्दकर्म-स्वकर्मणाम् ॥
अन्यादीनामणौ कर्ता, णौ सति कर्म जायते ॥५॥

**भक्षेर्हिंसायाम् ॥२॥२॥६॥**

भक्षेर्हिंसार्थकस्याणौ, कर्ता णौ कर्म संभवेत् ॥
भक्षयति बलीवर्दान्, सस्यं मैत्रः पुपोषिपुः ॥६॥

**वहेः प्रवेयः ॥२॥२॥७॥**

अणिक्कर्ता भवेयो णौ, वहेः स्यात् कर्मसंज्ञकः ॥
वाहयति बलीवर्दान्, भारं वाहयिता जनः ॥७॥

**हृक्रोर्नवा ॥२॥२॥८॥**

करोतेर्हरतेश्चाणौ, कर्ता णौ कर्म वा भवेत् ॥
कारयन्ति कटं भृत्यं, भृत्येन स्वामिनो जनाः ॥८॥

---

गत्यर्थबोधार्थाहारार्थानां शब्दकर्मणां नित्याकर्मणाञ्च नीखाद्यदिह्वा शब्दायक्रन्दिवर्जानां धातूनामणिक्कर्ता णौ सति कर्म भवेत् । टीकायां स्वकर्मणामिति सु-अकर्मणामिति-विश्लेषः, सुः-नित्यार्थसूचकः । गमयति चैत्रं ग्रामम्, बोधयति शिष्यं धर्मम्, भोजयति बटुमोदनम्, जल्पयति मैत्रं द्रव्यम्, अध्यापयति बटुं वेदम्, शाययति मैत्रं चैत्रः । न्यादिवर्जनात् नाययति भारं चैत्रेणेत्यादि ॥५॥ सस्यस्य सचेतनत्वेन प्रकृते हिंसार्थकताया न क्षतिः । हिंसार्थकत्वाभावेतु भक्षयति पिण्डीं शिशुना ॥६॥ प्रवेय इति किम्-वाहयति भारं मैत्रेण । अत्र मैत्रस्य पशुवत् प्रवेयत्वं न ॥७॥ विहारयति देशं गुरुं गुरुणा वा, आहारयत्योदनं बालं बालेन वा इति हरतेरुदाहरणतयाऽवसेयम्॥८॥

## दृश्यभिवदोरात्मने ॥२॥२॥९॥

अभिपूर्वकवद्धातोः, पश्यतेश्चात्मनेपदे ॥
अणिकर्ता भवेत् कर्म, णौ वा दर्शयते शिशून् ॥९॥

## नाथः ॥२॥२॥१०॥

व्याप्यं स्यान्नाथतेः कर्म, विषये वाऽऽत्मनेपदे ॥
सर्पिषो नाथते सर्पि–र्घृतस्य कामुको जनः ॥१०॥

## स्मृत्यर्थदयेशः ॥२॥२॥११॥

स्मरणार्थदयेशानां, व्याप्यं वा कर्मसंज्ञकम् ॥
मातुः स्मरति बालोऽयं, मातरं वा बुभुक्षितः ॥११॥

## कृगः प्रतियत्ने ॥२॥२॥१२॥

करोतेः प्रतियत्नार्थ–कस्य व्याप्यं तु कर्म वा ॥
शतपत्रमुपस्कुर्या–च्छतपत्रस्य वा सरः ॥१२॥

## रुजार्थस्याज्वरि सन्तापेर्भावे कर्तरि ॥२॥२॥१३॥

व्याप्यं कर्म रुजार्थस्य, भावे कर्तरि वा भवेत् ॥
ज्वरिसन्तापिभिन्नस्य, रुजेद्रोगः स्त्रियं स्त्रियः ॥१३॥

## जासनाटक्राथपिषो हिंसायाम् ॥२॥२॥१४॥

जासादीनां तु हिंसायां, व्याप्यं वा कर्म संभवेत् ॥

---

शिशुभिरित्यपि विकल्पपक्षे, अभिवादयते गुरुः शिष्यं शिष्येण वा । दर्शयति स्मतर्कं रूपमित्यादावात्मनेपदत्वाभावान्न ॥९॥ आत्मन इत्येव–पुत्र–मुपनाथयति पाठाय उपयाचत इत्यर्थः ॥१०॥ सर्पिषः सर्पिर्वा दयते, लोकानां लोकान् वा ईष्टे ॥११॥ सरः–सरोवरः ॥१२॥ ज्वरि–सन्तापिवर्जनाद्–आधूनं ज्वरयति सन्तापयति चेत्यादि ॥१३॥ एवमुज्जासयति उत्क्राथयति,

उन्नाटयति चौरस्य, चौरं वा चतुरो जनः ॥१४॥

**निप्रेभ्यो घ्नः ॥२॥२॥१५॥**

समस्तव्यस्तपर्यस्त- निप्राभ्यां कर्म वा भवेत् ॥
हन्तेर्व्याप्यं तु हिंसायां, गोर्गा निहन्ति निर्दयः ॥१५॥

**विनिमेयद्यूतपणं पणव्यवहोः ॥२॥२॥१६॥**

विनिमेयस्तथा द्यूत-पणा वा कर्मसंज्ञकः ॥
व्याप्यं पणव्यवह्नोर्भवेद् , द्वौ त्रयाणां पणायति ॥१६॥

**उपसर्गाद् दिवः ॥२॥२॥१७॥**

सोपसर्गदिवो व्याप्या-वुक्तौ वा कर्मसंज्ञकौ ॥
यस्यायुतस्य प्रद्यूतं, लक्षं तस्य न चित्रकृत् ॥१७॥

**न ॥२॥२॥१८॥**

नोपसर्गदिवो व्याप्या-वुक्तौ न कर्मसंज्ञकौ ॥
नलो दीव्यति राज्यम्य, व देव्याः पुष्करेण सः ॥१८॥

---

पिनष्टि इत्यादावसेयम् । चौरं बन्धनाज्जासयति-मोचयति नटं नाटयति-नर्तयतीत्यादौ हिंसाभावान्न विकल्पः ॥१४॥ एवं प्रहन्ति, निप्रहन्तीत्यत्रापि, रागादीन्निहन्तीत्यादौ हिंसाभावान्न विकल्पः, चौरं हन्ति-आहन्ति इत्यादावपि न निप्राभावात् ॥१५॥ विनिमेयः क्रयविक्रेयोऽर्थः, द्यूतपणो-द्यूतजेयम्, द्वावेतौ पणतेर्व्यवहरतेश्च व्याप्यौ वा कर्मसंज्ञौ । एवं व्यवहरतीत्यत्राप्यवसेयम् ॥१६॥ उक्ताविति विनिमेयद्यूतपणौ । अयुतस्य-दशसहस्रस्य, द्यूतस्वभावो हि तादृशो यद् द्यूतेऽधिकमधिकं प्रदीव्यतीति सुष्ठूक्तं 'लक्षं तस्य न चित्रकृ'-दिति ॥१७॥ उक्तौ-विनिमेय-द्यूतपणौ । नल इत्यादिवृत्तं प्रसिद्धम् । व-इवार्थे 'मणी वोष्ट्रस्य लम्बेते' इतिवत् ॥१८॥

करणं च ॥२॥२॥१९॥

दीव्यतेः करणं कर्म-संज्ञं चात् करणं मतम् ॥
चाणक्यो मान्त्रिकरक्षै-र्दीव्यत्यक्षान्नु नागरैः ॥१९॥

अधेः शीङ्स्थास आधारः ॥२॥२॥२०॥

अधिपूर्वकशीङ्स्थाऽऽसा-माधारः कर्मसंज्ञकः ॥
अधिशेते वनं ध्यान-मध्यमध्यासितो मुनिः ॥२०

उपान्वध्याङ्वसः ॥२॥२॥२१॥

उपान्वध्याङ्विशिष्टस्य, ह्याधारो वसतेर्भवेत् ॥
कर्मसंज्ञो महाग्राम-मावसेद् यः स नागरः ॥२१॥

वाऽभिनिविशः ॥२॥२॥२२॥

आधारो वा भवेत् कर्म-संज्ञोऽभिनिविशेरियम् ॥
व्यवस्थितविभाषा सोऽभिनिविष्टो दिवं सुखे ॥२२॥

कालाध्वभावदेशं वाऽकर्म चाकर्मणाम् ॥२॥२॥२३॥

कालाध्वभावदेशाना-माधाराणामकर्मणाम् ॥
कर्मत्वं वाऽपि तत्पक्षे-ऽकर्मता मासमासते ॥२३॥

---

चाणक्य इति-चन्द्रगुप्तकोपपोपकृते नागरैः सह चाणक्योऽक्षान् अक्षैर्वा दीव्यतीति प्रसिद्धं नरजन्मदुर्लभताज्ञापकदृष्टान्तदशके ॥१९॥ एवमधितिष्ठति ग्राममध्यास्ते ग्राममित्याद्यूह्यम् ॥२०॥ ग्राममुपवसति, अनुवसति अधिवसतीत्यादि बोध्यम् ॥२१॥ इयं व्यवस्थितविभाषा तेन क्वचित् कर्मसंज्ञैव, क्वचिदाधारसंज्ञैव । दिवमभिनिविष्ट इत्यादौ कर्मसंज्ञा, सुखेऽभिनिविष्ट इत्यादावाधारसंज्ञा ॥२२॥ ते मासमासते कोशं शेरते, गोदोहमासते, कुरूनासते पक्षे मासे इत्याद्युन्नेयम् ॥२३॥

## साधकतमं करणम् ॥२॥१॥२४॥

क्रियासिद्धौ प्रकृष्टं यत्, साधकं करणं हि तत् ॥
भोगानाप्नोति दानेन, भोगेन सुखमाप्यते ॥२४॥

## कर्माभिप्रेयः सम्प्रदानम् ॥२॥१॥२५॥

सम्प्रदानमभिप्रेयः, क्रियया वाऽपि कर्मणा ॥
धर्मं दिशति लोकाय, मोक्षाय यतते जनः ॥२५॥

## स्पृहेर्व्याप्यं वा ॥२॥१॥२६॥

धातोः स्पृहयतेर्व्याप्य, सम्प्रदानं विभाषया ॥
स्पृहयति स पुष्पेभ्यः, परागं वा मधुव्रतः ॥२६॥

## क्रुद्द्रुहेर्ष्याऽसूयार्थैर्यं प्रति कोपः ॥२॥१॥२७॥

क्रुधाद्यर्थैर्भवेत् कोपः, संप्रदानं हि यं प्रति ॥
मित्राय द्रुह्यति व्यर्थं, मित्रद्रोही तु दुर्जनः ॥२७॥

## नोपसर्गात् क्रुद्द्रुहा ॥२॥१॥२८॥

सोपसर्गक्रुधिद्रुहभ्यां, संप्रदानं न पूर्ववत् ॥
अभिद्रुह्यति धर्मं यः, स हि शर्माभिद्रुह्यति ॥२८॥

---

स्पष्टे ॥२४॥२५॥ स मधुव्रतः—भ्रमरः पुष्पेभ्यः स्पृहयति परागं वा। वैकल्पिकत्वात् परागमित्यत्र द्वितीया ॥२६॥ क्रुधाद्यर्थैर्धातुभिः योगे यं प्रति कोपो भवेत् तत् सम्प्रदानं स्यात् एवं क्रुध्यति, ईर्ष्यति, असूयति इत्यत्राप्यवसेयम् ॥२७॥ सोपसर्गाभ्यां क्रुधिद्रुहिभ्यां योगे यं प्रति कोपस्तत् सम्प्रदानं न स्यात् ॥२८॥

## अपायेऽवधिरपादानम् ॥२॥२॥२९॥

अपायावधिभूत यत्, तदपादानकारकम् ॥
जीर्णं पर्णं पतेद् वृक्षात्, तथैव चेतनो भवात् ॥२९॥

## क्रियाश्रयस्याधारोऽधिकरणम् ॥२॥२॥३०॥

कर्मणः कर्तुराधारो–ऽधिकरणं तदुच्यते ॥
दिवि देवा नरा भूमौ, पाताले सन्ति पन्नगाः ॥३०॥

## नाम्नः प्रथमैकद्विबहौ ॥२॥२॥३१॥

स्यादेकद्विबहावर्थे, आद्या नाम्नः सतः परा ॥
सि–औ–जस्–लक्षणा शुक्लः, शुक्लौ शुक्ला गुणाः सताम्॥३१

## आमन्त्र्ये ॥२॥२॥३२॥

आमन्त्र्येऽथ स्थितान्नाम्नो, विभक्तिः प्रथमा भवेत् ॥
भगवन् ? भो महावीर ?, रक्ष मां कर्मबन्धनात् ॥३२॥

## गौणात् समयानिकषाहाधिगन्तराऽन्तरेणातियेन–तेनैर्द्वितीया ॥२॥२॥३३॥

स्यात् समयादिभिर्युक्ताद्, द्वितीया गौणनामतः ॥

---

अपाये विश्लेषे योऽवधिः सोऽनेकविधो विवक्षावशाद्विज्ञेयस्तदपादानं स्यात् । एवं धर्मात् प्रमाद्यति, चौरेभ्यस्त्रायते इत्यादि बोध्यम् ॥२९॥ क्रियाश्रयः कर्ता स्यात् कर्म वा भवेत् तदाधारोऽधिकरणं स्यात् । स्थाल्यां तण्डुलान् पचतीत्यत्र कर्मण आधारः ॥३०॥ एक–द्वि–बहावर्थे सतो–वर्तमानाद् नाम्नः परा सि–औ–जस्लक्षणा आद्या–प्रथमाविभक्तिः स्यादित्यन्वेयम् ॥३१॥ स्पष्टम् ॥३२॥ निकषा गिरिं नदी, हा ! मैत्रं व्याधिः, धिग्

समया सिद्धभूमिध्रं, रम्या शत्रुञ्जयी नदी ॥३३॥

## द्वित्वेऽधोऽध्युपरिभिः ॥२॥२॥३४॥

अधोऽध्युपरिभिर्युक्ताद्, द्वित्वे चेद्गौणनामतः ॥
द्वितीया, ह्यध्यधि ग्रामं, क्षेत्राणि सुखिनो जनाः ॥३४॥

## सर्वोभयाभिपरिणा तसा ॥२॥२॥३५॥

सर्वादिभिस्तसन्तैः स्याद्, द्वितीया गौणनामतः ॥
वनानि सर्वतो ग्राम-मभितः परितस्तथा ॥३५॥

## लक्षणवीप्स्येत्थंभूतेष्वभिना ॥२॥२॥३६॥

अभिना तेन यस्यार्था, वीप्स्येत्थंभूतलक्षणाः ॥
द्वितीया नामतो गौणा-द्विद्युद्विद्योतते॒ऽभि तम् ॥३६॥

## भागिनि च प्रतिपर्यनुभिः ॥२॥२॥३७॥

प्रतिपर्यनुभिर्युक्ताद्, भागिनो गौणनामतः ॥

---

जाल्मम्, अन्तराऽन्तरेण वा निषधं नीलं च विदेहाः अन्तरेण धर्मं सुखं न, अतिवृद्धं कुरून् महद् बलम्, येन पश्चिमां गतः, तेन पश्चिमां नीतः इत्यादि । समया-निकषा-समीपार्थके, हा-शोच्यार्थम्, धिग्-निन्दार्थम्, अन्तराऽन्तरेण-मध्यार्थे, विनार्थमप्यन्तरेण, अति-अतिक्रमार्थम्, येन-तेन-हेत्वर्थे ॥३३॥ एवम् अधोऽधोग्रामम् । उपर्युपरिग्राममित्याद्यवसेयम् ॥३४॥ सर्वादिभिस्तसन्तैरिति युक्तादितिशेषः । एवमुभयतः इत्यत्रापि बोध्यम् ॥३५॥ यस्य वीप्साकर्म वीप्स्यम्, इत्थंभूतः किञ्चित्प्रकारमापन्नः, लक्षणं चिह्नम्, एते अर्था भवन्ति तेन अभिना युक्ताद् गौणान्नामतो द्वितीया स्यात् । तं-प्रसिद्धं कञ्चनाभि विद्युद् विद्योतते । एवं वृक्षं वृक्षमभिसेकः । साधुर्मैत्रां-मातरमभि ॥३६॥ स्वीकार्योंऽशो भोगस्तत्स्वामी भागी तत उक्तार्थेषु

चोक्तार्थेषु द्वितीया मां, प्रति भागः स दीयताम् ॥३७॥

## हेतुसहार्थेऽनुना ॥२॥२॥३८॥

गौणान्नाम्नो द्वितीयाऽनु-युक्ताद् हेतुसहार्थयोः ॥
अन्वागच्छन् सुराः शान्तिं, सेनाऽन्ववसिता नगम् ॥३८॥

## उत्कृष्टेऽनूपेन ॥२॥२॥३९॥

उत्कृष्टेऽर्थे स्थिताद्गौणाद्, द्वितीयाऽनूपसंयुतात् ॥
अनु सिद्धं बुधास्तूप. हेमचन्द्रं नु शाब्दिकाः ॥३९॥

## कर्मणि ॥२॥२॥४०॥

द्वितीया नामतो गौणाद्, भवेत् कर्मणि कारके ॥
जिनं नमति यो नित्यं, याति मोक्षमसंशयम् ॥४०॥

## क्रियाविशेषणात् ॥२॥२॥४१॥

क्रियाविशेषणाद्गौणाद्, द्वितीया ननु नामतः ॥
मन्दं याति सुखं शेते देवी गर्भभरालसा ॥४१॥

---

च-लक्षणवीप्स्येत्थम्भूतेषु वर्तमानात् प्रतिपर्यनुभिर्युक्ताद् गौणनामतो द्वितीया । मां प्रति परि अनु यो भागः स्यात् स दीयताम् । शेषं पूर्ववदनुसन्धेयम् ॥३७॥ हेतुर्जनकः, सहार्थस्तुल्ययोगो विद्यमानता च तद्विषयोऽप्युपचारात् तयोर्वर्तमानादनुना युक्ताद् द्वितीयास्यादित्यार्थः ॥३८॥ सिद्धं-सिद्धसेनसूरिमित्यर्थः नामैकदेशग्रहणान्नामग्रहणमिति ॥३९॥ स्पष्टम् ॥४०॥ मन्दं यथास्यात्तथा, एवं सुखमित्यत्रापि । उदाहरणमेतद्, मन्दं सञ्चर मन्दमेव निगद, व्यामुञ्च कोपक्रमं, पथ्यं भुंक्ष्व बधान नीविमनघां, मामाऽट्टहासं कृथाः । आकाशे भव मा सुशेष्व शयने, नीचैर्बहिर्गच्छ मा, देवी गर्भभरालसा निजसखीवर्गेण सा शिक्ष्यते ' इति कल्पसुबोधिकासत्कश्लोकं स्मृतिपथमानयति ॥४१॥

## कालाध्वनोर्व्याप्तौ ॥२॥२॥४२॥

व्याप्तौ सत्यां द्वितीया स्यात्, कालाध्वगौणनामतः ॥
जीवनं सेवते धर्मं, संसारात् सैन्न मुच्यते ॥४२॥

## सिद्धौ तृतीया ॥२॥२॥४३॥

कालाध्ववाचिनः सिद्धौ, तृतीया गौणनामतः ॥
मासेनावश्यकं सर्व-मधीते ननु बुद्धिमान् ॥४३॥

## हेतुकर्तृकरणेत्थंभूतलक्षणे ॥२॥२॥४४॥

हेत्वादिचतुरर्थेषु, तृतीया गौणनामतः ॥
यशोऽर्हताऽऽप्तमात्मार्थ-सिद्ध्या सिद्धिश्च संगता ॥४४॥

## सहार्थे ॥२॥२॥४५॥

सहार्थे नामतो गौणात्, तृतीया संभवेत् परा ॥
सहैव दशभिः पुत्रै-र्भारं वहति गर्दभी ॥४५॥

## यद्भेदैस्तद्वदाख्या ॥२॥२॥४६॥

यत्प्रकारैर्विशेषः स्यात्, तद्वतो गौणनामतः ॥

---

जीवनं–जीवनं यावत्, एवमव्याप्तौ क्रोशं गिरिरित्यन्तरालवर्तितद्भावे तु मासस्य मासे वा त्र्यहं गुडधानाः ॥४२॥ सिद्धौ–फलनिष्पत्तौ ज्ञात्याद्यनन्यथा मासमधीत आचारो नानेन गृहीत इति ॥४३॥ आत्मार्थसिद्ध्याऽर्हता यश आप्तम् अत्र प्रथमे हेतौ द्वितीये कर्तरि पुनः आत्मार्थसिद्ध्या सिद्धिः एतदुभयत्र करणे तृतीयाऽवसेया । इत्थम्भूतलक्षणे तु - अपि त्वं कमण्डलुना छात्रमद्राक्षीरित्यादौ ॥४४॥ उदाहरणश्लोकपूर्वार्धेनैवम्, 'एकेनापि सुपुत्रेण, सिंही स्वपिति निर्भरम्' इति ॥४५॥ आख्येति प्रसिद्धिरित्यर्थः,

तृतीयाऽक्ष्णा हि काणास्ते, पादैः खञ्जा मुखैः खराः ॥४६॥

## कृताद्यैः ॥२॥२॥४७॥

कृताद्यैः प्रतिषेधार्थै-स्तृतीया, गौणनामतः ॥
कृतं भवत्वलं किं वा, तेन मूर्खेण वार्यताम् ॥२॥२॥४७॥

## काले भान्नवाऽऽधारे ॥२॥२॥४८॥

समयार्थकनक्षत्र-वाचिनो नामतो नवा ॥
सदाधारे तृतीया स्या-द्द्यात् पुष्येण पायसम् ॥४८॥

## प्रसितोत्सुकाववद्धैः ॥२॥२॥४९॥

प्रसितादित्रिभिर्युक्ता-दाधारे गौणतो नवा ॥
तृतीया प्रसिताः केशैः, केशेषु वामलोचनाः ॥४९॥

## व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥२॥२॥५०॥

द्विद्रोणप्रमुखाद्द्रौणा-न्नाम्नो व्याप्ये स्थितान्नवा ॥
स्याद्वीप्सायां तृतीयाऽन्नं, द्विद्रोणेन ददाति सः ॥५०॥

## समो ज्ञोऽस्मृतौ वा ॥२॥२॥५१॥

स्यात् संपूर्वस्य जानाते-र्व्याप्याद्वा गौणनामतः ॥

---

तेन अक्ष्णा दीर्घ इति न स्यात् ॥४६॥ वार्यतामिति-नास्ति किमपि मूर्खस्य प्रयोजनमतः स निवार्यतामिति ॥४७॥ विकल्पपक्षे पुष्ये इति, पुष्येऽर्के इत्यादौ कालाभावान्न विकल्पतृतीया ॥४८॥ प्रसिताः-प्रकर्षेण बद्धा इति प्रसक्ता इति यावत् । एवं गृहेण गृहे वा उत्सुकः, केशैः केशेषु वाऽवबद्ध इत्यादि ॥४९॥ विकल्पपक्षे द्विद्रोणं द्विद्रोणमिति । वीप्सायामेव तृतीयेति न तत्र द्विरुक्तिः ॥५०॥ स गवा गां वा सञ्जानीतेऽवेक्षत इत्यर्थः, स्मरणे तु

तृतीया स्मृतिभिन्नेऽर्थे, सञ्जानीते स गां गवा ॥५१॥

## दामः सम्प्रदानेऽधर्म्ये आत्मने च ॥२॥२॥५२॥

संदामः सम्प्रदानेऽर्थे—ऽधर्म्यरूपे तु नामतः ॥
स्यात् तृतीयाऽऽत्मनेरूपं, वृषल्या संप्रयच्छते ॥५२॥

## चतुर्थी ॥२॥२॥५३॥

सम्प्रदाने स्थिताद्गौणा—च्चतुर्थी नामतो भवेत् ॥
शिष्येभ्यो ददतां विद्यां, कुशिष्याय न दीयताम् ॥५३॥

## तादर्थ्ये ॥२॥२॥५४॥

तादर्थ्ये नामतो गौणा—च्चतुर्थी जायते ध्रुवम् ॥
षष्ठ्यपवादभूतेयं, यूपाय दारु नीयताम् ॥५४॥

## रुचिकृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु ॥२॥२॥५५॥

चतुर्थी नामतो गौणात्, रुचिकृप्यर्थधारिभिः ॥
प्रेयाद्यर्थे क्रमाज् ज्ञेया, धर्मो भव्याय रोचते ॥५५॥

## प्रत्याङः श्रुवार्थिनि ॥२॥२॥५६॥

गौणान्नाम्नश्चतुर्थी स्यात्, प्रत्याङ्पूर्वशृणोतिना ॥
इच्छुके वर्तमानं चेत्, तस्मै प्रतिशृणोति गाम् ॥५६॥

---

गां गोर्वा सञ्जानाति स्मरतीत्यर्थः ॥५१॥ एतद्योगे संदाम आत्मनेपदता । पत्न्यै संप्रयच्छतीत्यादावधर्म्याभावान्न तृतीया ॥५२॥ सूत्रे स्पष्टे ॥५३॥५४॥ रुच्यर्थैः कृप्यर्थधारिणा च योगे क्रमशः प्रेयविकारोत्तमर्णवृत्तेर्गौणान्नाम्नश्चतुर्थी । एवं मूत्राय कल्पते यवागूः, चैत्राय शतं धारयतीत्यादि ज्ञेयम् ॥५५॥ एवम् आशृणोतीत्यत्रापि, याचितोऽयाचितो वा प्रतिजानीते इत्यर्थः ॥५६॥

## प्रत्यनोर्गृणाख्यातरि ॥१॥१॥५७॥

गौणान्नाम्नश्चतुर्थी स्यात्, प्रत्यनुभ्यां गृणातिना ॥
आख्यातरि स्थितात् साधु-र्गुरवेऽनुगृणात्ययम् ॥५७॥

## यद्वीक्ष्ये राधीक्षी ॥१॥१॥५८॥

यत् सम्बन्धिनि वीक्ष्ये स्यात्, राधीक्षी तत्र नामतः ॥
तुर्या राध्यति मित्राय, कामुकः स्त्रीभ्य ईक्षते ॥५८॥

## उत्पातेन ज्ञाप्ये ॥१॥१॥५९॥

स्यादुत्पातेन विज्ञाप्ये, चतुर्थी गौणनामतः ॥
पीता वर्षाय विद्युत् स्यात्, दुर्भिक्षाय सिता भवेत् ॥५९॥

## श्लाघ-ह्नु-स्था-शपा प्रयोज्ये ॥१॥१॥६०॥

ज्ञाप्ये श्लाघादिभिर्युक्ता-चतुर्थी गौणनामतः ॥
श्लाघते तिष्ठते सख्यः, सज्जनः शपते ह्नुते ॥६०॥

---

एवं गृणातीत्यादावपि, गुरूक्तमनुवदति, प्रशंसन्तं वा प्रोत्साहयतीत्यर्थः ॥५७॥ मित्रस्य दवं पर्यालोचतीत्यर्थे मित्राय राध्यतीति, स्त्रीणामभिप्रायः कीदृश इति विमतिपूर्वकं निरूपतीत्यर्थे कामुकः स्त्रीभ्य ईक्षते इति ॥५८॥ 'वाताय कपिलाविद्युदातपायातिलोहिनी । पीताय वर्षाय विज्ञेया, दुर्भिक्षाय सिता भवेद्' इति श्लोकघटकमुदाहरणम् ॥५९॥ ज्ञाप्ये प्रयोज्ये वर्तमानात् ॥६०॥

## तुमोऽर्थे भाववचनात् ॥२॥२॥६१॥

भवेत् स्वार्थे चतुर्थी ये, तुमोऽर्थे भाववाचिनः ॥
तदन्तान्नामतो गौणात्, याति लाभाय पत्तनम् ॥६१॥

## गम्यस्याप्ये ॥२॥२॥६२॥

यद् गम्यस्य तुमो व्याप्यं, तुर्या तत्रत्यनामतः ॥
धर्माय याति-धर्मं स, याति श्रोतुमुपाश्रयम् ॥६२॥

## गतेर्नवाऽनाप्ते ॥२॥२॥६३॥

असंप्राप्ते गतेराप्ये, तुर्या वा गौणनामतः ॥
मोक्षं गच्छति मोक्षाय, गुणस्थानक्रमान्मुनिः ॥६३॥

## मन्यस्यानावादिभ्योऽतिकुत्सने ॥२॥२॥६४॥

तुर्या वा मन्यतेराप्ये-ऽनावादिभ्योऽतिकुत्सने ॥
न त्वा तृणाय मन्ये वा, तृणं सर्वतिरस्कृत ? ॥६४॥

## हितसुखाभ्याम् ॥२॥२॥६५॥

तुर्या हितसुखाभ्यां वा, जायते गौणनामतः ॥
हितं लोकस्य लोकाय, नूनं राज्ञा विधीयते ॥६५॥

## तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि ॥२॥२॥६६॥

हिताद्यर्थयुताद्गौणाद्, नाम्नस्तुर्या विभाषया ॥

---

स्पष्टम् ॥६१॥ धर्ममिति-नाम्याभावाद् द्वितीया ॥६२॥ प्राप्ते तु मोक्षं गत इति द्वितीयैव ॥६३॥ हे सर्वतिरस्कृत ? त्वां तृणं वा न मन्य इत्यन्वयः । न त्वा नावमन्नं शुकं शृगालं काकं वा मन्ये इत्यादौ नावादि-वर्जनान्न चतुर्थी । कुत्सनाभावेतु न त्वा रत्नं मन्ये इत्यादावपि न चतुर्थी, ॥६४॥ एवं सुखमित्यत्रापि ज्ञेयम् ॥६५॥ विकल्पपक्षे प्रजानामिति ।

आशिपि गम्यमानायां, प्रजाभ्यः स्तात् सदा शिवम् ॥६६॥

## परिक्रयणे ॥२॥२॥६७॥

परिक्रीधातुना योगे, वेतनार्थकनामतः ॥
ज्ञेया तुर्या विभक्तिर्वा, परिक्रीतः श्रियै श्रिया ॥६७॥

## शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः ॥२॥२॥६८॥

गौणान्नाम्नश्चतुर्थी स्या—च्छक्तार्थैर्वषडादिभिः ॥
मोक्षाय ज्ञानिनः शक्ता, देवेभ्योऽस्तु नमो नमः ॥६८॥

## पञ्चम्यपादाने ॥२॥२॥६९॥

पञ्चमी नामतो गौणात्, स्यादपादानकारके ॥
चैत्रो ग्रामात् समायाति, सरिता पतिता गिरेः ॥६९॥

## आङावधौ ॥२॥२॥७०॥

आङ् मर्यादाभिविध्योश्चे—त्तद्योगे पञ्चमी मता ॥
आगिरेर्वारिदो वृष्ट, आमुक्तेर्ननु संसृतिः ॥७०॥

## पर्यपाभ्यां वर्ज्ये ॥२॥२॥७१॥

वर्ज्येऽर्थे वर्तमानाभ्यां, पर्यपाभ्यां नु पञ्चमी ॥
विज्ञेया नामतो गौणाद्, अनार्याः परि भारतात् ॥७१॥

---

ज्ञेयमूह्यम् ॥६६॥ स्पष्टम् ॥६७॥ वषडग्नये, स्वस्ति प्रजाभ्यः, स्वाहेन्द्राय, स्वधापितृभ्यः ॥६८॥ स्पष्टे ॥६९॥७०॥ भारतं वर्जयित्वेत्यर्थः, एवमपयोगेऽपि ज्ञेयम् ॥७१॥

## यतः प्रतिनिधिप्रतिदाने प्रतिना ॥२॥२॥७२॥

प्रतिनिधौ प्रतिदाने, प्रतिना पञ्चमी भवेत् ॥
वैशेषिकः प्रति न्यायाद्, दौर्जन्यात् प्रति ताडनम् ॥७२॥

## आख्यातर्युपयोगे ॥२॥२॥७३॥

प्रतिपादयितुर्नाम्न, उपयोगे तु पञ्चमी ॥
उपाध्यायादधीते सन्, शृणोति नर्तकस्य ना ॥७३॥

## गम्ययपः कर्माधारे ॥२॥२॥७४॥

गम्यस्य यौ यबन्तस्य, कर्माधारौ ततो भवेत् ॥
पञ्चमी प्रेक्षते वृक्षाद्, भुङ्क्ते सज्जन आसनात् ॥७४॥

## प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः ॥२॥२॥७५॥

प्रभृत्यन्यार्थदिक्शब्दै-र्बहिराराच्च पञ्चमी ॥
इतरेणापि विज्ञेया, ज्ञानं नैवात्मनो बहिः ॥७५॥

## ऋणाद्धेतोः ॥२॥२॥७६॥

हेतुभूतादृणान्नाम्नो, नो तृतीया तु पञ्चमी ॥
अल्पायश्चेच्छताद् बद्धः, स्वल्पायुश्चितन्या तया ॥७६

सप्टम् ॥७२॥ ना–नरः नर्तकस्य शृणोतीत्यत्रोपयोगाभावात् पञ्चम्यभावः, सत्युपयोगे तु भवेदिति ॥७३॥ वृक्षाद्–वृक्षमारुह्य । आसनाद्–आसने उपविश्य ॥७४॥ ततः प्रभृति, ग्रीष्मादारभ्य, अन्यो भिन्नो वा मैत्रात्, ग्रामात् पूर्वस्यां वसति, उत्तरो विन्ध्यात् पारियात्रः, पश्चिमो रामाद् युधिष्ठिरः, आरात्, इतरो वा ग्रामात् इत्यादि बोध्यम् ॥७५॥ तृतीयाऽपवादः । अल्पलाभो यदि शताद् बद्धस्तदा तया तत्कृतया चिन्तया स्वल्पायुर्भवति ॥७६॥

गुणादस्त्रियां न वा ॥२।२।७७॥

पञ्चमी हेतुभूतात् स्यात्, वाऽस्त्रियां गुणवाचिनः ॥
जाड्याद् बद्धः स जाड्येन, प्रज्ञया परिवर्जितः ॥७७॥

आराद्थैः ॥२।२।७८॥

स्याद् दूरान्तिकयोराराात्, तदर्थे पञ्चमी नवा ॥
धनाद् धनस्य दारिद्र्यं, दूरं तिष्ठति निश्चयम् ॥७८॥

स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे ॥२।२।७९॥

असत्त्वे करणे स्तोका-दिभ्यो वा पञ्चमी मता ॥
अल्पेन मधुना मत्तो, हन्यतेऽल्पाद्विषाज्जनः ॥७९॥

अज्ञाने ज्ञः षष्ठी ॥२।२।८०॥

अज्ञानार्थस्य जानातेः, करणे नामतो भवेत् ॥
षष्ठी बालः स जानीते, मधुनो मधुरप्रियः ॥८०॥

शेषे ॥२।२।८१॥

नामार्थकारकाद्भिन्नः सम्बन्धः शेष उच्यते ॥
तदर्थे नामतः षष्ठी, स्वामी धर्मस्य तीर्थकृत् ॥८१॥

---

अस्त्रियामिति किं ? प्रज्ञया परिवर्जितः इति ॥७७॥ एवमन्तिकमभ्यासं वा ग्रामाद् ग्रामस्य वा इत्यादि ॥७८॥ अस्यार्थः-यतो द्रव्ये शब्दप्रवृत्तिः स गुणोऽसत्त्वं तेनैव वा रूपेणाभिधीयमानं द्रव्यादि, तस्मिन् करणे वर्तमानेभ्यः स्तोकादिभ्यः पञ्चमी वा स्यात् । एवं स्तोकात् स्तोकेन वा कृच्छ्रात् कृच्छ्रेण वा कतिपयात् कतिपयेन वा मुक्त इत्यादि बोध्यम् ॥७९॥ मधुना करणभूतेन प्रवर्तते इत्यर्थः । अज्ञान इति किं ? स्वरेण पुत्रं जानाति ॥८०॥ स्वस्वामिभावादिसंबन्धोऽनेकविधः ॥८१॥

## रिरिष्टात्स्तादस्तादसतसाता ॥१॥१॥८२॥

रिरिष्टात्प्रमुखान्तानां, योगे षष्ठी प्रजायते ॥
वृक्षस्योपरि शाखायां, मधौ कूजति कोकिलः ॥८२॥

## कर्मणि कृतः ॥१॥१॥८३॥

गौणान्नाम्नो भवेत् षष्ठी, कृदन्तस्य तु कर्मणि ॥
ज्ञाता विश्वस्य सर्वज्ञः, कर्ता ज्ञातैव कथ्यते ॥८३॥

## द्विषो वाऽतृशः ॥१॥१॥८४॥

स्यादतृश्प्रत्ययान्तस्य, द्विषः कर्मणि नामतः ॥
वा षष्ठी द्विषतो लोकान्, लोकानां शासिता प्रभुः ॥८४॥

## वैकत्र द्वयोः ॥१॥१॥८५॥

द्विकर्मधातुभिः षष्ठी, वा कृदन्तैस्तु कर्मणि ॥
गौणे मुख्ये तु नित्यैव, नेताश्वस्य पुरं पुरः ॥८५॥

## कर्तरि ॥१॥१॥८६॥

गौणान्नाम्नो भवेत् षष्ठी, कृदन्तस्य तु कर्तरि ॥

---

मधौ–चैत्रे मासि, वसन्ते वा । एवम् उपरिष्टात्, परस्तात्, पुरस्तात्, पुरः, दक्षिणतः, उत्तराद् इत्यादियोगेऽप्युन्नेयम् ॥८२॥ 'सर्वभावेषु कर्तृत्वं, ज्ञातृत्वं यदि संमतम् । मतं नः सन्ति सर्वज्ञा, मुक्ताः कायभृतोऽपि च' ।७।७। इति वीतरागस्तोत्रश्लोकोद्बोधकमुदाहरणम् ॥८३॥ प्रभुः–राजा ॥८४॥ कृदन्तैः–कृत्प्रत्ययान्तैर्द्विकर्मधातुभिर्योगे गौणे कर्मणि षष्ठी वा स्यादिति । पुरं, पुरः–अत्र रेफान्तः पुर्–शब्दः । कर्मणो गौणता मुख्यता च विवक्षाधीनेति नेताऽश्वं पुरः इत्यपि ॥८५॥ आसिका–आसनस्थिति । कर्तरीति,

लाकोत्तरचमत्कारं, धत्ते भवत आसिका। ।८६॥

द्विहेतोरस्त्र्यणकस्य वा ॥२।२।८७॥

स्त्र्यणकान्यकृतो हेतोः षष्ठी कर्तरि वा द्वयोः ॥
पयसः खलु मैत्रस्य, पानं मैत्रेण शोभनम् ॥८७॥

कृत्यस्य वा ॥२।२।८८॥

कृत्यस्य कर्तरि गौणा—न्नाम्नः षष्ठी विभाषया ॥
शास्त्रं वै भवतोऽध्येयं, शमनीयं त्वया मनः ॥८८॥

नोभयोर्हेतोः ॥२।२।८९॥

उभयोर्हेतुभूतस्य, कृत्यस्य कर्तृकर्मणोः ॥
योगे षष्ठी न जायेत, नेया ग्राममजा त्वया २॥८९॥

तृन्नुदन्ताव्ययक्वस्वानातृश्शतृङिणकच्खलर्थस्य ॥२।२।९०॥

तृन्नुदन्तादियोगे तु, षष्ठी न कर्तृकर्मणोः ॥
सच्छास्त्रं मनसाऽधीयन्, हन्ता मोहादिकानरीन् ॥९०॥

---

किं ? गृहे शायिका ॥८६॥ अस्यार्थः—स्त्र्यधिकार–विहिताभ्यामणकाभ्यामन्यस्य द्वयोः–कर्तृकर्मषष्ठ्यो र्हेतोः कृतः कर्तरि षष्ठी वा स्यादिति अस्त्र्यणकस्येति किम् ? चिकीर्षा मैत्रस्य काव्यानाम्, भेदिका चैत्रस्य काष्ठानामिति ॥ ॥८७॥ स्पष्टे ॥८८॥८९॥ कन्यामलङ्करिष्णुः, पयः पातुं याति, ओदनं पेचिवान्, कटं चक्राणः कटं कुर्वन्, परिषहान् सासहिः, कटं कारको व्रजति, सुज्ञानं तत्त्वं त्वया, उदाहरणानीमानि क्रमश उदन्ता–व्यय–क्वसु–आन–शतृ–ङि–णकच्–खलर्थानामवसेयानि ॥९०॥

## क्तयोरसदाधारे ॥२॥२॥९१॥

आधारवर्तमानार्था-ऽन्यक्तक्तवतुयोगिनः ॥
न पष्ठी कर्मणः कर्तुः, फलं जग्धं वनं गतः ॥९१॥

## वा क्लीबे ॥२॥२॥९२॥

क्लीबेऽर्थे विहितक्तस्य, कर्तुः पष्ठी भवेन्नवा ॥
नृत्तं मत्तमयूरस्य, वीक्ष्यैवानन्दित जनैः ॥९२॥

## अकमेरुकस्य ॥२॥२॥९३॥

उकान्तस्याकमेर्नित्यं, भवेत् पष्ठी न कर्मणि ॥
स्त्रियः कामुकतां मुञ्च, मोक्षं यद्यभिलापुकः ॥९३॥

## एष्यदृणेनः ॥२॥२॥९४॥

एष्यत्यर्थे ऋणे चेनो, णिनः पष्ठी न कर्मणि ॥
शतं दायी गमी स्वर्गं, साधुदायी धनस्य च ॥९४॥

## सप्तम्यधिकरणे ॥२॥२॥९५॥

स्यादधिकरणे गौणा-न्नामतो ननु सप्तमी ॥
तैलं तिलेषु चैतन्यं, तथैवात्मनि राजते ॥९५॥

## नवा सुजर्थैः काले ॥२॥२॥९६॥

स्यादधिकरणे काले, वारार्थप्रत्ययान्तकैः ॥

---

असदाधार इति किम् ? राज्ञां पूजितः, इदं सक्तूनां पीतम् ॥९१॥ सूत्रत्रिकं व्यक्तार्थम् ॥९२॥९३॥९४॥ अधिकरणं पोढा वैपयिकौपश्लेषिका-भिव्यापक-सामीप्यकनैमित्तिकौपचारिकभेदात् । तत्र प्रस्तुते उदाहरणे अभिव्यापकस्य । अन्यान्युदाहरणानि क्रमशः-दिवि देवाः, कटे आस्ते, वटे गावः, युद्धे सन्नह्यते, अङ्गुल्यग्रे करिशतमिति ॥९५॥ काल इति किम् ?

सप्तमी वा सकृद्भुङ्क्ते-ऽह्नि वाह्रो मुनीश्वरः ॥९६॥

**कुशलायुक्तेनाऽऽसेवायाम् ॥२॥२॥९७॥**

कुशलायुक्तयोर्योगे, वाऽऽसेवायां तु सप्तमी ॥
कुशलोऽयं धनप्राप्ता-वाऽऽयुक्तो रत्नविक्रये ॥९७॥

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ॥२॥२॥९८॥**

स्वाम्यादिसप्तभिर्युक्ता-न्नामतो सप्तम नवा ॥
गोषु स्वामी गवां स्वामी, सदानन्दति गोकुले ॥९८॥

**व्याप्ये क्तेनः ॥२॥२॥९९॥**

क्तान्ताद् य इन् तदन्तस्य, व्याप्यान्नाम्नो नु सप्तमी ॥
अधीती सर्वशास्त्रेऽपि, क्रियाहीनो न शोभते ॥९९॥

**तद्युक्ते हेतौ ॥२॥२॥१००॥**

हेतौ व्याप्येन संयुक्ते, स्थितान्नाम्नो नु सप्तमी ॥
चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ॥१००॥

---

द्विः कांस्यपात्र्यां भुङ्क्ते ॥९६॥ पक्षे षष्ठी तेन धनप्राप्तेः कुशलः, रत्नविक्रयस्यायुक्त इत्यपि । आसेवायां-तत्परतायामसत्यां तु कुशलश्चित्रे न तु करोतीत्यादि नात्र षष्ठीति नियमसूत्रमिदम् ॥९७॥ एवं गोषु गवां वा ईश्वरः अधिपतिः, दायादः, साक्षी, प्रतिभूः, प्रसूत इत्यादि बोध्यम् ॥९८॥ सर्वशास्त्रमधीतमनेनेति सर्वशास्त्रेऽधीती ॥९९॥ उदाहरणश्लोकोत्तरार्धे यथा-केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥' इति । द्वीपिनशब्दः पुंक्लीबोऽदन्तः । सीम्नि-वृषणार्थे मर्यादार्थे वा, पुष्कलकः-पुष्पं लातीति डेऽज्ञाताद्यर्थविवक्षायां के च सति भवति, तदर्थः प्रकृते गन्धमृगः, कीलको वा । तद्युक्ते इति किं ? वेतनेन धान्यं लुनाति ॥१००॥

## अप्रत्यादावसाधुना ॥२।२।१०१॥

सप्तमी नामतो गौणा-दसाधुशब्दसंयुतात् ॥
प्रत्यादीनां प्रयोगे न, मैत्रोऽसाधुर्विमातरि ॥१०१॥

## साधुना ॥२।२।१०२॥

साधुशब्दयुतान्नाम्नो-ऽप्रत्यादौ सप्तमी भवेत् ॥
साधवः स्युः सुधर्मे ये, विश्वे ते हि सुसाधवः ॥१०२॥

## निपुणेन चार्चायाम् ॥२।२।१०३॥

साधुनिपुणयोर्युक्ता-न्नाम्नोऽर्चायां नु सप्तमी ॥
मातरि निपुणः साधुः, पितरि सज्जनो जनः ॥१०३॥

## स्वेशेऽधिना ॥२।२।१०४॥

ईशितव्ये तथेशे चा-धिना युक्तान्नु सप्तमी ॥
अध्यवन्तिषु प्रद्योतः, प्रद्योते त्वध्यवन्तयः ॥१०४॥

## उपेनाधिकिनि ॥२।२।१०५॥

अधिकिनि स्थितान्नाम्नः, सप्तमी तूपसंयुतात् ॥
उपखार्यां भवेद् द्रोणः, खार्यां द्रोणोऽधिकाधिकः ॥१०५॥

## यद्भावो भावलक्षणम् ॥२।२।१०६॥

एकया क्रियया ऽन्या चेत्, क्रिया यत्रैव लक्ष्यते ॥

---

प्रत्यादिना योगे तु असाधुर्मैत्रो विमातरं प्रति, एवं परि, अनु, अभि-योगेऽप्यवसेयमिति ॥१०१॥ स्पष्टम् ॥१०२॥ प्रत्यादियोगे नेति ज्ञेयमत्रापि ॥१०३॥ अवन्तिषु ईशितव्ये सप्तमी, प्रद्योते ईशे सप्तमी । प्रद्योतोऽवन्तीनामधीशः ॥१०४॥ स्पष्टम् ॥१०५॥ अत्र गायनस्य गानकरणसमयो नियतस्तेन

सप्तमी तत्र नाम्नः स्याद्, गतो गायति गायने ॥१०६॥

**गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ॥२।२।१०७॥**

गते गम्येऽध्वनोऽन्तेन, वैकार्थ्यं तद्यथोचिता ॥
सप्तमी च विभक्तिः स्याद्, दूरं दूरे वनं पुरात् ॥२॥२॥१०७

**षष्ठी वाऽनादरे ॥२॥२॥१०८॥**

अनादरे नवा षष्ठी, यद्भावो भावलक्षणम् ॥
जने रुदति मात्राजीत्, जनस्य रुदतो भृशम् ॥१०८॥

**सप्तमी चाविभागे निर्धारणे ॥२॥२॥१०९॥**

निर्धारणेऽविभागश्चे–ज्जातिगुणक्रियादिभिः ॥
षष्ठी च सप्तमी शूरः, क्षत्रियो वै नृणां नृषु ॥१०९॥

**क्रियामध्येऽध्वकाले पञ्चमी च ॥२॥२॥११०॥**

क्रियामध्यध्वकालाभ्यां, पञ्चमी सप्तमी परा ॥
अद्य भुक्त्वा पुनर्भोक्ता, द्व्यहाद् द्व्यहे महातपाः ॥११०॥

**अधिकेन भूयसस्ते ॥२॥२॥१११॥**

अधिरूढोऽधिकः शब्दो, विभक्तिस्तत्र भूयसः ॥

---

केनिचित् पृष्टे 'स कदा गतः'? तदुत्तरं दत्तवान् कश्चिद् यद् 'गायने गायति गतः' अनेन समयो लक्ष्यत इति ॥१०६॥ अस्यार्थः—कुतश्चिदवधेर्विवक्षितस्याध्वनोऽवसानमन्तः, यद्भावो भावलक्षणं तस्याध्वनोऽध्वन एवान्तेन–अन्तवाचिना सहैकार्थ्य–समानाधिकरण्यं वा स्यादिति ॥१०७॥ स्पष्टे ॥१०८॥ ॥१०९॥ क्रिययोर्मध्ये यावध्वकालौ तद्वाचिभ्याम् । अध्वोदाहरणन्तु इहस्थोऽयमिष्वासः क्रोशात् क्रोशे वा लक्ष्यं विध्यतीति ॥११०॥ अक्षतान्सापोऽधिक

पञ्चमी सप्तमी च स्यात्, माषान्माषेऽधिकोऽक्षतः ॥१११॥

## तृतीयाऽल्पीयसः ॥२।२।११२॥

अधिकेन तृतीया स्याद्–ल्पीयोवाचिना मता ॥
द्रोणेन ह्यधिका खारी, खारी द्रोणचतुष्टयम् ॥११२॥

## पृथग् नाना पञ्चमी च ॥२।२।११३॥

पृथक्नानायुतान्नाम्न–स्तृतीया पञ्चमी तथा ॥
पृथक् धर्मेण संसारो, नानाऽधर्मात् भवेच्छिवम् ॥११३॥

## ऋते द्वितीया च ॥२।२।११४॥

ऋतेयुक्ताद्भवेन्नाम्नो, द्वितीया चैव पञ्चमी ॥
अङ्ग स्वस्थमृते रोगस्, ऋते धर्मात् कुतः सुखम् ॥११४॥

## विना ते तृतीया च ॥२।२।११५॥

विनायोगे द्वितीया स्याद्, तृतीया पञ्चमी तथा ॥
वातं वातेन वाताद्वा, विना जातु न जीवनम् ॥११५॥

## तुल्यार्थैस्तृतीयाषष्ठ्यौ ॥२।२।११६॥

तुल्यार्थैः संयुतात् षष्ठी, तृतीया गौणनामतः ॥
भवेत् पुत्रः पितुस्तुल्यः, पुत्री मात्रा समा मता ॥११६॥

## द्वितीयाषष्ठ्यावेनेनानञ्चेः ॥२।२।११७॥

एनान्तेन युतात् षष्ठी, द्वितीयाऽञ्चेः परं न चेत् ॥

---

इति माषशब्दात् पञ्चमी सप्तमी चानेनेति ॥१११॥ अधिकेन–युक्तादिति शेषः ॥११२॥ पृथग्–अन्यः, नाना–विनार्थम् ॥११३॥ स्पष्टे॥११४॥११५॥ समा–समाना ॥११६॥ पूर्वेणेति–पूर्वात् 'अदूरे एनः' ७।२।१२२। इतिएनः,

ग्रामं ग्रामस्य पूर्वेण, ग्रामात् प्राग् राजते गिरिः ॥११७॥

## हेत्वर्थैस्तृतीयाद्याः ॥२॥२॥११८॥

हेत्वर्थैः स्युस्तृतीयाद्याः, पञ्चापि ता विभक्तयः ॥
धनेन हेतुना हेतौ, धने श्राम्यति किङ्करः ॥११८॥

## सर्वादेः सर्वाः ॥२॥२॥११९॥

हेत्वर्थैः संयुतात् सर्वाः, सर्वादेः स्युर्विभक्तयः ॥
को हेतुर्हेतुना केन, कस्य हेतोरिदं कृतम् ॥११९॥

## असत्त्वारादर्थाट्टाङसिङ्यम् ॥२॥२॥१२०॥

आरादर्थादसत्त्वाट्टा-ङसिङ्यंप्रत्यया मताः ॥
दूराद् दूरेण दूरे वा, दूरं मोहाद्वसेन्मुनिः ॥१२०॥

## जात्याख्यायां नवैकोऽसंख्यो बहुवत् ॥२॥२॥१२१॥

जात्याख्यायां भवेदेको-ऽसंख्यश्चेद्बहुवन्नवा ॥
सम्पन्नो व्रीहिरघत्वे-ऽधर्माधिक्यान्न जायते ॥१२१॥

## अविशेषणे द्वौ चास्मदः ॥२॥२॥१२२॥

असमदा द्व्येकयोर्वा स्या-द्बहुत्वमविशेषणे ॥

---

एतदन्तस्य 'अधण्...' ।१।१।३२। इत्यव्ययत्वम् ॥१७॥ एवं धनाय हेतवे, धनाद्धेतोः, धनस्य हेतोः इत्यादि बोध्यम् । निमित्तादिभिरप्येवमेवेति॥११८॥ एवं कं हेतुम् , कस्मै हेतवे, कस्माद्धेतोः, कस्मिन् हेतावित्याद्युन्नेयम् ॥११९॥ एवं विप्रकृष्टेनान्तिकेनेत्यादि । असत्त्वेति-दूरः पन्था इत्यादौ न ॥१२०॥ असङ्ख्यः-सङ्ख्याविशेषणविमुक्तः । सम्पन्ना व्रीहय इति वैकल्पिकमुदाहरणम् ॥१२१॥ अविशेषण इति किम् ? आवां गार्ग्यौ ब्रूवः, अहं चैत्रो

आवां ब्रूवो वयं ब्रूमो, वयं किलब्रवीम्यहम् ॥१२२॥

## फल्गुनीप्रोष्ठपदस्य भे ॥२॥२॥१२३॥

फल्गुनीप्रोष्ठपदयो-र्नक्षत्रे वर्तमानयोः ॥
द्वित्वे ज्ञेयं बहुत्वं वा, पूर्वाः प्रोष्ठपदाः कदा ॥१२३॥

## गुरावेकश्च ॥२॥२॥१२४॥

स्याद् गुरौ गौरवार्हेऽर्थे, शब्दस्य द्व्येकयोर्नवा ॥
बहुत्वं मे इमे पूज्या, गुरवश्च गुरुस्तथा ॥१२४॥

॥ इति द्वितीयपादः ॥

---

ब्रवीमि ॥१२२॥ भभिन्ने तु-फल्गुनीषु जाते फाल्गुन्यौ कन्ये इत्यादि ॥१२३॥ सष्ठम् ॥१२४॥

॥ इति द्वितीयपादः ॥

## नमस्पुरसो गतेः कखपफि रः सः ॥२।३।१॥

स्यान्नमस्पुरसोर्नित्यं, शब्दयोर्गतिसंज्ञयोः ॥
कखपफेषु रेफस्य, सत्वं देवान्नमस्कुरु ॥ १ ॥

## तिरसो वा ॥२।३।२॥

गतिसंज्ञतिरोरस्य, सो वा स्यात् कखयोः पफोः ॥
तिरस्करोति यो धर्मं, तिरःकर्त्ता स आत्मनः ॥ २ ॥

## पुंसः ॥२।३।३॥

पुंसः शब्दस्य रेफस्य, सत्वं कखपफेषु वै ॥
पुंस्कोकिलः कुहूं कृत्वा, पान्थान् हन्ति वियोगिनः ॥३॥

## शिरोऽधसः पदे समासैक्ये ॥२।३।४॥

पदशब्दे समासैक्ये, रः सत्वं शिरसोऽधसः ॥
कृत्वा शिरस्पदं विष्णु-र्नीतवान् तमधस्पदम् ॥४॥

---

एवं पुरस्कुरुप्रभृतिः । गत्यभावे तु नमः कृत्वा, तिरः पुरः करोति इत्यादि ॥१॥ गत्यभावे तु तिरः कृत्वा काष्ठं गत इत्येव ॥२॥ एवं पुंस्खातः, पुंस्पाकः, पुंस्फलमित्याद्यवसेयम् ॥३॥ विष्णुः—विष्णुकुमाराभिधानो मुनिः शिरस्पदं नमुच्यमात्यस्य शिरसि पदं चरणं कृत्वा—तं मन्त्रिणमधस्पदं नीतवानिति । एवमेव बलिनमतिदानिनं विष्णुः प्रसिद्धस्तथा कृतवानिति वृत्तं व्यक्तं पुराणे । समासाभावे तु शिरः पदम् इत्यादौ न ॥४॥

## अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य ॥२।३।५॥

अनव्ययस्य रेफस्या-स्तस्य कृकमादिषु ॥
सत्वं भवेत् समासेऽस्ये, पयस्पात्रमयस्कृतम् ॥ ५ ॥

## प्रत्यये ॥२।३।६॥

अनव्ययस्य यो रेफ-स्तस्य सत्वं तु प्रत्यये ॥
कादौ पादौ यशस्कल्पं, जगज्जनः प्रबोधतात् ॥ ६ ॥

## रोः काम्ये ॥२।३।७॥

अनव्ययस्य रेफस्य, रोरेव काम्यप्रत्यये ॥
सत्वं भवेन्नरो नूनं, यशस्काम्यन् हितं चरेत् ॥७॥

## नामिनस्तयोः षः ॥२।३।८॥

काम्ये रोरेव कादौ षः, प्रत्यये रस्य नामिनः ॥
धनुष्पाशं धनुष्कल्पं, धानुष्कः क्रमते धनुः ॥८॥

## निर्दुर्बहिराविष्प्रादुश्चतुराम् ॥२।३।९॥

निरादीनां कपादौ तु, षत्वं रेफस्य जायते ॥
दुष्कृतं चेद् बहिष्कर्तुं, वाञ्छस्याविष्कुरुस्वमम् ॥९॥

---

एवं—यशस्कामः, पयस्कंसः, अयस्कुम्भः, अयस्कुशा, अयस्कर्णी इत्यादि। सत्वं इति वाक्यान्तम्। अनव्ययस्येति स्वःकारः। समासेऽस्य इति उपपयः-कारः ॥५॥ स्वःपाशानित्यत्रानव्ययत्वाभावात् सत्वं न ॥६॥ रोरित्येव—अहः-काम्यति ॥७॥ प्रत्ययस्थे कवर्गादि, रोरेव च काम्ये नामिनः परस्य रस्य षः स्यादिति सूत्रार्थः। नामिन इति अयस्कल्पम्। रोः काम्ये इति गी-ष्काम्यति ॥८॥ एवं निष्क्रमिहम्, प्रादुष्कृतम्, चतुष्पात्रम् ॥९॥

## सुचो वा ॥२॥३॥१०॥

करवपफि सुजन्तानां, रस्य षत्वं विभाषया ॥
द्विष्कुरु त्वं स त्रिष्कुर्यात्, कर्तव्यमसकृच्छुभम् ॥१०॥

## वेसुसोऽपेक्षायाम् ॥२॥३॥११॥

स्यादिसुस्प्रत्ययान्तस्य, रस्य षः करवयोः पफोः ॥
वाऽपेक्षायां धनी सर्पिष्, खादति वै धनुष्पतिः ॥११॥

## नैकार्थेऽक्रिये ॥२॥३॥१२॥

एकार्थे चाक्रिये नस्यात्, षत्वं रेफस्य पूर्ववत् ॥
सर्पि ≍ कालकमद्यानो, वपु ≍ पीतं नु पाण्डुना ॥१२॥

## समासेऽसमस्तस्य ॥२॥३॥१३॥

रस्येसुस्प्रत्ययान्तस्य-पोऽसमस्तस्य कादिषु ॥
नित्यं तौ द्वौ समासे चेत्, सर्पिष्पानं मधौ हितम् ॥१३॥

## भ्रातुष्पुत्रकस्कादयः ॥२॥३॥१४॥

भ्रातुष्पुत्रादयः कस्का-दयो ज्ञेया निपातिताः ॥
कृतपसाः क्रमात् कस्को, भ्रातुष्पुत्रश्च पुत्रकः ॥१४॥

---

पक्षे द्विः≍करोति, द्विःकरोतीत्यादि ॥१०॥ पक्षे सर्पिः≍खादतीत्यादि । अपेक्षायामित्येव परमसर्पिः≍कुण्डम् ॥११॥ अस्यार्थः—न विद्यते क्रियाप्रवृत्तिनिमित्तं यस्य तस्मिन् एकार्थे–तुल्याधिकरणे पदे यत् कखपफं तस्मिन् परे इसुस् प्रत्ययान्तस्य रस्य षो न स्यादिति ॥१२॥ पूर्वेणाऽसमस्तस्य इसुस् प्रत्ययान्तस्य रस्य कखपफि षः स्यात् , निमित्त–निमित्तिनौ चेदेकत्र समासे स्तः इत्यर्थः । मधौ–वसन्ते सर्पिष्पानं–घृतपानं हितम् , तथाचायुर्वेदः—'वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमन्ते । शिशिरे चामलकरसो, घृतं वसन्ते गुडश्चान्ते '. इति ॥१३॥ स्पष्टम् ॥१४॥

**नाम्यन्तस्थाकवर्गात् पदान्तः कृतस्य सः शिड्नान्तरेऽपि ॥२।३।१५॥**

नाम्यन्तस्थाकवर्गात् स्यात्, व्यवधानेऽपि नः शिटः ॥
कृतस्य पदमध्यस्य, सस्य षो नृषु पौरुषम् ॥१५॥

**समासेऽग्नेः स्तुतः ॥२।३।१६॥**

अग्निशब्दात् समासे तु, सस्य षत्वं स्तुतो भवेत् ॥
स्यान्नूनं निर्भयो वह्ने-रग्निष्टुत् कमठो जनः ॥१६॥

**ज्योतिरायुर्भ्यां च स्तोमस्य ॥२।३।१७॥**

आयुषो ज्योतिषश्चाग्नेः, स्तोमस्य सस्य षो भवेत् ॥
आयुष्टोमं यजेद्देव, ज्योतिष्टोमं च वेदविद् ॥१७॥

**मातृपितुः स्वसुः ॥२।३।१८॥**

समासे मातृपितृभ्यां, षत्वं सस्य भवेत् स्वसुः ॥
मातृष्वसा स्वसा मातुः, पितृष्वसा पितुः स्वसा ॥१८॥

**अलुपि वा ॥२।३।१९॥**

समासेऽलुपि षो वा स्यात्, मातृपितृपरस्वसुः ॥
मातुःष्वसा स्वसा मातुः, पितुःष्वसा पितुःस्वसा ॥१९॥

---

नाम्यन्तस्थाकवर्गेभ्यः परस्य पदस्यान्तर्मध्ये कृतस्य कृतस्यस्य वा सस्य स्यात्, शिटा नकारेण चान्तरेऽपि इत्यर्थः । पदान्तरिति-दधिसेक् । कृतस्येति विसम् ॥१५॥ अग्निष्टुत् कमठो जनः वह्नेः निर्भयो नूनं स्यादित्यन्वयः ॥१६॥ एवमग्निष्टोम इति । समासाभावे तु ज्योतिः स्तोमं याति ॥१७॥ स्पष्टम् ॥१८॥ विकल्पपक्षे मातुःस्वसेत्यादि ॥१९॥

## निनद्याः स्नातेः कौशले ॥२॥३॥२०॥

स्यान्निनदीपरस्नातेः, सस्य षत्वं नु कौशले ॥
निष्णातः सोऽपि किं कुर्या-न्न नदीष्णो नदीरये ॥२०॥

## प्रतेः स्नातस्य सूत्रे ॥२॥३॥२१॥

सूत्रमात्रे समासे स्यात्, प्रतेः स्नातस्य सस्य षः ॥
शुद्धं सूत्रं प्रतिष्णातं शास्त्रे लोके नु सर्वथा ॥२१॥

## स्नानस्य नाम्नि ॥२॥३॥२२॥

स्नानस्य सस्य षो नाम्नि, सूत्रस्य विषये प्रतेः ॥
वृत्तौ सूत्रं प्रतिष्णानं, स्यात् प्रतिस्नानमन्यथा ॥२२॥

## वेः स्त्रः ॥२॥३॥२३॥

वेः स्तृणातेः समासे षो, नाम्नि सस्य नु जायते ॥
विष्टरे विष्टरं कृत्वा, विस्तरं वचसां वद ॥२३॥

## अभिनिःष्टानः ॥२॥३॥२४॥

कृतषत्वोऽभिनिष्टानो, वृत्तौ नाम्नि निपात्यते ॥
विसर्गार्थोऽभिनिष्टानो, वर्णार्थः कस्यचिन्मते ॥२४॥

---

एवं निष्णो, नदीष्णात इत्याद्यवसेयम् । अकौशले तु निस्नातः, नदीस्न इत्यादि. ॥२०॥ शास्त्रेऽतिव्याप्त्यादिदोषरहितं लोके तु प्रक्षालितमूर्णादिसूत्रं 'प्रतिष्णात'मुच्यते ॥२१॥ प्रतेः परस्य स्नानस्य सस्य वृत्तौ-समासे षः स्यात् सूत्रस्य विषये नाम्नि ॥२२॥ विष्टरे-वृक्षतल इत्यर्थः, विष्टरो वृक्षः, विष्टरं-पीठं कृत्वा वचसां विस्तरं-विस्तारं वद । विस्तरमित्यत्र नामाभावात् षत्वाभावः ॥२३॥ स्पष्टम् ॥२४॥

## गवियुधेः स्थिरस्य ॥२।३।२५॥

वृत्तौ गवियुधीत्याभ्यां, नाम्नि स्थिरस्य सस्य षः ॥
धर्मात्मा नानृतं ब्रूते, गविष्ठिरो युधिष्ठिरः ॥२५॥

## एत्यकः ॥२।३।२६॥

स्यात् कवर्जितनाम्यन्त-स्याकवर्गान्तु सस्य षः ॥
समासे नाम्नि चैकारे, हरिषेणोऽभवन्नृपः ॥२६॥

## भादितो वा ॥२।३।२७॥

सस्यैति नाम्नि षत्वं वे-कारान्तादुडुवाचिनः ॥
वृत्तौ रोहिणिषेणः स, भाति रोहिणिसेनवत् ॥२७॥

## विकुशमिपरेः स्थलस्य ॥२।३।२८॥

विकुशमिपरेः सस्य, स्थलशब्दस्य षो भवेत् ॥
समासे विष्ठलं वीनां, पक्षिणां कुष्ठलं मतम् ॥२८॥

## कपेर्गोत्रे ॥२।३।२९॥

कपिशब्दात्परस्य स्या-द्गोत्रे स्थलस्य सस्य षः ॥
बीजी कपिष्ठलो नाम, यस्य कापिष्ठलः सुतः ॥२९॥

## गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निशेकुशङ्कु-
## कङ्गुमञ्जिपुञ्जिबर्हिः परमेदिवेः स्थस्य ॥२।३।३०॥

गोऽम्बादिभ्यः परं स्थस्य, समासे सस्य षो भवेत् ॥

---

'वृत्तौ समासे,' 'गवि-वाचि स्थिर' इति गविष्ठिरस्तन्नामको नृपः ॥२५॥ कवर्जनाद्-विष्वक्सेनः ॥२६॥ उडुवाचिनः-नक्षत्रवाचिनः इकारान्तात् परस्य सस्य षत्वं वा एकारे परे समासे नाम्नि । इत इति वसुषेणः ॥२७॥ एवं शमिष्ठलं, परिष्ठलम् ॥२८॥ बीजी-गोत्रप्रवर्तकः, वप्ता ॥२९॥ द्विष्टः

दिविष्ठोऽपि स भूमिष्ठो, त्रिष्ठस्त्रिष्ठश्च कुष्ठकः ॥३०॥

## निर्दुस्सोः सेधसन्धिसाम्नाम् ॥२॥३॥३१॥

निरादिभ्यः समासे स्यात्, सेधादीनां तु सस्य षः ॥
निःषेधः सर्वपापानां, कृतो येन सुषामवान् ॥३१॥

## प्रष्ठोऽग्रगे ॥२॥३॥३२॥

प्रात् परस्य सकारस्य, षत्वं स्थस्याग्रगे भवेत् ॥
अग्रगामी भवेत् प्रष्ठः, प्रस्थो धान्यस्य मापकः ॥३२॥

## भीरुष्ठानादयः ॥२॥३॥३३॥

भीरुष्ठानादयः शब्दाः, कृतषत्वा हि साधवः ॥
स्युः अ–सि–आ–उ–सा एते, पञ्चापि परमेष्ठिनः ॥३३॥

## ह्रस्वान्नाम्नस्तिः ॥२॥३॥३४॥

नामतो विहिते तादौ, प्रत्यये सस्य षो भवेत् ॥
परस्य नामिनो ह्रस्वा–न्निष्ठ्यो जातु न जातिमान् ॥३४॥

## निसस्तपेरनासेवायाम् ॥२॥३॥३५॥

तादौ निसस्तपेः सस्या–नासेवायां तु षो भवेत् ॥

---

त्रिष्ठः कुष्टकः–कुष्ठरोगाभिभूतः सन् नैकत्र स्थायी स दिविष्ठोऽपि भूमिष्ठ इत्यर्थः । एवं गोष्ठम् , अम्बष्ठः, आम्बष्ठः, सव्यष्ठः, अपष्ठः, अग्निष्ठः, शेकुष्ठः, शङ्कुष्ठः, अङ्गुष्ठः, मञ्जिष्ठः; पुञ्जिष्ठः, वर्हिष्ठः, परमेष्ठः, इत्याद्यवसेयम् ॥३०॥ येन सर्वपापानां निषेधः कृतः स सुषामवान् इति ॥३१॥ स्पष्टम् ॥३२॥ भीरुष्ठानादिराकृतिगणः । परमेष्ठिन्नित्यादयोऽप्यत्र ॥३३॥ निर्गतोवर्णाश्रमेभ्य इति निष्ठ्यः 'निसो गते' ।६।३।१८। इति त्यच् । निष्ठ्यः चण्डालः । सर्पिष्टादयो बोध्या ॥३४॥ निष्टप्तं–सकृत्तप्तम् । निस्तप्तं–भूयो

स्वर्णं शुद्धं न निष्टप्तं, निस्तप्तं ननु काञ्चनम् ॥३५॥

## घस्वसः ॥२॥३॥३६॥

नाम्यन्तस्थाकवर्गात् स्याद्, घसेर्वसेश्च सस्य षः ॥
उपोषिता जना जक्षु-राहारं न चतुर्विधम् ॥३६॥

## णिस्तोरेवास्वदस्विदसहः षणि ॥२॥३॥३७॥

ण्यन्तानां स्तोश्च नाम्यादेः, सस्य षः षणि सन्परे ॥
स्वदृस्विदृसहां न तुष्टूषा, सिषेवयिषतां वरा ॥३७॥

## सञ्जेर्वा ॥२॥३॥३८॥

ण्यन्तसञ्जेः परे सन्षे, नाम्यादेः सस्य षो नवा ॥
सिषञ्जयिषति क्रूरो, मोहः संसारपावकम् ॥३८॥

## उपसर्गात् सुग्सुवसोस्तुस्तुभोऽटयप्यद्वित्वे ॥२॥३॥३९

उपसर्गस्थनाम्यादेः, सुग्सुवादेर्नु सस्य षः ॥
अडागमेऽपि न द्वित्वे, परिष्टौति बुधो बुधान् ॥३९॥

## स्थासेनिसेधसिचसञ्जां द्वित्वेऽपि ॥२॥३॥४०॥

उपसर्गस्थनाम्यादेः, स्थादीनां सस्य षो भवेत् ॥
द्वित्वेऽप्यटाऽन्तरेणापि, मूढं प्रत्यषिषेधिषत् ॥४०॥

## अङ्प्रतिस्तब्धनिस्तब्धे स्तम्भः ॥२॥३॥४१॥

ङप्रतिस्तब्धनिस्तब्धान्, त्यक्त्वा स्तम्भस्य सस्य षः ॥

---

भूयस्तप्तमिति ॥३५॥ अशन-पान-खादिम-स्वादिमभेदादाहारश्चतुर्विधः ॥३६॥ स्पष्टम् ॥३७॥ पक्षे सिसञ्जयिषति ॥३८॥ अद्वित्व इति किम् ? अभिसुसूति ॥३९॥ स्पष्टम् ॥४०॥ पूर्ववदिति-उपसर्गस्थान्नाम्यादेः द्वित्वेऽप्यट्यपि

पूर्ववत् स्यात् वितष्टम्भ, वादे वाचः स वादिनाम् ॥४१॥

## अवाच्चाश्रयोर्जाविदूरे ॥२॥३॥४२॥

गम्यमानाश्रयाद्यर्थे, स्तम्भस्य सस्य षो ऽन्ववात् ॥
द्वित्वेऽप्यटचपि ङश्चेन्नो, सोऽवष्टम्नान्महापुरम् ॥४२॥

## व्यवात् स्वनोऽशने ॥२॥३॥४३॥

द्वित्वे ङेऽटचपि सः षः स्याद्, स्वनोऽशने च वेरवात् ॥
विष्वणति स भुङ्क्ते वा, भुङ्क्ते तु शब्दपूर्वकम् ॥४३॥

## सदोऽप्रतेः परोक्षायां त्वादेः ॥२॥३॥४४॥

उपसर्गस्थनाम्यादे-र्द्वित्वेऽटचपि सदोऽप्रतेः ॥
सस्य षस्तु परोक्षाया-मादेर्मूढो विषीदति ॥४४॥

## स्वञ्जश्च ॥२॥३॥४५॥

उपसर्गस्थनाम्यादेः, स्वञ्जेः सस्य षो भवेत् ॥
द्वित्वेऽटचपि परोक्षाया-मादेरेवाभिषस्वजे ॥४५॥

## परिनिवेः सेवः ॥२॥३॥४६॥

परिनिव्युपसर्गस्थात्, सेवतेः सस्य षो भवेत् ॥

---

इत्यनुसन्धेयम् ॥४१॥ उक्तोदाहरणमाश्रयार्थकम्, ऊर्जः-और्जित्यम्-तत्र अहो ? वृषलस्यावष्टम्भः । अविदूरम्-आसन्नम् अदूरासन्नं च तत्र अवष्टब्धा शरत्, अवष्टब्धे सेने । चोऽनुक्तसमुच्चये तेन उपष्टम्भः । अङ् इति अवातस्तम्भत् ॥४२॥ अनशने तु विस्वनति मृदङ्गः ॥४३॥ परोक्षायां त्वादेरिति निषसाद, प्रतिवर्जनात् प्रतिसीदति ॥४४॥ स्पष्टम् ॥४५॥ 'यो ध्रुवाणि परित्यज्य, ह्यध्रुवं परिषेवते । ध्रुवाणि तस्य नश्यन्ति, ह्यध्रुवं नष्टमेव च

द्वित्वेऽप्यट्यपि चाश्वल्या–न्भष्टोऽध्रुवं निषेविता ॥४६॥

सयसितस्य ॥२॥३॥४७॥

सयसितोभयोः सस्य, षत्वं परिनिवेः परम् ॥
रूपगन्धरसस्पर्श–शब्दाश्च विषया अमी ॥४७॥

असोङसिवूसहस्सटाम् ॥२॥३॥४८॥

परिनिवेः परं सस्य, सडागमसिवूसहाम् ॥
षत्वं सिवूसहौ स्तश्चे–दसोडौ विष्किरः खगः ॥४८॥

स्तुस्वञ्जश्चाटि नवा ॥२॥३॥४९॥

परिनिवेः स्तुवः स्वञ्जो–ऽसोङसिवूसहस्सटाम् ॥
सकारस्याटि वा षत्वं, पर्यष्टौत् स्वामिनं जनः ॥४९॥

निरभ्यनोश्च स्यन्दस्याप्राणिनि ॥२॥३॥५०॥

अप्राणिकर्तृकेऽर्थे वा, परिनिवेर्निरभ्यनोः ॥
परं सस्य तु षः स्यन्दे, तैलं निःष्यन्दते तिलात् ॥५०॥

वेः स्कन्दोऽक्तयोः ॥२॥३॥५१॥

विपूर्वाद् स्कन्दतेर्धातोः, सस्य षत्वं विभाषया ॥
न चेत् क्तक्तवतू स्यातां, विष्कन्तैनः स भाग्यवान् ॥५१॥

---

॥१॥ इतिश्लोकोद्बोधकमुदाहरणम् ॥४६॥ एवं निपितावुन्नेयमिति ॥४७॥ परिषीव्यति, परिषहते इत्याद्यवसेयम् । असोटेति परिसोढः, मापरिसीषिवदि- त्यादौ षत्वं न ॥४८॥ एतत्सम्भवोदाहरणसमूहः समूह्यः । विकल्पपक्षे पर्यस्तौ- दित्यादि ॥४९॥ विकल्पे तु निःस्यन्दते इत्यादि । प्राणिनि तु परिस्यन्दते मत्स्य इत्येव, न षत्वम् ॥५०॥ यः एनः–पापं विष्कन्ता स भाग्यवानिति । विकल्पे विस्कन्तेत्यादि । अक्तयोरिति विस्कन्नः, विस्कन्नवान् ॥५१॥

परेः ॥२।३।५२॥

परेः परस्य वा स्कन्देः, सस्य पः स्यात् क्तयोरपि ॥
परिष्कन्ना परिस्कन्ना, मूलं शास्त्रस्य दुर्जनः ॥५२॥

निर्नेः स्फुरस्फुलोः ॥२।३।५३॥

षो वा स्फुरस्फुलोः सस्य, निर्निभ्यां परयोर्भवेत् ॥
निष्फुलति च निःस्फुल्लो, निष्फुरेदथ निस्फुरः ॥५३॥

वेः ॥२।३।५४॥

स्फुरस्फुलोर्विकल्पेन, वेः परस्य तु सस्य पः ॥
विष्फुरेद्विस्फुरेद्वापि, ज्ञानं ज्ञानिजने सदा ॥५४॥

स्कभ्नः ॥२।३।५५॥

स्कभ्नातेर्वेः परस्य स्यात्, षत्वं सस्य तु नित्यशः ॥
विष्कम्भकं विना नव, रम्यं भवति नाटकम् ॥५५॥

निर्दुःसुवेः समसूतेः ॥२।३।५६॥

समसूत्योः सकारस्य, षत्वं निर्दुःसुवेः परम् ॥
सुषूतिरपि दुःषूति–र्दुषमे सुषमेऽन्यथा ॥५६॥

अवः स्वपः ॥२।३।५७॥

वोज्झितस्य स्वपेर्निर्दुः–सुविभ्यः सस्य षो भवेत् ॥
सुषुप्ता ज्ञानिनो जाड्ये, दुःषुप्ताः सत्पथे जडाः ॥५७॥

---

सूत्रत्रयं स्पष्टम् ॥५२॥५३॥५४॥ 'वृत्तवर्तिष्यमाणानां, कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ, आदावङ्कस्य दर्शितः ॥६।५५॥ ' (सा. द.) इत्युक्तलक्षणो विष्कम्भकः ॥५५॥ एवं निःषमः, विषमः इत्यादि ज्ञेयम् ॥५६॥ अव इति किम् ? दुःस्वप्नः ॥५७॥

## प्रादुरुपसर्गाद्यस्वरेऽस्तेः ॥२॥३॥५८॥

प्रादुस्त उपसर्गाच्च, नाम्यन्ताद्यस्वरे परे ॥
सस्य षोऽस्तेर्भवेत् प्रादुः, प्रादुष्याद्भिपन्ति ते ॥५८॥

## न स्सः ॥२॥३॥५९॥

कृतद्वित्वसकारस्य, सस्य षत्वं न जातुचित् ॥
दधिस्यन्तः सुपिस्स्यन्ते, मधुस्यँश्च सुतुस्स्यते ॥५९॥

## सिचो यङि ॥२॥३॥६०॥

सिञ्चतेस्तु सकारस्य, षत्वं न यङि प्रत्यये ॥
सेसिच्यते तु पुष्पस्या-ऽऽलवालं मालिको जनः ॥६०॥

## गतौ सेधः ॥२॥३॥६१॥

सकारस्य न षत्वं स्या-द्गत्यर्थकस्य सेधतेः ॥
शिशून् विसेधतो गङ्गां, निषेधन्ति हितैषिणः ॥६१॥

## सुगः स्यसनि ॥२॥३॥६२॥

सुनोतेः सस्य षत्वं न, स्याच्च स्ये सनि प्रत्यये ॥
यदि नो मानसं पूतं, कथं त्वमभिसोष्यसि ॥६२॥

---

प्रादुः–प्रकाशः प्रादुष्यात् । तेऽभिपन्ति । यस्वरे इति किम् ? प्रादुःस्तः ॥५८॥ दधि अत्तुमिच्छन्तो दधिस्यन्तः एवं मधु अत्तुमिच्छन् मधुस्यन् सष्टमन्यत् ॥५९॥ स्पष्टम् ॥६०॥ विसेधतः प्रविशत इत्यर्थः शेषं स्पष्टम् ॥६१॥ अभिशोष्यसि–शुद्धो भविष्यसीत्यर्थः । सुसूषति–सनि ॥६२॥

**रषृवर्णान्नो ण एकपदेऽनन्त्यस्यालचटवर्ग-शसान्तरे ॥२॥३॥६३॥**

रषृवर्णात् परं नस्या—नन्त्यस्यैकपदे भवेत् ॥
णत्वं लादिव्यवाये नो, नृणां न्याय्यं धनार्जनम् ॥६३॥

**पूर्वपदस्थान्नाम्न्यगः ॥२॥३॥६४॥**

रषृभ्यः प्राक्पदस्थेभ्यो ऽगान्तेभ्य उत्तरे पदे ॥
नस्य णत्वं भवेच्चन्द्र—णखा नारी सुलक्षणा ॥६४॥

**नसस्य ॥२॥३॥६५॥**

रषृभ्यः प्राक्पदस्थेभ्यो, नसशब्दस्य नस्य णः ॥
प्रणसा तरुणी कामं, शोभते नैव निर्णसा ॥६५॥

**निष्प्रागेऽन्तःखदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य ॥२॥३॥६६॥**

निराद्यैकादशभ्यः स्या—द्वनशब्दस्य नस्य णः ॥
वसन्ते कोकिलाकीर्णं, विभात्याम्रवणं नवम् ॥६६॥

**द्वित्रिस्वरौषधिवृक्षेभ्यो नवानिरिकादिभ्यः ॥२॥३॥६७॥**

द्वित्रिस्वरौषधिवृक्ष—वाचिभ्योऽनिरिकादितः ॥

---

तीर्णम् , पुष्णाति, नृणाम्, करणम् , बृंहणम् , अर्केणेत्याद्यवसेयम् । एकपद इति अग्निर्नयति, चर्मनासिकः । अनन्त्यस्येति वृक्षान् । लादिवर्जनात्—विरलेनेत्यादि ॥६३॥ नामाभावे तु मेषनासिकः । अग इति ऋगयनम् ॥६४॥ प्रगता नासिका यस्याः सा प्रणसा, एवं निर्गता नासिका यस्याः सा निर्णसा ॥६५॥ एवं निर्वणादयो ज्ञेयाः ॥६६॥ वैकल्पिकत्वाद् दूर्वावनमित्यादि । ;; इरिकादि-

वनस्य नस्य णत्वं वा, दूर्वावणं सदाहितम् ॥६७॥

## गिरिनद्यादीनाम् ॥२॥३॥६८॥

गिरिनद्यादिशब्दानां, नस्य णत्व विभाषया ॥
गिरिणद्यां जलं प्रायो, वर्षास्वेवावतिष्ठते ॥६८॥

## पानस्य भावकरणे ॥२॥३॥६९॥

भावे च करणे पूर्व-पदस्थरषृवर्णतः ॥
पानस्य नस्य णत्वं वा, क्षीरपाणं बलप्रदम् ॥६९॥

## देशे ॥२॥३॥७०॥

रषृभ्यः प्राक्पदस्थेभ्यो, नित्यं पानस्य नस्य णः ॥
देशेऽर्थे समुदायश्चेत्, क्षीरपाणा उशीनराः ॥७०॥

## ग्रामाग्रान्नियः ॥२॥३॥७१॥

ग्रामाग्राभ्यां परं नस्य, नियो णत्वं भवेद् ध्रुवम् ॥
ग्रामणीः समभावेन, त्वग्रणीर्जायते जनः ॥७१॥

## वाह्याद्वाहनस्य ॥२॥३॥७२॥

वोढव्यवाचिनः पूर्व-पदाद्रादिमतो मतः ॥
नस्य णो वाहनस्येक्षु-वाहणं क्लेशभञ्जनम् ॥७२॥

## अतोऽह्नस्य ॥२॥३॥७३॥

पूर्वपदादकारान्ता-द्रादितोऽह्नस्य नस्य णः ॥

---

र्जैनामिरिकावनदित्यादौ णत्वं न ॥६७॥ विकल्पपक्षे गिरिनदीत्यादि ॥६८॥
ीरपानमित्यादि विकल्पपक्षे ॥६९॥ देशाभावे तु क्षीरपाना गोदुहः इति ॥७०॥
ष्टम् ॥ ७१ ॥ वाह्यादिति किम् ? सुरवाहनम् ॥ ७२ ॥ अत इति

प्राह्णपराह्णमध्याह्ना–स्त्रिसन्ध्यं कालसन्धिना ॥७३॥

चतुस्त्रेर्हायनस्य वयसि ॥२॥३॥७४॥

वयसि गम्यमाने त्रि–चतुर्भ्यां हायनस्य नः ॥
णः स्यात्त्रिहायणो वत्सः, स्याच्चतुर्हायणः क्रमात् ॥७४॥

वोत्तरपदान्तस्यादेरयुवपक्वाह्नः ॥२॥३॥७५॥

स्यादुत्तरपदान्तस्य, स्यादेश्च नागमस्य वा ॥
नस्य णोऽयुवपक्वाह्नः, पूर्ववद् व्रीहिवापिणः ॥७५॥

कवर्गैकस्वरवति ॥२॥३॥७६॥

रादेः परं कवर्गैक–स्वरभाज्युत्तरे पदे ॥
पूर्ववद् नस्य णत्वं नो–ऽपक्वस्य स्वर्गकामिणः ॥७६॥

अदुरुपसर्गान्तरो णहिनुमीनानेः ॥२॥३॥७७॥

स्याद् दुर्वर्जोपसर्गस्था–ऽन्तःशब्दस्थरषादितः ॥
णो णोपदेशधातूनां, हिन्वादेर्नस्य प्राणमत् ॥७७॥

नशः शः ॥२॥३॥७८॥

स्याद् दुर्भिन्नोपसर्गस्था–न्तः शब्दस्थरषादितः ॥
नशेः शान्तस्य णो नस्य, विश्वस्तो नु प्रणश्यति ॥७८॥

---

दुरह्नः ॥७३॥ चतुर्हायना शालेत्यादौ वयोऽभावान्न णत्वम् ॥७४॥ विकल्पपक्षे व्रीहिवापिनः इत्यादि । युवादिवर्जनाद् आर्ययूनी, प्रपक्वानि, दीर्घाह्नी शरदित्यादि ॥७५॥ पक्ववर्जनात् क्षीरपक्वेन ॥७६॥ दुर्वर्जनात् दुर्नयः ॥७७॥ श इति प्रनङ्क्ष्यति ॥७८॥

**नेर्ङ्मादापतपदनदगदवपीवहीशमूचिग्याति-वातिद्रातिप्सातिस्यतिहन्तिदेग्धौ ॥२।३।७९॥**

पूर्ववद्रादितो ज्ञेयं, णत्वं नेर्नस्य नित्यशः ॥
मादापतपदाद्येषु, प्रणिद्रात्यलसो जनः ॥७९॥

**अकखाद्यषान्ते पाठे वा ॥२।३।८०॥**

पाठेऽकखाद्यपान्ते वा, धातौ नेर्नस्य णो भवेत् ॥
स्याददुरुपसर्गान्तः—स्थाद्रादेः प्रणिपात्यते ॥८०॥

**द्वित्वेऽप्यन्तेप्यनितेः परेस्तु वा ॥२।३।८१॥**

द्वित्वेऽद्वित्वेऽप्यनन्तेऽन्ते, उपसर्गस्थरादितः ॥
अनितेर्नस्य णोऽन्तस्तो, वा परेरदुरः पराण् ? ॥८१॥

**हनः ॥२।३।८२॥**

स्याददुरुपसर्गान्तः—स्थाद्रादेर्नस्य णो हनः ॥
प्रहण्यते सदा सद्भिर्दुष्कृतं नैव सत्कृतम् ॥८२॥

**वमि वा ॥२।३।८३॥**

स्याददुरुपसर्गान्तः—स्थाद्रादेर्वे च मे परे ॥
हन्धातोर्नस्य णो वाऽहं, प्रहण्मि कर्म धर्मतः ॥८३॥

---

स्पष्टम् ॥७९॥ अकखादीति प्रनिकरोति, प्रनिखनति । अषान्तेति प्रनिद्वेष्टि । पाठ इति प्रनिचकार विकल्पपक्षे प्रनिपात्यते ॥८०॥ हे पर्यण् ! हे पर्यन् ! इत्याद्यवसेयम् ॥८१॥ स्पष्टम् ॥८२॥ विकल्पपक्षे प्रहन्मि इत्यादि ॥८३॥

निंसनिक्षनिन्दः कृति वा ॥२॥३॥८४॥

स्याददुरुपसर्गान्तः—स्थाद्रादेर्नस्य णो नवा ॥
कृति निंसादिधातूनां, प्रणिन्दनं प्रणिंसनम् ॥८४॥

स्वरात् ॥२॥३॥८५॥

स्याददुरुपसर्गान्तः—स्थाद्रादितः कृतश्च नः ॥
स्वरात् परस्य णो नित्यं, प्रयाणं त्वरितं शुभम् ॥८५॥

नाम्यादेरेव ने ॥२॥३॥८६॥

स्याददुरुपसर्गान्तः—स्थाद्रादेर्नागमे सति ॥
नाम्यादेः स्वरतः कृन्नो, णत्वं तु प्रेङ्खणं मधौ ॥८६॥

व्यञ्जनादेर्नाम्युपान्त्याद्वा ॥२॥३॥८७॥

नस्य णो व्यञ्जनादेश्च, नाम्युपान्त्याद्विभाषया ॥
पूर्ववद् दुर्गतिं दत्ते, प्रकोपिणां प्रकोपणम् ॥८७॥

णेर्वा ॥२॥३॥८८॥

ण्यन्तात् कृतस्य णत्वं वा, स्वरात् परं कृतो भवेत् ॥
पूर्ववत् सर्वशास्त्रेषु, प्रमापणं परीक्ष्यते ॥८८॥

निर्विण्णः ॥२॥३॥८९॥

सत्तालाभविचारार्थाद्, निर्विदेः क्तस्य नस्य णः ॥

---

कृत्यप्रत्ययाभावे तु प्रणिंस्ते इत्याद्येव ॥८४॥ स्पष्टम् ॥८५॥ प्रेङ्खणम्—दोलाक्रीडनम् ॥८६॥ स्वरा–२–३–८५–दिति नित्यप्राप्ते विभाषेयम् । प्रोहणम्, प्रवपणम्, प्रभुग्नः, दुर्मोहनः, प्रभेदनम् इत्यादि प्रतिपक्षीयोदाहरणतयाऽवसेयम् ॥८७॥ विकल्पपक्षे प्रमापनमित्यादि ॥८८॥ निर्विण्णः—

निपात्यते स निर्विण्णः, प्राव्राजीन् मुनिसन्निधौ ॥८९॥

## न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च ॥२॥३॥९०॥

ण्यन्तेभ्यः ख्यादिकेभ्यश्च, कृतो नो णो न पूर्ववत् ॥
प्राख्यानं सुन्दरं तेषां, भवेयुर्ये प्रभाविनः ॥९०॥

## देशेऽन्तरोऽयनहनः ॥२॥३॥९१॥

देशार्थेऽन्तःपरं हन्ते-श्चायनस्य न नस्य णः ॥
देशोऽन्तरयनो वान्त-र्हननो विषयोऽवरः ॥९१॥

## षात् पदे ॥२॥३॥९२॥

पदे परे षकारात् स्या-न्निमित्तान्नस्य णो न वै ॥
सर्पिष्पानं यजुष्पानं, दुष्पानं कथमुच्यते ॥९२॥

## पदेऽन्तरेऽनाङ्यतद्धिते ॥२॥३॥९३॥

आङन्तं तद्धितान्तं च, त्यक्त्वाऽन्यस्मिन् पदे परे ॥
व्यवधाने न णो नस्य, रोषभीममुखेन किम् ? ॥९३॥

## हनो घि ॥२॥३॥९४॥

हन्तेर्घे नस्य नो णत्वं, स्यान्निमित्तनिमित्तिनोः ॥
अन्तरे सति वृत्रघ्नः, शत्रुघ्नता हि युज्यते ॥९४॥

---

संसारोऽसार इति विचारतस्तत्त्यागाय तत्परः ॥८९॥ अस्यार्थः—अदुरुपसर्गान्तः— स्थाद् रादेः परेभ्यः ख्यादिभ्योऽण्यन्त—ण्यन्तेभ्यः परस्य कृतो नो ण् न स्यादिति ॥९०॥ देश इति किम् ? अन्तरयणम्, अन्तर्हण्यते ॥९१॥ पदाभावे तु सर्पिष्केणेत्यादि ॥९२॥ अनाङीति किम् ? प्राणद्धम्, अतद्धित इति किम् ? आर्द्रगोमयेण ॥९३॥ सष्टम् ॥९४॥

नृतेर्यङि ॥२॥३॥९५॥

नृतेर्धातोर्नकारस्य, णत्वं यङ्विषये न वै ॥
वर्षासु व्याकुलं बर्हीं, नर्नृति न शरत्स्थितौ ॥९५॥

क्षुभ्नादीनाम् ॥२॥३॥९६॥

क्षुभ्नादीनां नकारस्य, णत्वं नैव प्रजायते ॥
आचार्य्यानी सुशिष्याणा–मपि पूज्या यथा गुरुः ॥९६॥

पाठे धात्वादेर्णो नः ॥२॥३॥९७॥

पाठस्य विषये धातो–राद्यस्य णस्य नो भवेत् ॥
बुधा नयन्ति सत्कार्य–मात्मानं नतु दुष्कृतौ ॥९७॥

षः सोऽष्ट्यैष्ठिवष्वष्कः ॥२॥३॥९८॥

धात्वादेस्तु षकारस्या–ष्ट्यैष्ठिवष्वष्कयोगिनः ॥
सत्त्वं सिञ्चत भो लोकाः, पीयूषवचसा सदा ॥९८॥

ऋर ऌलं कृपोऽकृपीटादिषु ॥२॥३॥९९॥

कृप्धातोरकृपीटादौ, ऋतो रस्य च ऌच लः ॥
शर्मणेऽध्ययनं क्लृप्तं, भक्तिर्ज्ञानाय कल्पते ॥९९॥

उपसर्गस्यायौ ॥२॥३॥१००॥

उपसर्गस्य लो रस्य, धातावयि गतौ परे ॥

---

यङभावे तु हरिणर्त्ती नाम कश्चित् ॥९५॥ क्षुभ्नातीत्याद्याकृतिगणः ॥९६॥ पाठ इति किम्? णकारीयति । आदेरिति किम्? भणति ॥९७॥ आदिरित्येव लषति । ष्ट्यैप्रभृतिवर्जनात्, ष्ट्यायति ष्ठीव्यति, ष्वष्कते इत्यादि ॥९८॥ कृपीटादिवर्जनात्, कृपीटम्, कृपाणः इत्यादि ॥९९॥ एवं

क्लीबः पलायते युद्धा-न्न शूरः क्षतविक्षतः ॥१००॥

## ग्रो यङि ॥२॥३॥१०१॥

गिरते रस्य लत्वं स्यात्, प्रत्यये यङि नित्यशः ॥
किं निजेगिल्यते नासन्, स निगिरति गर्हितम् ॥१०१

## नवा स्वरे ॥२॥३॥१०२॥

गिरते रस्य लत्वं वा, स्वरादौ प्रत्यये परे ॥
गिरेद् गिलेद् महामत्स्यो, मत्स्यान् पापेन जन्मना ॥१०२

## परेर्घाङ्कयोगे ॥२॥३॥१०३॥

परे रेफस्य वा लत्व-मङ्के घे च परे भवेत् ॥
पलिघोऽस्त्रं न पल्यङ्कः, पर्यङ्कोऽङ्कस्तथासनम् ॥१०३॥

## ऋफिडादीनां डश्च लः ॥२॥३॥१०४॥

ऋफिडेत्यादिशब्दाना-मृरो लृलौ विभाषया ॥
डकारस्य च लत्वं स्याद्, लृफिडः ऋफिलः समौ ॥१०४

## जपादीनां पो वः ॥२॥३॥१०५॥

जपादीनां पकारस्य, वकारः स्याद्विभाषया ॥
कपाटः स्यात् कवाटोऽपि, त्रिविष्टपं त्रिविष्टवम् ॥

॥ इति तृतीयः पादः ॥

---

प्लायते, प्लत्ययते प्रमुखमवसेयम् ॥१००॥ स्पष्टम् ॥१०१॥ 'उदाहरणं रामायणीयश्लोकमसुद्बोधयति–तथाहि–' अस्ति मत्स्यस्तिमिर्नाम, तथाचास्ति तिमिङ्गिलः । तिमिङ्गिलगिलोऽप्यस्ति, तद्गिलोऽप्यस्ति लक्ष्मणः ॥१'॥१०२॥ विकल्पपक्षे परिघः। पलियोगः, परियोगः इति योगपरोदाहरणम्' ॥१०३॥ ऋफिडादयो जपादयश्च गणपाठतो विज्ञेयाः ॥१०४॥१०५॥

॥ इति तृतीयः पादः ॥

## स्त्रियां नृतोऽस्वस्रादेर्ङीः ॥२॥४॥१॥

नाम्नो नान्तादृदन्ताच्च, स्वस्रादिवर्जितात् स्त्रियाम् ॥
प्रत्ययो ङीर्भवेद्राज्ञी, छत्रिणी नतु दण्डिनी ॥१॥

## अधातूदृदितः ॥२॥४॥२॥

प्रत्ययोऽप्रत्ययो योदि–दृदिच्च धातुवर्जितः ॥
ङीस्तदन्तात् स्त्रियां नाम्नो, भवती विदुषी ध्रुवम् ॥२॥

## अञ्चः ॥२॥४॥३॥

अञ्चन्तान्नामतः स्त्रीत्वे, प्रत्ययो ङीनु जायते ॥
विपरीता प्रतीचीतो, ज्ञेया प्राची सदा त्वया ॥३॥

## णस्वराघोपाद्‌ वनो रश्च ॥२॥४॥४॥

णान्तात् स्वरान्ततोऽघोप–प्रान्ताद्यो वन् तदन्ततः ॥
स्त्रियां ङी रो वनोऽन्तस्य, धीवरी पापपीवरी ॥४॥

## वा बहुव्रीहेः ॥२॥४॥५॥

णस्वराघोपतो यो वन्, बहुव्रीहेस्तदन्ततः ॥
स्त्रियां ङीर्वा भवेद्रोऽन्तः, स्ववावा स्त्री स्ववावरी ॥५॥

---

अस्वस्रादेरिति ‘ स्वसा तिसश्चतसश्च, ननान्दा दुहिता तथा । यातामातेति सप्तैते, स्वस्रादय उदाहृताः ’ ॥१॥ धातुवर्जनात् सुकन् स्त्री ॥२॥ स्पष्टम् ॥ ॥३॥ धीवरीपीवरीत्यादि धीवन् पीवन्नित्यादि वन्प्रत्ययान्तस्यावसेयम् । णस्वराघोपादिति सहयुध्वा स्त्री ॥४॥ सुष्टु अवावा यस्या सा स्ववावा ॥५॥

## वा पादः ॥२॥४॥६॥

बहुव्रीहिनिमित्ताद्धि, पादान्ताद् ङीः स्त्रियां भवेत् ॥
स्याद् द्विपदी द्विपाद्युक्तो, द्विपदोऽपि चतुष्पदः ॥६॥

## ऊध्नः ॥२॥४॥७॥

ऊधस ऊधनन्ताद् ङी-र्बहुव्रीहेः स्त्रियां भवेत् ॥
कुण्डोध्न्यः पीवरोध्न्यश्च, गावोऽभूवन् नु भारते ॥७॥

## अशिशोः ॥२॥४॥८॥

अशिशोस्तु बहुव्रीहेः, स्त्रियां ङीः प्रत्ययो भवेत् ॥
न विद्यते शिशुर्यस्याः साऽशिश्वी वनिता मता ॥८॥

## सङ्ख्यादेर्हायनाद् वयसि ॥२॥४॥९॥

सङ्ख्यादेर्हायनान्ताद् ङी-र्बहुव्रीहेः स्त्रियां भवेत् ॥
वयोगम्ये प्रसूते सद्-गवी भायस्त्रिहायणी ॥९॥

## दाम्नः ॥२॥४॥१०॥

सङ्ख्यादेर्दामनन्ताद् ङी-र्बहुव्रीहेर्भवेत् स्त्रियाम् ॥
कण्ठे द्वे दामनी यस्या, द्विदाम्नी श्रीमती सदा ॥१०॥

## अनो वा ॥२॥४॥११॥

ङीर्वाऽन्नन्ताद् बहुव्रीहेः, स्त्रियामुपान्त्यलोपिनः ॥

---

पक्षे द्विपात्, द्विपदी नारी तस्या द्विपादौ ताभ्यां युक्तः द्विपदो नरोऽपि चतुष्पदः पशुः स्यादित्युदाहरणार्थः, पाणिपीडनान्तरं नरः पशुर्भवतीतिभावः ॥६॥ स्पष्टे ॥७॥८॥ त्रिहायणी त्रिवर्षा एवं चतुर्हायना शाला; ॥९॥ सङ्ख्यादेरित्येव उद्दामानमवलोकय ॥१०॥ स्पष्टे ॥११॥१२॥

बहुराज्ञी प्रजा दुःखं, बहुराजतयाऽऽप्नुयात् ॥११॥

## नाम्नि ॥२॥४॥१२॥

ङीरन्नन्ताद्बहुव्रीहेः, संज्ञायां नित्यशः स्त्रियाम् ॥
अधिराज्ञी सुराज्ञी च, ग्रामस्तन्नामकः श्रुतः ॥१२॥

## नोपान्त्यवतः ॥२॥४॥१३॥

ङीर्नोपान्त्यवतोऽन्नन्ताद्, बहुव्रीहेः स्त्रियां भवेत् ॥
सुपर्वा च सुशर्मा स्या-त्तपस्विनी सदात्मिका ॥१३॥

## मनः ॥२॥४॥१४॥

स्त्रियां ङीप्रत्ययो नाम्नो, मन्नन्तान्नैव जायते ॥
यः सीमानमतिक्रान्तः, पामा तस्य नु जायते ॥१४॥

## ताभ्यां वाऽऽप् डित् ॥२॥४॥१५॥

मन्नन्तान्नामतोऽन्नन्ताद्, बहुव्रीहेर्डिदाप् स्त्रियाम् ॥
विकल्पेन सुपर्वे ये, सुपर्वाणौ भविष्यतः ॥१५॥

## अजादेः ॥२॥४॥१६॥

स्त्रियामजादिशब्देभ्य, आप्प्रत्ययो विधीयते ॥
मुग्धा बाला भवेन्मन्दा, मध्या लोलविलोचना ॥१६॥

## ऋचिः पादः पात् पदे ॥२॥४॥१७॥

कृतपाद्वावपाच्छन्द-स्यावन्तस्य ऋचि ध्रुवम् ॥

---

उपान्त्यवत इति किम्? बहुराज्ञी ॥१३॥ स्पष्टम् ॥१४॥ एवं सीमे, सीमानावित्यादि ॥१५॥ बाधकबाधनार्थमनकारार्थञ्च वचनम् ॥१६॥ ऋचीति,

पात् पदे द्वे निपात्येते, गायत्री त्रिपदा त्रिपात् ॥१७॥

## आत् ॥२॥४॥१८॥

अकारान्तात् स्त्रियां नाम्नः, आप्प्रत्ययो विधीयते ॥
विप्रयुक्ता सती या सा, साध्वी खट्वां न सेवते ॥१८॥

## गौरादिभ्यो मुख्यान् ङीः ॥२॥४॥१९॥

गौरादिगणनिक्षिप्ताद् , ङीः स्त्रियां मुख्यनामतः ॥
पश्य बन्धकी नारी दासी चेटी च भिक्षुकी ॥१९॥

## अणञेयेकण्नञ्स्नञ्टिताम् ॥२॥४॥२०॥

अणादिप्रत्ययानां. योऽकारो नाम्नस्तदन्ततः ॥
ङीस्तेषामेव वाच्यायां, स्त्रियां शस्ता नु तापसी ॥२०॥

## वयस्यनन्त्ये ॥२॥४॥२१॥

वयोऽदन्तात् स्त्रियां नाम्नो, ङीस्त्यक्त्वा चरमं वयः ॥
वृद्धा स्यात्तरुणी विद्यु-चञ्चलं ननु यौवनम् ॥२१॥

## द्विगोः समाहारात् ॥२॥४॥२२॥

समाहारद्विगोर्नाम्नोऽकारान्ताद् ङीः स्त्रियां भवेत् ॥

---

द्विपाद् , द्विपदी ॥१७॥ आदिति, सोमपाः स्त्री, दृषद्, समिदित्यादि । आदित्यकारोऽग्रेऽपि यथासम्भवं योजनीयः ॥१८॥ मुख्यादित्यधिकारः । गौरादिभ्य इति बहुवचनमाकृतिगणार्थम् ॥१९॥ अण्–वैदी, एयण्–सौपर्णेयी, इकण्–आक्षिकी, नञ् स्त्रैणी, स्नञ्–पौंस्नी, टित्–जानुदघ्नी ॥२०॥ अर्थान्तरन्यासालङ्कृत्यलङ्कृतमुदाहरणम् ॥२१॥ वाक्यद्वयात्मकमुदाहरणम् ; तेन यदि

त्रिलोकी गणयेन्नालं, सङ्ख्यातुमर्हतो गुणान् ॥२२॥

परिमाणात्तद्धितलुक्यविस्ताचितकम्बल्यात्

॥२॥४॥२३॥

प्रस्थादिपरिमाणान्ताद–दन्ताद् ङीः स्त्रियां द्विगोः ॥
तद्धिते लुक्यविस्तादे–र्द्व्याढकीं त्र्याढकीं नय ॥२३॥

काण्डात् प्रमाणादक्षेत्रे ॥२॥४॥२४॥

प्रमाणवाचिनः काण्ड–शब्दान्ताद् ङीः स्त्रियां द्विगोः ॥
तद्धिते लुकि न क्षेत्रे, त्रिकाण्डीं रज्जुमानय ॥२४॥

पुरुषाद्वा ॥२॥४॥२५॥

पूर्ववद्धे स्त्रियां ङीः स्यात्, पुरुषान्ताद्विभाषया ॥
इयं द्विपुरुषी वापी, त्रिपुरुषा नु खन्यताम् ॥२५॥

रेवतरोहिणाद्भे ॥२॥४॥२६॥

रेवतरोहिणाभ्यां ङी नक्षत्रेऽर्थे स्त्रियां भवेत् ॥
शुक्रे स्याद् रेवती मन्दे, रोहिण्यमृतसिद्धिदा ॥२६॥

---

त्रिलोकी गणयेत्, तदापि–अर्हतो गुणान् सङ्ख्यातुं नालमिति, एतदमुं श्लोकमुद्बोधयति–' यदि त्रिलोकी गणनापरा स्या–त्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारेपरार्धं गणितं यदि स्यात्, गणेयनिःशेषगुणोऽपि स स्यात् ॥१॥'॥२२॥ पञ्चाश्वा, द्विपण्या, द्विविस्तेत्यादि प्रत्युदाहरणतयाऽवसेयम् ॥२३॥ द्विकाण्डा शाटी, द्विकाण्डा क्षेत्रभक्तिरित्यत्र प्रमाणाक्षेत्रविरहान्न ङीः ॥२४॥ पूर्ववदिति–प्रमाणवाचिनः द्विगोरतद्धितलुकीत्यवसेयम् ॥२५॥ रविशशिभौमबुधगुरुशुक्रशनैश्चरेषु क्रमशो हस्तमृगाश्विन्यनुराधापुष्यरेवतीरोहिण्यस्तदाऽमृतसिद्धियोगः । भभिन्ने तु रेवतेत्यादि ॥२६॥

## नीलात् प्राण्यौषध्योः ॥२॥४॥२७॥

प्राण्यौषध्योः स्त्रियां नील–शब्दाद् ङीप्रत्ययो भवेत् ॥
नीली गौः शाटिका नीला, नीली स्यान्मधुपर्णिका ॥२७॥

## क्ताच्च नाम्नि वा ॥२॥४॥२८॥

क्तान्ताच्च नीलशब्दाच्च, संज्ञायां ङीः स्त्रियां नवा ॥
स्यात् प्रवृद्धविलूनी वं, नीली नीलाऽभिधाऽवला ॥२८

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात् ॥२॥४॥२९॥

केवलादिनवभ्यः स्याद्, ङीः सञ्ज्ञायां तु नित्यशः ॥
केवली ज्योतिषो नाम, मामकी मातुली मता ॥२९॥

## भाज-गोण-नाग-स्थल-कुण्ड-काल-कुश-कामुक-कट-कबरात् पक्वाऽवपन-स्थूलाऽकृत्रिमा-मत्र-कृष्णाऽऽयसी-रिंसु-श्रोणिकेशपाशे ॥२॥४॥३०॥

भाजादिभ्यो दशभ्यो ङीः, पक्वाद्यर्थे यथाक्रमम् ॥
स्त्रियां काली घनश्यामा, कबरी केशपाशकः ॥३०॥

---

मधुपर्णिकाऽमृतौषधिः ( गलो इति भाषायाम् ) ॥२७॥ प्रवृद्धविलूना विकल्पपक्षे: ओषधिविशेषवाचकोऽयमखण्डशब्दः ॥२८॥ भागधेयी–बलिः, पाप्यपर्यौ–ओषध्यौ, समानी–छन्दः, आर्यकृती–क्रियाविशेषः, सुमङ्गली–छन्द ओषधिर्वा, भेषजी–ओषधिरिति ॥२९॥ एवं भाजीप्रमुखं तत्तदर्थे बोध्यम्, उक्तार्थाभावे तु भाजेत्यादि ॥३०॥

## नवा शोणादेः ॥२॥४॥३१॥

शोणादिगणतः स्त्रीत्वे, ङीर्विकल्पेन जायते ॥
शोणी स्यादरुणा शोणा, चण्डी चण्डातिकोपना ॥३१॥

## इतोऽक्त्यर्थात् ॥२॥४॥३२॥

इदन्तान्नामतः स्त्रीत्वे–ऽक्त्यर्थान्तात् ङीर्विभाषया ॥
अरणी चारणिर्दारु, सरणी सरणिः सृतिः॥३२॥

## पद्धतेः ॥२॥४॥३३॥

स्त्रियां पद्धतिशब्दाद् ङी–र्विकल्पेनैव जायते ॥
पद्धतीं या मुनीशानां, तामनुस्मर पद्धतिम् ॥३३॥

## शक्तेः शस्त्रे ॥२॥४॥३४॥

शस्त्रेऽर्थे शक्तिशब्दाद् ङी–र्विकल्पेन स्त्रियां भवेत् ॥
शक्तिः शक्ती करे यस्य, तस्य शक्तिर्जगज्जये ॥३४॥

## स्वराद्‌तो गुणादखरोः ॥२॥४॥३५॥

स्वरादूर्ध्वमुकारो यो, वर्णैकान्तरितस्ततः ॥

---

शोणादयो गणपाठतो ज्ञेयाः ॥३१॥ सृतिरित्यत्र क्त्यर्थान्तत्वान्न ङीः ॥३२॥ पद्धतेः क्त्यर्थान्तत्वात् पूर्वेण निषेधादनेन विधानम् ॥३३॥ उदाहरणे पूर्वभागे शक्तिशब्दः शस्त्रवाचकः उत्तरत्र सामर्थ्यवाचकः तेन तत्र न ङीः ॥३४॥ गुणशब्दः प्रकृते पारिभाषिकः, तत्–परिभाषा तु–सत्त्वे–द्रव्ये निविशते तदाश्रयति, ततोऽपैत्यपि, भिन्नजातीयेष्वपि दृश्यते, आधेयः स्यात्, अक्रियाजो नित्यो भवेत्, सत्त्वस्वरूपो न स्यादिति; तथाचाहुः ' सत्त्वे निविशतेऽपैति, पृथग् जातिषु दृश्यते ॥ आधेयश्चाक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः

गुणादखरुनाम्नो ङीः, स्त्रियां तन्वी तनुर्वरा ॥३५॥

**श्येतैतहरितभरतरोहिताद् वर्णात्तो नश्च ॥२॥४॥३६॥**

एभ्यः स्याद्वर्णवाचिभ्यः, स्त्रियां ङीस्तस्य नो नवा ॥
वर्षासु नूतनैः शस्यै-र्हरिणी हरिता हरित् ॥३६॥

**क्नः पलितासितात् ॥२॥४॥३७॥**

स्यात् पलितासिताभ्यां ङीः, क्नस्तकारस्य वा स्त्रियाम् ॥
पलिक्नी पलिता वृद्धा-ऽसिक्न्यन्तःपुरचारिणी ॥३७॥

**असहनञ्विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः ॥२॥४॥३८॥**

सहनञ्विद्यमानेभ्यो, भिन्नात् पूर्वपदात् स्त्रियाम् ॥
वाऽक्रोडादेरदन्तात् ङीः, स्वाङ्गात् पीनस्तनी नरी ॥३८॥

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ॥२॥४॥३९॥**

ङीर्वा स्यान्नासिकादिभ्यः, स्वाङ्गेभ्यः पूर्ववत् स्त्रियाम् ॥
नियमार्थमिदं बोध्यं, कृशोदरी कृशोदरा ॥३९॥

---

॥१॥ इति, प्रत्युदाहरणसूत्रम् ॥३५॥ वर्णादिति—श्येतैतेत्यादि ॥३६॥ विकल्पपक्षेऽसिता ॥३७॥ सहनञ्विद्यमानवर्जनात्, सहकेशा, अकेशा, विद्यमानकेशेत्यादि । स्वाङ्गादिति—बहुयवा । क्रोडादिराकृतिगणः, तेन यथाप्रयोगं साधनीयम् । स्वाङ्गलक्षणं चेदम् 'अविकारोऽद्रवं मूर्तं, प्राणिस्थं स्वाङ्गमुच्यते । च्युतं च प्राणिनस्तत्त-न्निभं च प्रतिमादिषु ॥१॥', बहुशोफा, बहुकफा, बहुज्ञाना, दीर्घमुखा शाला इत्यादौ तत्तद्विशेषणसार्थक्यमवसेयमिति ॥३८॥ पूर्वेण सिद्धे नियमार्थमिदम्, तेनोक्तातिरिक्तबहुस्वरसंयोगोपान्त्येभ्यो ङीर्न ॥३९॥

## नखमुखादनाम्नि ॥२॥४॥४०॥

स्वाङ्गनखमुखाभ्यां ङी-र्वाऽनाम्नि पूर्ववत् स्त्रियाम् ॥
शूर्पनखी भवेच्चन्द्र-मुखी शूर्पणखा नु किम् ॥४०॥

## पुच्छात् ॥२॥४॥४१॥

पूर्ववत् स्वाङ्गतः पुच्छात्, स्त्रियां ङीः स्याद्विभाषया ॥
वडवा दीर्घपुच्छीयं, दीर्घपुच्छा च वानरी ॥४१॥

## कबरमणिविषशरादेः ॥२॥४॥४२॥

नित्यमेव स्त्रियां पुच्छाद्, ङीः कबरादिपूर्वकात् ॥
मणिपुच्छी भवेत् काचिद्, विषपुच्छी च वृश्चिकी ॥४२॥

## पक्षाच्चोपमानादेः ॥२॥४॥४३॥

स्यादुमानपूर्वाद् ङीः, स्त्रियां पक्षाच्च पुच्छतः ॥
इयमुलूकपक्षी चो-लूकपुच्छी च शाटिका ॥४३॥

## क्रीतात् करणादेः ॥२॥४॥४४॥

क्रीतान्तान्नामतोऽदन्तात्, करणादेः स्त्रियां नु ङीः ॥
अश्वक्रीती धनक्रीती, सुक्रीता स्याद्गरीयसी ॥४४॥

## क्तादल्पे ॥२॥४॥४५॥

करणादेः स्त्रियां ङीः स्या-दल्पेऽर्थे क्तान्तनामतः ॥
इयमभ्रविलिप्ती द्यौः, प्रवर्षेद्वारि जातुचित् ॥४५॥

---

सूत्रद्वये पूर्ववदिति असहेत्याद्यध्याहार्यम् ॥४०॥४१॥ नित्यङीत्वार्थमयं विधिः । एवं कबरपुच्छी, शरपुच्छी॥४२॥ स्पष्टम् ॥४३॥ सुक्रीतेत्यत्र करणाभावाद् ङीअभावः॥४४॥अभ्रविलिप्ती-अल्पाभ्रेत्यर्थः।अल्प इतिचन्दनानुलिप्ता॥४५॥

## स्वाङ्गादेरकृतमितजातप्रतिपन्नाद्बहुव्रीहेः ॥२॥४॥४६॥

कृतादिवर्जितात् क्तान्ताद्-बहुव्रीहेः स्त्रियां नु ङीः ॥
स्वाङ्गादेः शङ्खभिन्नीय-मूरुभिन्नी च कामिनी ॥४६॥

## अनाच्छादजात्यादेर्नवा ॥२॥४॥४७॥

आच्छादभिन्नजात्यादेः, स्त्रियां ङीर्वा नु पूर्ववत् ॥
पलाण्डुभक्षिती नारी, पापा पलाण्डुभक्षिता ॥४७॥

## पत्युर्नः ॥२॥४॥४८॥

पत्यन्तात् स्याद् बहुव्रीहेः, स्त्रियां ङीर्वा तथाच नः ॥
अन्त्यस्य स्थिरपत्नीय, स्थिरपतिः सदासुखा ॥४८॥

## सादेः ॥२॥४॥४९॥

सपूर्वात् पतिशब्दात् ङीः, स्त्रियां वाऽन्त्यस्य नो भवेत् ॥
भूपत्नी भूपती राज्ञी, भाग्येनैव भवेत् क्वचित् ॥४९॥

## सपत्न्यादौ ॥२॥४॥५०॥

सपत्नीप्रमुखाः शब्दा, ङ्यन्ता नान्ताश्च नित्यशः ॥
समानः स्यात् पतिर्यासां, सपत्न्यस्ताः परस्परम् ॥५०॥

---

दन्तकृता, दन्तमिता, दन्तजाता, दन्तप्रतिपन्नेत्यादौ न ङी कृतादिवर्जनात् ॥४६॥ पूर्ववदिति–कृतादिवर्जितात् क्तान्ताद् बहुव्रीहेरिति । आच्छादवर्जनात्–वस्त्रच्छन्ना । जात्यादिरिति मासयाता ॥४७॥ स्पष्टम् ॥४८॥ सादेरिति पतिरियम्, ग्रामस्य पतिरियमित्येव न तु पत्नी ॥४९॥ एवम् एकपत्नीप्रभृतिः ॥५०॥

ऊढायाम् ॥१॥४॥५१॥

ऊढायां केवलात् पत्यु-र्ङीः स्यादन्त्यस्य नः स्त्रियाम् ॥
पत्न्यस्तु भ्रातृवर्गस्य, भवेयुर्यातरो मिथः ॥५१॥

पाणिगृहीतीति ॥१॥४॥५२॥

स्युरूढायां स्त्रियां पाणि-गृहीत्याद्या निपातनात् ॥
ङ्यन्ताः पाणिगृहीतीयं, सौभाग्येन विशिष्यते ॥५२॥

पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः ॥१॥४॥५३॥

भार्या चेत् पतिवत्नी स्या-दन्तर्वत्नी च गर्भिणी ॥
निपात्येते उभौ शब्दौ, पृथ्वी पतिमती मता ॥५३॥

जातेरयान्तनित्यस्त्रीशूद्रात् ॥१॥४॥५४॥

स्याज्जातिवाचिनोऽदन्ता-न्नाम्नोऽयान्तात्स्त्रियां नु ङीः ॥
नित्यस्त्रीशूद्रभिन्नाच्च, मयूरी ब्राह्मणी कठी ॥५४॥

पाककर्णपर्णवालान्तात् ॥१॥४॥५५॥

नामतो ङीः स्त्रियां नित्यं, पाकादेर्जातिवाचिनः ॥
क्षणपाकी तथा शङ्कु-कर्ण्योषध्योपधिर्मता ॥५५॥

असत्काण्डप्रान्तशतैकाञ्चः पुष्पात् ॥१॥४॥५६॥

ङीर्जातिवाचिनः पुष्पात्, सदादिभिन्नपूर्वकात् ॥

---

स्पष्टम् ॥५१॥ एवं करगृहीतीप्रमुखम् । अनूढा चेत् पाणिगृहीतेत्येव ॥५२॥ नो चेद् भार्या पतिमती पृथ्वीति ॥५३॥ यान्तादिवर्जनात् क्षत्रिया खट्वा, शूद्रेत्यादौ न । अदन्तादिति आखुः ॥५४॥ एवं मुद्गपर्णी गोवाली । जातेरित्येव बहुपाका यवागूः ॥५५॥ स्पष्टम् ॥५६॥

स्त्रियां सुवर्णपुष्पी सत्-पुष्पाद्याः कानने लताः ॥५६॥

**असंभस्त्राजिनैकशणापिण्डात् फलात् ॥२॥४॥५७॥**

असंभस्त्रादिपूर्वाद् वै, फलान्ताज्जातिवाचिनः ॥
स्त्रियां ङीर्जायते दासी-फली पूगफली लता ॥५७॥

**अनञो मूलात ॥२॥४॥५८॥**

नञ्भिन्नपूर्वतो मूलात्, स्त्रियां ङीर्जातिवाचिनः ॥
अमूला दर्भमूली च, शीर्षमूली लता क्वचित् ॥५८॥

**धवाद्योगादपालकान्तात् ॥२॥४॥५९॥**

अकारान्ताद् धवाद् योगात्, पालकान्तान्यनामतः ॥
स्त्रियां ङीः प्रवरी प्रष्ठी, कौमारी पशुपालिका ॥५९॥

**पूतक्रतुवृषाकप्यग्नि कुसित कुसिदादै च ॥२॥४॥६०॥**

पूतक्रत्वादिनामभ्यो, धवार्थेभ्यः स्त्रियां तु ङीः ॥
ऐश्चान्तस्य भवेत् पूत-क्रतायीयं वृषाकपिः ॥६०॥

**मनोरौ च वा ॥२॥४॥६१॥**

धवाद् योगात् मनोः शब्दात्, स्त्रियां ङीर्वा तथा च औत् ॥
ऐच्चान्त्यं मानवी ज्ञेया-मनायी स्त्री मनोर्मनुः ॥६१॥

**वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः ॥२॥४॥६२॥**

धवनामभ्य एभ्यो ङी-स्तथा चानन्त आगमः ॥

---

समादिवर्जनात् संफल्येत्यादि ॥५७॥ स्पष्टं सूत्रद्वयम् ॥५८॥५९॥ वृषाकपिरिति धवयोगाभावे स्वतन्त्रं नाम। 'हरविष्णू वृषाकपी' इत्यमरः तयोर्भार्या नात्र विवक्षितेति ॥६०॥ स्पष्टम् ॥६१॥ एवं वरुणानी, रुद्राणी, भवानी,

स्त्रियामिन्द्रस्य भार्येय–मिन्द्राणी दिवि राजते ॥६२॥

## मातुलाचार्योपाध्यायाद्वा ॥२॥४॥६३॥

मातुलादेधवान्नाम्नो, ङीश्चानन्तो विभाषया ॥
आचार्याण्यथवाऽऽचार्यी, मातुलानी च मातुली ॥६३॥

## सूर्याद्देवतायां वा ॥२॥४॥६४॥

देवतायां धवात् सूर्यात्, ङीर्वाऽऽनन्तः स्त्रियां भवेत् ॥
सूर्याणी सूर्यभार्येयं सूर्या रत्नाभिधा श्रुता ॥६४॥

## यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ॥२॥४॥६५॥

दोषाद्यर्थे यवादिभ्यो, ङीश्चानन्तः स्त्रियां क्रमात् ॥
दुष्टो यवो यवानी स्यात्–दरण्यानी महावनम् ॥६५॥

## अर्यक्षत्रियाद्वा ॥२॥४॥६६॥

अर्यक्षत्रियशब्दाभ्यां, ङीरानन्तश्च वा स्त्रियाम् ॥
अर्याण्यर्या च भार्याऽर्यी, क्षत्रियाणी च क्षत्रिया ॥६६॥

## यञो डायन् च वा ॥२॥४॥६७॥

यञ्प्रत्ययान्ततो ङीः स्यात्, डायन् चान्तः स्त्रियां नवा ॥
गार्गी गार्ग्यायणी नारी, वात्सी वात्स्यायनी तथा ॥६७॥

---

शर्वाणी, मृडानीति ॥६२॥ एवम् उपाध्यायानी, उपाध्यायी ॥६३॥ देवता-भिन्ने तु मानुषी सुरी ॥६४॥ यवनानां लिपिर्यवनानी, महद् हिमं हिमानी ॥६५॥ अर्यशब्दो वैश्यवाचकः । नात्र धवयोगः । केचित्तु धवयोगमत्रमन्वते तन्मते धवयोगाभावेऽर्या क्षत्रियेत्येव । क्वचिदत्र ‘ आर्यक्षत्रियाद्वा ’ इति पाठः समुपलभ्यते तथा पाठानुसरणे आर्याणीत्याद्युदाहार्यमिति ॥६६॥ स्पष्टम् ॥६७॥

## लोहितादिशकलान्तात् ॥२।४।६८॥

लोहितादिशकलान्ताद्, यञन्ताद् ङीः स्त्रियां ध्रुवम् ॥
डायनन्तश्च लौहित्या-यनी कात्यायनी भवेत् ॥६८॥

## षावटाद्वा ॥२।४।६९॥

षान्तादवटशब्दाच्च, यञन्ताद् ङीः स्त्रियां नवा ॥
डायन् चान्तस्तथावट्या-यन्यवटयाऽथवा वला ॥६९॥

## कौरव्यमाण्डूकासुरेः ॥२।४।७०॥

कौरव्यादेः स्त्रियां ङीः स्याद्, डायन् चान्तस्तथा सति ॥
स्त्री कौरव्यायनी माण्डू-कायनी चासुरायणी ॥७०॥

## इञ इतः ॥२।४।७१॥

इकारान्तादिञन्ताद् ङी-प्रत्ययो जायते स्त्रियाम् ॥
मौनिचित्ती तथा सौतं-गमी तद्धितमीक्षते ॥७१॥

## नुर्जातेः ॥२।४।७२॥

इकारान्तान्नृजातेर्ङी-प्रत्ययो जायते स्त्रियाम् ॥
कुन्त्यवन्ती तथा दाक्षी प्लाक्षी च ग्लुचुकायनी ॥७२॥

## उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ् ॥२।४।७३॥

नृजात्यप्राणिजातिभ्य, उदन्तेभ्यः स्त्रियां ननूङ् ॥

---

एवं सांशित्यायनी, शाकल्यायनी ॥६८॥ पौतिमाष्यायणी, पौतिमाष्या षान्तोदाहरणतयाऽत्रसेयम् ॥६९॥ स्पष्टम् ॥७०॥ इत इति किम्? इञादेशात् ष्यान्माभूत्, तेन वाराह्या बालाक्येत्यादि ॥७१॥ इत इति दरत्, -न्नुरिति तित्तिरिः, जातेरिति निष्कौशाम्बिः ॥७२॥ वधूः, पटुरिति प्रत्युदाहरणम्॥

ग्वन्तरज्ज्वादिकेभ्यो नो—ऽलाबूः कुरूर्वधूः पङ्गुः ॥७३॥

बाह्वन्तकद्रुकमण्डलोर्नाम्नि ॥२॥४॥७४

कद्रुकमण्डलुभ्यां च, बाहुशब्दान्ततः स्त्रियाम् ॥
ऊङ् नाम्नि भवेद् भद्र—बाहूः कद्रूः कमण्डलूः ॥७४॥

उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः ॥२॥४॥७५॥

ऊरुशब्दात् स्त्रियामूङ् स्या—दुपमानादिपूर्वकात् ॥
वीतरागं न वामोरू, रंभोरूरपि कषति ॥७५॥

नारी—सखी—पङ्गू—श्वश्रू ॥२॥४॥७६॥

श्वश्रू पङ्गू सखी नारी ङ्यन्तोऽङन्ताश्च साधवः ॥
नारी वै नरकद्वारं, या सखीवावभासते ॥७६॥

यूनस्तिः ॥२॥४॥७७॥

युवन्शब्दात् स्त्रियां तिः स्यात्, ङीप्रत्ययं स बाधते ॥
युवतिर्युवती रामा वामा प्रतीपदर्शनी ॥७७॥

---

अप्राणिन इति आखुः । युरज्ज्वादि वर्जनात्, अध्वर्युः स्त्री, रज्जुः, हनुः ॥७३॥ नाम्नीति किम् ? वृत्तबाहुः ॥७४॥ उपमानाद्यादेरिति किम् ? पीनोरुः ॥७५॥ एवं पङ्गूः, श्वश्रूः, ॥७६॥ युवतीति तु यौतेरौणादिकिदतिप्रत्ययान्तस्य 'इतोऽक्त्यर्थात्' ।२।४।३२। इति ङीत्वे ज्ञेयम् ॥७७॥

## अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्तस्य ष्यः ॥२॥४॥७८॥

वृद्धेऽनार्षेऽणिञौ यौ स्त-स्तदन्तं चेद् बहुस्वरम् ॥
गुरूपान्त्यं च तन्नाम्नो-ऽन्त्यस्य ष्यो देवदत्त्यका ॥७८॥

## कुलाख्यानाम् ॥२॥४॥७९॥

वृद्धेऽनार्षे कुलाख्यस्या-ऽणिञन्तस्य स्त्रियां भवेत् ॥
ष्यादेशोऽन्त्यस्य पौणिक्यां, भौणिक्यां नय गौतमीम्॥७९॥

## क्रौड्यादीनाम् ॥२॥४॥८०॥

क्रौड्यादीनामणन्ताना-मिञन्तानामनन्तरे ॥
स्त्रियां ष्योऽन्त्यस्य विज्ञेयः, क्रौड्यालाड्या दयोमताः ॥८०॥

## भोजसूतयोः क्षत्रियायुवत्योः ॥२॥४॥८१॥

ष्यः क्षत्रियायुवत्योः स्या-दन्त्यस्य भोजसूतयोः
भोज्या स्याद् भोजवंशीया, सूत्या संप्राप्तयौवना ॥८१॥

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ॥२॥४॥८२॥

एषामिञन्तशब्दानां, ष्यादेशोऽन्त्यस्य वा स्त्रियाम् ॥
दैवयज्ञ्या भवे दैव-यज्ञ्यपि देवयज्ञसुता ॥८२॥

---

: अनार्ष इति वैश्वामित्री, वृद्ध इति वाराही प्रथमापत्यम् ॥७८॥ गौतमीति प्रत्युदाहरणमार्षत्वान्न ष्यादेशः ॥७९॥ क्रौड्यादिराकृतिगणः ॥८०॥ उक्तार्थाभावे तु भोजा सुता ॥८१॥ शेषत्रयं यथासूत्रमवसेयम् ॥८२॥

**ष्या पुत्रपत्योः केवलयोरीच् तत्पुरुषे ॥२॥४॥८३॥**

आवन्तः ष्यः प्रधाने स्या-दीच् पुत्रपतिशब्दयोः ॥
तत्पुरुषे नु कारीष-गन्धीपतिरयं भवेत् ॥८३॥

**बन्धौ बहुव्रीहौ ॥२॥४॥८४॥**

बन्धुशब्दे बहुव्रीहौ, ष्यावन्त ईञ् भवेद् ध्रुवम् ॥
मुख्येऽर्थे ननु कारीष-गन्धीबन्धुरुदाहृतः ॥८४॥

**मातमातृमातृके वा ॥२॥४॥८५॥**

आवन्तः ष्यो बहुव्रीहौ, वा मातमातृमातृके ॥
मुख्यश्चेदीञ् नु कारीष-गन्धीमातः ससौरभः ॥८५॥

**अस्य ङ्यां लुक् ॥२॥४॥८६॥**

लुग् अकारस्य पूर्वस्य, भवेद् ङीप्रत्यये परे ॥
कुरुचरी तथा मद्रचरी कर्त्री च दण्डिनी ॥८६॥

**मत्स्यस्य यः ॥२॥४॥८७॥**

मत्स्यसम्बन्धिनो यस्य, लुप् स्याद् ङीप्रत्यये परे॥
महोदधौ महामत्सी, स्याद्दशशतयोजना ॥८७॥

---

एवं पुत्रपरत्वेऽपि बोध्यम् ॥८३॥ पूर्वसूत्रेऽत्रसूत्रे च तत्तद्विशेषण-सार्थक्यं बृहद्वृत्तितोऽवसेयम् ॥८४॥ विकल्पपक्षे कारीषगन्ध्यामातः । एवं मातृमातृकयोरपि बोध्यम् ॥८५॥ कर्त्री, दण्डिनीति प्रत्युदाहरणम् ॥८६॥ 'जोयणसहस्समाणा मच्छा उरगा य गब्भया हुंती 'ति वचनात् ॥८७॥

## व्यञ्जनात् तद्धितस्य ॥२॥४॥८८॥

व्यञ्जनात् तद्धितस्य ङ्यां, यकारस्य नु लुक् भवेत ॥
गार्गी च मनुषी सौर्मी, तथौचिती च चातुरी ॥८८॥

## सूर्यागस्त्ययोरीये च ॥२॥४॥८९॥

अनयोर्यस्य लुग नित्यं, ङ्यां तथैवेयप्रत्यये ॥
सूर्यभार्या नरो सूरी, प्रभा सौरी तमोऽपहा ॥८९॥

## तिष्यपुष्ययोर्भाणि ॥२॥४॥९०॥

नक्षत्रेऽण्यनयोर्यस्य, सर्वदा लुग विधीयते ॥
पुष्येण संयुता राका, पौषी तैषस्तदन्वितः ॥९०॥

## आपत्यस्य क्यच्व्योः ॥२॥४॥९१॥

यस्याऽऽपत्यस्य लुक् क्यच्व्यौ, व्यञ्जनात् परवर्तिनः ॥
गार्गीभूता तथा गार्गी–यतीयं गार्ग्यमिच्छति ॥९१॥

## तद्धितयस्वरेऽनाति ॥२॥४॥९२॥

लुग् यस्य व्यञ्जनादाप–त्यस्य यादौ च तद्धिते ॥
अनात् स्वरादिके गार्ग्यौ, गार्गीयोऽयं कमण्डलुः ॥९२॥

## बिल्वकीयादेरीयस्य ॥२॥४॥९३॥

बिल्वकीयादिशब्दानां, लुक स्यात् तद्धितयस्वरे ॥

---

स्पष्टम् ॥८८॥ एवमागस्ती, सौरीय इत्यादि ज्ञेयम् ॥८९॥ स्पष्टम् ॥९०॥ एवं वात्सायत इत्यादि । प्रत्युदाहरणमवसेयं बृहद्वृत्तेः ॥९१॥ आपत्य-स्येति–काम्पील्यकः, तद्धितेति वात्स्यैन, अनातीति गार्ग्यायणः ॥९२॥ बिल्वा-

ईयस्य बैल्वकाद्याः स्युर्-बिंल्वादयो नडादिषु ॥९३॥

न राजन्यमनुष्ययोरके ॥२।४।९४॥

नाके परे यकारस्य, लुक् राजन्यमनुष्ययोः ॥
राजन्यकं समूहः स्यात्, मानुष्यकं तथैव हि ॥९४॥

ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः ॥२।४।९५॥

अक्विबन्तस्य गौणस्य, ङ्यादेर्लुक् तद्धिते लुकि ॥
गौणी सूच्योर्न वालोऽयं, पञ्चेन्द्रः षट्कुमारकः ॥९५॥

गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ ॥२।४।९६॥

ङ्याद्यन्तस्य च गौणस्या-क्विपो गोर्ह्रस्वता भवेत् ॥
नाम्नोऽन्तेऽंशिसमासेयो-बहुव्रीह्योर्न चित्रगुः ॥९६॥

क्लीबे ॥२।४।९७॥

ह्रस्वता जायते नाम्नः, स्वरान्तस्य नपुंसके ॥
कुलं कीलालपं सुभ्रु, ग्रामण्यतिर्यतिद्यु वा ॥९७॥

वेदूतोऽनव्ययय्वृदीज्ङीयुवः पदे ॥२।४।९८॥

स्यादुत्तरपदे ह्रस्वो, वेदुतोस्तौ न चाव्ययौ ॥

---

दिर्नडाद्यन्तर्गण इति ॥९३॥ 'तद्धितय...२।४।९२।' इति प्राप्तेऽनेन प्रतिषेधः गौणस्येति अवन्ती, अक्विप इति पञ्चकुमारी, अगोणीसूच्योरिति पञ्चगोणिः दशसूचिः ॥९५॥ अस्यार्थः—गौणस्याक्विपो गोङ्याद्यन्तस्य चान्ते वर्तमानस्य ह्रस्वः स्यात्, न चेदसावंशिसमासान्त ईयस्वन्त बहुव्रीह्यन्तौ वेति ॥९६॥ कीलालपं, सुभ्र, ग्रामणि, अतिरि, अतिद्यु इति सर्वं कुलविशेषणम् । एवं अतिहि, अतिनु इत्यपि बोध्यम् ॥९७॥ विकल्पपक्षे लक्ष्मीक-

ईजूरूपौ स्मृतू च भीरुया-वियुवूस्थानौ च लक्ष्मिकः ॥९८॥

## ङ्यापो बहुलं नाम्नि ॥२॥४॥९९॥

ह्रस्वो ङ्यावन्तयोर्नाम्नि, बहुलमुत्तरे पदे ॥
महिदत्तो महित्रातः क्वचिन्नित्यं क्वचिन्नवा ॥९९॥

## त्वे ॥२॥४॥१००॥

स्याद् ङ्यन्तावन्तयोर्ह्रस्वो, बहुलं त्वे तु प्रत्यये ॥
रोहिणित्वमजत्वं वा, भावोऽजाया न नश्वरः ॥१००॥

## भ्रुवोऽच्च कुंसकुट्योः ॥२॥४॥१०१॥

कुंसकुट्योर्भवेद्ध्रस्वो-ऽकारश्चापि भ्रुवो ध्रुवम् ॥
भ्रकुंसश्च भ्रकुंसश्च, भ्रुकुटिर्भ्रकुटिस्तथा ॥१०१॥

## मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते ॥२॥४॥१०२॥

मालादीनां यथासङ्ख्यं, तदन्तानाञ्च ह्रस्वता ॥
भारितूलचितेषु स्या-दुत्पलमालभारिणी ॥१०२॥

## गोण्या मेये ॥२॥४॥१०३॥

स्यान्मेये वर्तमानस्य, गोणीशब्दस्य ह्रस्वता ॥
गोण्यामितो भवेद्गोणि-र्गोणी सा ननु केवला ॥१०३॥

---

इत्याद्यपि ॥९८॥ बहुलमिति रेवतिमित्रः इत्यादि ॥९९॥ बहुलमिति अजा-त्वमित्याद्यपि ॥१००॥ स्पष्टम् ॥१०१॥ एतमिषीकतूलमिष्टकचितमित्यादि ॥१०२॥ स्पष्टम् ॥१०३॥

ङ्यादीदूतः के ॥२।४।१०४॥

कप्रत्यये परे ह्रस्वो, ङ्यादीदूतां तु नित्यशः ॥
लक्ष्मिका वधुका विष्णोः, पट्विका सुकुमारिका ॥१०४॥

न कचि ॥२।४।१०५॥

ङ्यादीदूतां भवेन्नैव, ह्रस्वता कचि प्रत्यये ॥
अद्यत्वे बहुलक्ष्मीका, मनुजा मानभाजनम् ॥१०५॥

न वाऽऽपः ॥२।४।१०६॥

आबन्तस्य कचि ज्ञेया, ह्रस्वता तु विभाषया ॥
विजयी बहुमालाको जायते बहुमालकः ॥१०६॥

इच्चापुंसोऽनित्क्याप्परे ॥२।४।१०७॥

अपुंलिङ्गार्थशब्दाद्वै स्यादनित्क्याप्परे नवै ॥
आपो ह्रस्व इकारश्च, खट्विका खट्विकादयः ॥१०७॥

स्वज्ञाजभस्त्राधातुत्ययकात् ॥२।४।१०८॥

भवेत् स्वज्ञाजभस्त्रेभ्यो, धातुत्यभिन्नतो यकात् ॥
आपः स्थाने इकारो वाऽनित्के आप्परतः स्विका ॥१०८

विष्णोः वधुका लक्ष्मिका पट्विका, सुकुमारिका चेत्यन्वयः ॥१०४॥ बहुकुमारीकः, बहुकीलालपाकः, बहुब्रह्मबन्धूकः इत्यादि ज्ञेयम् ॥१०५॥ स्पष्टम् ॥१०६॥ अपुंस इति सर्विका, अनिदिति दुर्गका, आप्पर इति प्रियखट्वाका, आप इति मातृका ॥१०७॥ विकल्पपक्षे स्वका । एवं ज्ञका ज्ञिकेत्यादि । धातुत्यवर्जनात् सुनयिका इहत्यिकेत्यादि ॥१०८॥

**द्वयेषसूतपुत्रवृन्दारकस्य ॥२॥४॥१०९॥**

द्वयेषसूतादिशब्दानां, स्यादनित्क्याप्परे नवा ॥
इकारः सूतिका वृन्दा-रिका वृन्दारकादयः ॥१०९॥

**वौ वर्तिका ॥२॥४॥११०॥**

विहायस्यभिधेये वा, वर्तिकेत्वेन जायते ॥
वर्तिका वर्तकश्चोभौ, इयेने तौ विहायसि ॥११०॥

**अस्यायत्तत्क्षिपकादीनाम् ॥२॥४॥१११॥**

अयत्तत्क्षिपकादेरि-दस्यानित् क्याप्परे भवेत् ॥
कारिका पाचिका नौका नन्दका वहुमद्रका ॥१११॥

**नरिकामामिका ॥२॥४॥११२॥**

ककारे प्रत्ययस्थे वै, आप्परे नरकस्य च ॥
मामकस्य भवेदित्वं, नरिका मामिका तथा ॥११२॥

**तारकावर्णकाष्टका ज्योतिस्तान्तवपितृदेवत्ये ॥२॥४॥११३॥**

तारकाद्या विनेकारं, क्रमशो ज्योतिरादिषु ॥
निपात्यास्तारका ज्योति-स्तारा चेन्ननु तारिका ॥११३॥

॥ इति चतुर्थःपादः ॥ द्वितीयोऽध्यायः समाप्तः ॥

---

एवं द्विके, द्वके, एषिका, एषका, सूतका, पुत्रिका, पुत्रका इत्यादि ॥१०९॥ विहायसि-पक्षिणीत्यर्थः। विहायसि गगन इत्यर्थः। पक्ष्यभावे तु वर्तिका भागुरिः ॥११०॥ उदाहरणपञ्चके द्वयमुदाहरणं त्रयं प्रत्युदाहरणम्। यदादिवर्जनात् यका, सका क्षिपकेत्यादि ॥१११॥ स्पष्टम् ॥११२॥ वर्णका तान्तवमिति आवरणविशेषः, अष्टका पितृदेवत्यं कर्म ॥११३॥

इति चतुर्थः पादः ॥ द्वितीयोऽध्यायः समाप्तः ॥

## ॥ अथ तृतीयोऽध्यायः

### धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च ॥३।१।१॥

धातोः प्रयुज्यते प्रादिः, प्रागुपसर्गसंज्ञकः ॥
स्वती अधिपरी चातिं, त्यक्त्वोक्तार्थान् निपिश्विति ॥१॥

### ऊर्याद्यनुकरणच्विडाचश्च गतिः ॥३।१।२॥

ऊर्याद्यनुकृतिच्व्यन्त–डाजन्ता गतिसंज्ञकाः ॥
भवेयुरुपसर्गश्च, धातोः प्रागुररीकृताः ॥२॥

### कारिका स्थित्यादौ ॥३।१।३॥

गतिः स्यात् कारिकाशब्दः, स्थितियत्नक्रियार्थकः ॥
प्राग् धातोः कारिकाकृत्या–न्यार्थे कृत्वा तु कारिकाम् ॥३॥

### भूषादरक्षेपेऽलंसदसत् ॥३।१।४॥

अलंसदसतो भूषा–दरक्षेपार्थकाः क्रमात् ॥
गतिसंज्ञा अलंकृत्य, सत्कृत्य फलमादिशेत् ॥४॥

### अग्रहानुपदेशेऽन्तरदः ॥३।१।५॥

गती अन्तरदः शब्दा–वग्रहानुपदेशयोः ॥
अन्तर्हत्यान्तरान् शत्रून्, अदःकृत्य करिष्यति ॥५॥

---

उक्तार्थानिति–पूजार्थौ स्वती, गतार्थावधिपरी, अतिक्रमार्थमतिञ्चेति ॥१॥ अनुकरणं खाट्कृत्य, च्व्यन्तः–शुक्लीकृत्य, डाजन्तः–पटपटाकृत्य, उपसर्गः–प्रकृत्य ॥२॥ सष्टम् ॥३॥ एवम् असत्कृत्येति । भूषादिष्विति अलं कृत्वा–माकारीत्यर्थः ॥४॥ अन्तर्हत्य–मध्ये हत्वेत्यर्थः, न तु स्वीकारार्थः ॥५॥

## कणेमनस्तृप्तौ ॥३॥१॥६॥

स्यात्तृप्तौ गम्यमानायां, गत्यव्ययं कणे मनः ॥
द्राक्षामद्धि कणेहत्य, मनोहत्वौपधं पिब ॥६॥

## पुरोऽस्तमव्ययम् ॥३॥१॥७॥

पुरोऽस्तमव्यये स्यातां, धातोः सम्बन्धिनी ध्रुवम् ॥
गतिसंज्ञे पुरस्कृत्य, गत्वाऽस्तं भाति भास्करः ॥७॥

## गत्यर्थवदोऽच्छः ॥३॥१॥८॥

गत्यर्थवदसम्बन्धि, स्यादच्छेत्यव्ययं गतिः ॥
अभ्यर्थे च दृढार्थे चे-दच्छोद्य स्थापयेन्मतम् ॥८॥

## तिरोऽन्तर्धौ ॥३॥१॥९॥

तिरः स्याद्व्यवधाने चे-दव्ययं गतिसंज्ञकम् ॥
तिरोभूय तिरोधाय, तिरोभूत्वा गतो दिवम् ॥९॥

## कृगो नवा ॥३॥१॥१०॥

कृगो युक्तं तिरोऽन्तर्धौ, गतिसंज्ञं विभाषया ॥
तिरस्कृत्य तिरस्कृत्वा, मोहं मुक्तिमितो मुनिः ॥१०॥

## मध्येपदेनिवचनेमनस्युरस्यनत्याधाने ॥३॥१॥११॥

वैते पञ्च कृगो योगे, सप्तमीप्रतिरूपकाः ॥
अनुपश्लेषणे मध्ये-कृत्यात्मानं सुखी भव ॥११॥

---

मनो हत्वेति प्रत्युदाहरणम् ॥६॥ गत्वाऽस्तमिति प्रत्युदाहरणम् ॥७॥ अच्छोद्य-दृढमुक्त्वेत्यर्थः ॥८॥ तिरोभूत्वा तिर्यग्भूत्वेत्यर्थः, अत्रान्तर्धानाभावान्न गतिसंज्ञा ॥९॥सष्टम् ॥१०॥ एवं पदेकृत्येत्याद्यवसेयम् ॥११॥

## उपाजेऽन्वाजे ॥३॥१॥१२॥

वाऽवलस्य बलाधाने, गतिसंज्ञे इमे कृगा ॥
उपाजेकृत्य वोपाजे–कृत्वा कीर्तिमुपार्जय ॥१२॥

## स्वाम्येऽधिः ॥३॥१॥१३॥

स्वामित्वेऽर्थे कृगो योगे, वाऽधीत्येतद्गतिर्भवेत् ॥
प्राप्य ग्रामेऽधिकृत्याधिकृत्वा वा सुखमाप्नुत ॥१३॥

## साक्षादादिश्च्व्यर्थे ॥३॥१॥१४॥

स्युः साक्षादादयः शब्दा–श्च्व्यर्थे कृग्योगिनो नवा ॥
गतिसंज्ञाः परं साक्षात्–कृत्यात्मानं शिवं व्रज ॥१४॥

## नित्यं हस्तेपाणावुद्वाहे ॥३॥१॥१५॥

हस्तेपाणाविमौ शब्दौ, गती स्तो दारकर्मणि ॥
गम्यमाने कृगा योगे, पाणौकृत्य व्रत चर ॥१५॥

## प्राध्वं बन्धे ॥३॥१॥१६॥

प्राध्वंशब्दः कृगो धातोः, सम्बन्धी गतिसञ्ज्ञकः ॥
चेदनुकूलबन्धार्थे, प्राध्वंकृत्य गृहीकृताः ॥१६॥

## जीविकोपनिषदौपम्ये ॥३॥१॥१७॥

जीविकोपनिषच्छब्दौ, भवेतां गतिसञ्ज्ञकौ ॥

---

एकमन्वाजेकृत्येत्यादि ॥१२॥ स्वाम्य इति किम् ? चिन्तया ग्राममधिकृत्य–उद्दिश्येत्यर्थः, अत्र न विकल्पः ॥१३॥ विकल्पपक्षे साक्षात् कृत्वेत्यादि, साक्षादादयो गणपाठाद् ज्ञेया ॥१४॥ एवं हस्तेकृत्य, भार्यां कृत्वेत्यर्थः ॥१५॥ प्राध्वंकृत्य–बन्धनेनानुकूल्यं कृत्वेत्यर्थः ॥१६॥ जीविकाकृत्य–जीविकामिव-

औपम्येऽर्थे कृगा धर्मं, जीविकाकृत्य रक्ष्यताम् ॥१७॥

**नाम नाम्नैकार्थ्ये समासो बहुलम् ॥३॥१॥१८॥**

नाम नाम्ना सहैकार्थ्ये, समाससंज्ञकं भवेत् ॥
ना विविक्तकषायश्चेद्, भवेन्निपुणपण्डितः ॥१८॥

**सुज्वार्थे संख्या संख्येये संख्यया बहुव्रीहिः ॥३॥१॥१९॥**

स्यात् सङ्ख्यावाचिना सङ्ख्या-वाचि सुज्वार्थनाम चेत् ॥
ऐकार्थ्ये वै बहुव्रीहिः, समासाः सन्ति पञ्चधाः ॥१९॥

**आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे ॥३॥१॥२०॥**

स्यादासन्नादिकं नाम, समस्तं सङ्ख्यया समम् ॥
नाम्नैकार्थ्ये द्वितीयाद्य-न्यार्थेऽदूरदशा इमे ॥२०॥

**अव्ययम् ॥३॥१॥२१॥**

अव्ययं नाम सङ्ख्याया, वाचकेन समस्यते ॥
अन्यच्च पूर्ववद् ज्ञेय-मुपविंशा अनेकशः ॥२१॥

---

कृत्वेत्यर्थः, एवमुपनिषत्कृत्य ॥१७॥ लक्षणसूत्रमिदमधिकारश्च, तेन क्वचिद् बहुव्रीह्यादिविशेषसंज्ञाभावेऽपि चेदेकार्थता तदाऽनेन समाससंज्ञा ॥१८॥ सङ्ख्येये इत्यपि, समाससंज्ञाऽप्यनेनैव ॥१९॥ एवमासन्नदशादयो बोध्याः ॥२०॥ पूर्ववदिति-ऐक्यार्थे समस्यते द्वितीयाद्यन्यार्थे सङ्ख्येये वाच्ये स च बहुव्रीहिरिति ॥२१॥

## एकार्थं चानेकं च ॥३॥१॥२२॥

अनेकं पुनरेकं चै-कार्थं नामाव्ययं तथा ॥
नाम्ना समस्यते त्वन्यत्, पूर्ववत् प्राप्तमङ्गलः ॥२२॥

## उष्ट्रमुखादयः ॥३॥१॥२३॥

उष्ट्रमुखादयः शब्दा, बहुव्रीहिसमासकाः ॥
बाहुल्येन निपात्यन्ते, हरिणाक्षी स्थिरा क्वचित् ॥२३॥

## सहस्तेन ॥३॥१॥२४॥

तुल्ययोगे तथा विद्य-मानार्थे तु सहाव्ययम् ॥
तृतीयान्तेन प्राग्वत् तद्, बहुव्रीहिः सपक्षकः ॥२४॥

## दिशो रूढ्यान्तराले ॥३॥१॥२५॥

अन्तराले दिशो नाम, रूढ्या दिग्वाचि यद्भवेत् ॥
दिशो नाम्ना समस्तं दिग्, आग्नेयी पूर्वदक्षिणा ॥२५॥

## तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः ॥३॥१॥२६॥

नाम्ना समानरूपेण, सप्तम्यन्तं रणे सति ॥
समस्यते प्रहृत्येत्य-व्ययीभावः कचाकचि ॥२६॥

---

पूर्ववदिति—द्वितीयान्ताद्यन्यपदार्थे समस्यते, स च बहुव्रीहिरिति ॥२२॥ एवमुष्ट्रमुखः, वृषस्कन्धः इत्यादयो बोध्याः ॥२३॥ प्राग्वदिति—अन्यपदार्थे समस्यते स च बहुव्रीहिरिति ॥२४॥ अयं बहुव्रीहिः ॥२५॥ तत्तद्विशेषविधानफलं बृहद्वृत्तेर्बोध्यम् ॥२६॥

## नदीभिर्नाम्नि ॥३॥१॥२७॥

नाम समस्यते नाम्नि, नदीवाचकनामभिः ॥
अव्ययीभावसंज्ञं तत्, तूष्णींगङ्गं तु पूर्ववत् ॥२७॥

## संख्या समाहारे ॥३॥१॥२८॥

सङ्ख्यावाचि समस्तं स्यान्नदीवाचकनामभिः ॥
समाहारेऽव्ययीभाव-संज्ञं पञ्चनदं वरम् ॥२८॥

## वंश्येन पूर्वार्थे ॥३॥१॥२९॥

सङ्ख्यावाचि समस्तं स्यान्नाम्ना वंश्याभिधायिना ॥
पूर्वस्यार्थेऽव्यीभावो, द्विमुनि त्रिमुनि श्रुतम् ॥२९॥

## पारेमध्येऽग्रेऽन्तः षष्ठया वा ॥३॥१॥३०॥

पारेमध्येऽन्तरग्रे वा, षष्ठ्यन्तेन समस्यते ॥
स समासोऽव्ययीभावः, पारेभवं परम्पदम् ॥३०॥

## यावदियत्त्वे ॥३॥१॥३१॥

समस्यते समं नाम्ना, यावदित्यवधारणे ॥
स समासोऽव्ययीभावो, भोजय यावद्दोद्नम् ॥३१॥

---

नामाभावेतु शीघ्रगङ्गो देशः ॥२७॥ द्विगुबाधनार्थमिदम् ॥२८॥ विद्यया जन्मना वा एकसन्तानो वंशः, तत्र भवो वंश्यः । पूर्वार्थाभावे तु द्विमुनिकं श्रुतमिति नाव्ययीभावः ॥२९॥ एवं मध्येगङ्गम्, अग्रेवणम्, अन्तर्गिरमित्यादि, पक्षे भवपारमित्यादि ॥३०॥ इयत्त्वाभावेतु यावद् दत्तं तावद् भुक्तमिति ॥३१॥

## पर्यपाङ्बहिरच् पञ्चम्या ॥३॥१॥३२॥

पर्यादीनि समं नाम्ना, पञ्चम्यन्तेन सर्वदा ॥
समस्यन्तेऽव्ययीभाव, आग्रामं वारि वर्षति ॥३२॥

## लक्षणेनाभिप्रत्याभिमुख्ये ॥३॥१॥३३॥

अभिप्रती समस्येते, साम्मुख्ये चिह्नवाचिना ॥
स समासोऽव्ययीभावः, प्रत्यग्नि शलभा गताः ॥३३॥

## दैर्घ्येऽनुः ॥३॥१॥३४॥

लक्षणवाचिना नाम्ना, दैर्घ्येऽन्विति समस्यते ॥
समासः सोऽव्ययीभावः, काननमनुनर्मदम् ॥३४॥

## समीपे ॥३॥१॥३५॥

अनुनाम समीपेऽर्थे, नाम्ना सामीप्यवाचिना ॥
समस्यतेऽव्ययीभावो-ऽनुवनमशनिर्गता ॥३५॥

## तिष्ठद्ग्वित्यादयः ॥३॥१॥३६॥

तिष्ठद्गुप्रमुखाः शब्दा, अव्ययीभावसंज्ञकाः ॥
निपात्यन्ते समासे यद्, वहद्गु चायतीगवम् ॥३६॥

## नित्यं प्रतिनाऽल्पे ॥३॥१॥३७॥

अल्पेऽर्थे प्रतिना नाम्ना, नाम नित्यं समस्यते ॥

---

एवं परित्रिगर्तम्, अपत्रिगर्तम्, बहिर्ग्रामम्, प्राग्ग्राममित्यादि ॥३२॥ एवम् अभ्यग्नि इत्यादि ॥३३॥ दैर्घ्याभावे तु वृक्षमनु विद्युत् ॥३४॥ स्पष्टम् ॥३५॥ गणपाठतस्तिष्ठद्ग्वित्यादयो बोध्याः ॥३६॥ अल्प इति किम्? वृक्षं

स समासोऽव्ययीभावो, जनप्रति जनाल्पता ॥३७॥

**संख्याक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ ॥३।१।३८॥**

परिणा हि समस्यन्ते, शब्दाः सङ्ख्यादयस्त्रयः ॥
अव्ययीभावता द्यूते–ऽन्यथावृत्तौ चतुष्परि ॥३८॥

**विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययाऽसंप्रति-पश्चात्क्रमख्यातियुगपत्सदृक्संपत्साकल्यान्तेऽव्ययम् ॥३।१।३९॥**

समस्यते विभक्त्यादा–वर्थे नाम्ना सहाव्ययम् ॥
स समासोऽव्ययीभावो, ह्यधिस्त्रि वर्तते गृहम् ॥३९॥

**योग्यतावीप्सार्थानतिवृत्तिसादृश्ये ॥३।१।४०॥**

योग्यतायां च वीप्सार्थे, सादृश्येऽनतिवृत्तिके ॥

---

प्रति विद्युत् ॥३७॥ एवम् अक्षपरि, शलाकापरि, चतुर्भिः, अक्षेण, शलाकया वा न तथा वृत्तं यथा पूर्वं जय इत्यर्थः ॥३८॥ स्त्रियामिति अधिस्त्रि, कुम्भस्य समीपम् उपकुम्भम्, मद्राणां समृद्धिः–सुमद्रम्, विगता ऋद्धिः–व्यृद्धिः, दुर्यवनम्, मक्षिकाणामभावः–निर्मक्षिकम्, वर्षाणामत्ययोऽतिवर्षम्, कम्बलस्यासम्प्रति अतिकम्बलम्–सम्प्रति उपभोगाद्यभाव इत्यर्थः, रथस्य पश्चाद् अनुरथम्, ज्येष्ठानुक्रमेणेति अनुज्येष्ठम्, भद्रबाहोः ख्यातिरिति-भद्रबाहु, चक्रेण सहैककालं चक्राणि वा युगपद् धेहीत्यर्थे सचक्रं धेहि, व्रतस्य सदृशं सव्रतम्, संपन्नं ब्रह्म संब्रह्म, सतृणमत्ति न किञ्चिदपि त्यजति, पिण्डैषणापर्यन्तं सपिण्डैषणम् ॥३९॥ एवम् अनुरूपम्, प्रत्यर्थम्,

समस्यतेऽव्ययं नाम्ना-ऽव्ययीभावो यथाबलम् ॥४०॥

**यथाऽथा ॥३॥१॥४१॥**

समस्यते समं नाम्ना, थान्तभिन्नं यथाव्ययम् ॥
स समासोऽव्ययीभावो, यथारूपं विचेष्टते ॥४१॥

**गतिक्वन्यस्तत्पुरुषः ॥३॥१॥४२॥**

नित्यं नाम्ना समस्यन्ते, क्वव्ययं गतिसंज्ञकाः ॥
अन्यलक्षणहीनोऽयं, तत्पुरुषः कदुष्णकम् ॥४२॥

**दुर्निन्दाकृच्छ्रे ॥३॥१॥४३॥**

निन्दायामथ कृच्छ्रेऽर्थे समस्यते दुरव्ययम् ॥
तत्पुरुषः समासोऽयं, दुष्पुरुषेण दुष्कृतम् ॥४३॥

**सुः पूजायाम् ॥३॥१॥४४॥**

अव्ययं स्विति पूजायां नित्यं नाम्ना समस्यते ॥
तत्पुरुषः समासोऽयं, सुराजा शास्ति सत्प्रजाः ॥४४॥

**अतिरतिक्रमे च ॥३॥१॥४५॥**

अतिक्रमे च पूजाया-मत्यव्ययं समस्यते ॥
तत्पुरुषः समासोऽयं, नातिस्तुतमतीश्वरे ॥४५॥

---

संशीलमनयोरिति ॥४०॥ थांवर्जनात् यथा चैत्रस्तथा मैत्र इत्यादौ न ॥४१॥ अन्यैः-बहुव्रीह्यादिभिन्नः, तेन कुपुरुषक इत्यादौ न तत्पुरुषः ॥४२॥ दुष्पुरुषकः इति नायं तत्पुरुषः, अन्य इत्यस्यानुवृत्तेरेवमग्रेऽपि ॥४३॥ अन्यं इति ससुद्रम् ॥ ४४ ॥ स्पष्टे ॥ ४५ ॥

आङल्पे ॥३॥१॥४६॥

आङित्यव्ययमल्पेऽर्थे, नाम्ना नित्यं समस्यते ॥
तत्पुरुषः समासोऽय-मापिङ्गलोऽल्पपिङ्गलः ॥४६॥

प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ता-
द्यर्थाः प्रथमाद्यन्तैः ॥३॥१॥४७॥

प्रादयः प्रथमाद्यन्ते-र्गताद्यर्थेष्वनुक्रमम् ॥
नामभिस्तैः समस्यन्ते, प्राचार्यश्चावकोकिलः ॥४७॥

अव्ययं प्रवृद्धादिभिः ॥३॥१॥४८॥

समस्यतेऽव्ययं नाम, प्रवृद्धादिकनामभिः ॥
तत्पुरुषः समासः स, पुनरुक्तं वचोऽवचः ॥ ४८ ॥

ङस्युक्तं कृता ॥३॥१॥४९॥

ङस्युक्तं तु कृदन्तेन, नाम्ना नित्यं समस्यते ॥
यथ स योऽकरोत् कुम्भं, कुम्भकार इतीश्वरः ॥४९॥

तृतीयोक्तं वा ॥३॥१॥५०॥

तृतीयोक्तं समस्तं स्या-न्नाम नाम्ना कृता नवा ॥
तत्पुरुषः स पार्श्वोप-पीडं शेते निरामयः ॥५०॥

---

स्पष्टम् ॥४६॥ एवम् अतिखट्वः, पर्यध्ययनः, निष्कौशाम्बिरित्यादि ज्ञेयम् । गतार्था इति वृक्षं प्रतिविद्युत् ॥४७॥ स्पष्टम् ॥४८॥ इस्युक्तमिति अलंकृत्वा, इतीति धर्मो वो रक्षतु ॥४९॥ विकल्पे पार्श्वोपपीडमित्यादि ॥५०॥

नञ् ॥३॥१॥५१॥

समस्यते नञित्येत-न्नाम नाम्ना समं ध्रुवम् ॥
अनुच्चैरुच्यतां लोको, वचो न स्याद्यतोऽसुखः ॥५१॥

पूर्वापराधरोत्तरमभिन्नेनांशिना ॥३॥१॥५२॥

अभिन्नेनांशिना पूर्वा-दयः शब्दा नु पूर्ववत् ॥
समस्यन्तेऽपरो नाभे-रवरनाभिरुच्यते ॥५२॥

सायाह्नादयः ॥३॥१॥५३॥

साहाह्नप्रमुखाः शब्दा-स्तत्पुरुषेण चांशिना ॥
जायन्ते साधवः साय-मह्नः सायाह्न उच्यते ॥५३॥

समेंऽशेऽर्धं नवा ॥३॥१॥५४॥

अभिन्नेनांशिना नाम्ना, वार्धं समांशवाचकम् ॥
समस्यते हि पिप्पल्या, अर्धं स्यादर्धपिप्पली ॥५४॥

जरत्यादिभिः ॥३॥१॥५५॥

अर्धशब्दो जरत्याद्यै-रभिन्नैरंशिभिर्नवा ॥
समस्यतेऽर्धो मध्याया, अर्धमध्याऽर्धलोकितम् ॥५५॥

द्वित्रिचतुष्पूरणाग्रादयः ॥३॥१॥५६॥

द्वित्र्याद्याः पूरणार्थान्ता अग्राद्याश्चांशवाचिनः ॥

---

स्पष्टम् ॥५१॥ एवं पूर्वकायादयो ज्ञेयाः। अभिन्नेति पूर्वं छात्राणामामन्त्रयस्व। अंशिनेति पूर्वो नाभेः कायस्य ॥५२॥ स्पष्टम्॥५३॥ विकल्पे पिप्पल्यर्धम्। समेंश इति ग्रामार्धः ॥५४॥ एवं मध्यार्धः, लोकितार्धः इत्यादि॥५५॥ एवं भक्षणतु-

अभिन्नेनांशिना वा स्युः, समस्तास्तुर्यभिक्षणम् ॥५६॥

कालो द्विगौ च मेयैः ॥३।१।५७॥

नामैकवचनान्तं तु, कालवाचि द्विगौ पुनः ॥
मेयनाम्ना समस्तं स्या—न्मासजातो हरिर्हरिः ॥५७॥

स्वयंसामी क्तेन ॥३।१।५८॥

समस्येते स्वयंसामी, नाम्ना क्तान्तेन नित्यशः ॥
पूर्ववत्तु सामिधौतिः, स्वायंकृतिर्भवेन्नवा ॥५८॥

द्वितीया खट्वा क्षेपे ॥३।१।५९॥

खट्वानाम द्वितीयान्तं, नाम्ना क्तान्तेन नित्यशः ॥
क्षेपे समस्यते खट्वा—रूढो जाल्मश्चलन्नपि ॥५९॥

कालः ॥३।१।६०॥

कालवाचि द्वितीयान्तं, नाम्ना सह समस्यते ॥
यो मासं प्रमितो मास—प्रमितः प्रतिपद्विधुः ॥६०॥

व्याप्तौ ॥३।१।६१॥

भवेद् व्याप्तिद्वितीयान्तं, कालार्थं नाम पूर्ववत् ॥
व्यापकवाचिना नाम्ना, समस्तं स्यान्मुहूर्तशम् ॥६१॥

श्रितादिभिः ॥३।१।६२॥

समस्यते द्वितीयान्तं, नाम नामश्रितादिभिः ॥

---

पम् । श्रेणिकृतसमानम् ॥५६॥ हरिः—सिंहः । काल इति द्वैगौ वाच्यत्व ॥५७॥ स्वयंधौतेति स्वयं कृता ॥५८॥ क्षेप इति खट्वारूढः नितान्तक्षेपयति ॥५९॥ स्पष्टम् ॥६०॥ व्याप्ताविति कालं व्याप्नोतीति ॥६१॥ स्पष्टम् ॥६२॥

धर्मश्रितः स संसारा-तीतोऽभवदसंशयम् ॥६२॥

**प्राप्तापन्नौ तयाच ॥३॥१॥६३॥**

प्रथमान्ताविमौ शब्दौ, समस्येते द्वितीयया ॥
अत्वमन्तेऽनयोः स्यादा-पन्नसत्त्वा नु सीदति ॥६३॥

**ईषद् गुणवचनैः ॥३॥१॥६४॥**

समस्यते गुणाख्यैर्य-दीषदित्येतदव्ययम् ॥
कोपेषल्लोहितेऽपीशे, किङ्करा ननु बिभ्यति ॥६४॥

**तृतीया तत्कृतैः ॥३॥१॥६५॥**

तृतीयान्तं गुणाख्यैस्तत्-कृतैः सह समस्यते ॥
अन्तर्भूतकृतार्थोऽयं, शिशुः शास्त्रपटुः पटुः ॥६५॥

**चतस्राऽर्धम् ॥३॥१॥६६॥**

समं चतसृशब्देन, समासोऽर्धस्य पूर्ववत् ॥
मात्राऽर्धचतस्रोऽर्ध-चतस्रः शाटिकाः कृताः ॥६६॥

**ऊनार्थपूर्वाद्यैः ॥३॥१॥६७॥**

पूर्वादिभिस्तथोनार्थै-स्तृतीयान्तं समस्यते ॥
माषाधिकं च माषोनं, वालोऽयं वत्सरावरः ॥६७॥

**कारकं कृता ॥३॥१॥६८॥**

समस्यते तृतीयान्तं, कर्तृ वा करणं कृता ॥

---

— एवं प्राप्तजीविका ॥६३॥ स्पष्टम् ॥६४॥ शास्त्रेण कृतः पटुरिति शास्त्रपटुः । तत्कृतैरिति अक्ष्णा काणः गुणवचनैरिति दध्ना पटुः पाटवमित्यर्थः ॥६५॥ चतस्रेति अर्धेन कृताश्चत्वारो द्रोणाः ॥६६॥ स्पष्टम् ॥६७॥ कोरकमिति

परकृतं फलेन्नात्म-कृतं स्यात् कृतमात्मना ॥६८॥

## नविंशत्यादिनैकोऽच्चान्तः ॥३॥१॥६९॥

तृतीयान्तैकशब्दस्य, नविंशत्यादिनामभिः ॥
समासोऽन्ते तथैकस्या-दिति चैकान्नविंशतिः ॥६९॥

## चतुर्थी प्रकृत्या ॥३॥१॥७०॥

विकृत्यर्थं चतुर्थ्यन्तं, नाम्ना प्रकृतिवाचिना ॥
समस्यते नु यूपाय, दारु स्याद्यूपदारुकम् ॥७०॥

## हितादिभिः ॥३॥१॥७१॥

हितादिभिश्चतुर्थ्यन्तं, तत्पुरुषे समस्यते ॥
गोहितं गोसुखं सिद्धं, नाट्यशालाऽऽत्मनेपदम् ॥७१

## तदर्थार्थेन ॥३॥१॥७२॥

तुर्यार्थेनार्थशब्देन, चतुर्थ्यन्तं समस्यते ॥
तपः कर्मक्षयार्थं स्या-न्मोक्षार्थः कर्मसंक्षयः ॥७२॥

## पञ्चमी भयाद्यैः ॥३॥१॥७३॥

भयाद्यैर्नामभिः साकं, पञ्चम्यन्तं समस्यते ॥
स्थानभ्रष्टा वने बाला, भयभीता नु वेपते ॥७३॥

## क्तेनाऽसत्त्वे ॥३॥१॥७४॥

नाम्ना क्तान्तेन सार्धं नु, पञ्चम्यन्तं समस्यते ॥

---

विद्ययोचितः ॥६८॥ स्पष्टम् ॥६९॥ प्रकृतेति रन्धनाय स्थाली ॥७०॥ स्पष्टम् ॥७१॥ तदर्थार्थेनेति पित्रेऽर्थः ॥७२॥ स्पष्टम् ॥७३॥ असत्त्व इति स्तोकाद्

असत्त्वे पञ्चमीयं चेत्, स्तोकान्मुक्तोऽपि भाग्यवान् ॥७४॥

## परःशतादिः ॥३॥१॥७५॥

पञ्चम्यन्तसमासास्तत्-पुरुषाः स्युर्निपातिताः ॥
परःशतादयः शब्दाः, परोलक्षाः परःशताः ॥७५॥

## षष्ठ्ययत्नाच्छेषे ॥३॥१॥७६॥

'शेषे' 'षष्ठी' तदन्तं तु, नाम नाम्ना समस्यते ॥
शेषोऽयत्नकृतो ग्राह्य-श्चित्सुखं मातुरीशितम् ॥७६॥

## कृति ॥३॥१॥७७॥

कृन्निमित्तकषष्ठ्यन्तं, नाम नित्यं समस्यते ॥
नाम्ना गणधरोक्तिः स्यात्, सर्वदा पापशातना ॥७७॥

## याजकादिभिः ॥३॥१॥७८॥

समस्यते समं नाम, षष्ठ्यन्त याजकादिभिः ॥
भवेद् गुरुसमः सोऽपि, यो नित्यं गुरुपूजकः ॥७८॥

## पत्तिरथौ गणकेन ॥३॥१॥७९॥

पत्तिरथौ समस्येते, षष्ठ्यन्तौ गणकेन वै ॥
स्याद्रथगणकः सेना-पती रथस्य दर्शकः ॥७९॥

---

मुक्तः । समासे एकपदत्वात्तद्धितप्रत्ययादौ आद्यस्वरवृद्ध्यादिफलम् ॥७४॥ स्पष्टम् ॥७५॥ अस्यार्थः—'शेषे' २।२।८। इति या षष्ठी तदन्तं नाम नाम्नैकार्थ्ये समासस्तत्पुरुषः स्यात्, न चेत् स शेषः 'नाथ—२।२।१० इत्यादेर्यत्नात् इति । मातुरीशितम्, इत्यत्र यत्नात् षष्ठीति न समासः। शेष इति गवां कृष्णा सम्पन्नक्षीरा ॥७६॥ स्पष्टम् ॥७७॥७८॥ पत्तिरथा-विति धनस्य गणकः ॥७९॥

## सर्वपश्चादादयः ॥३।१।८०॥

षष्ठीतत्पुरुषाः सर्व-पश्चादित्येवमादयः ॥
साधवो लक्षणे सर्व-पश्चात् सर्वचिरादयः ॥८०॥

## अकेन क्रीडाऽऽजीवे ॥३।१।८१॥

नाम्नाऽकप्रत्ययान्तेन, षष्ठ्यन्तं नु समस्यते ॥
चेत् क्रीडाजीवयोः शाल-भञ्जिका नखलेखकः ॥८१॥

## न कर्तरि ॥३।१।८२॥

कर्तृविहितषष्ठ्यन्तं, नाम नैव समस्यते ॥
नाम्नाऽकप्रत्ययान्तेन भवतः शायिका शुभा ॥८२॥

## कर्मजा तृचा च ॥३।१।८३॥

कर्तृविहितषष्ठ्यन्तं, कर्त्रर्थाऽक-तृचा समम् ॥
नाम्ना समस्यते नैव, सक्तूनां पायको वली ॥८३॥

## तृतीयायाम् ॥३।१।८४॥

कर्तरि या तृतीयाऽऽस्ते, तस्यां षष्ठी नु कर्मजा ॥
न च समस्यतेऽगोपै-र्गवां दोहो नु चित्रकृत् ॥८४॥

## तृप्तार्थपूरणाऽव्ययाऽतृश्शत्रानशा ॥३।१।८५॥

तृप्तार्थैः पूरणैः शत्रा-नशन्तैरव्ययैस्तथा ॥

---

स्पष्टम् ॥८०॥ क्रीडाजीव इति पयसः पायकः ॥८१॥ कर्तरीति इक्षुभक्षिका ॥८२॥ एवम् अपां स्रष्टा । कर्तरीत्येव पयः पायिका ॥८३॥ तृतीयायामिति शब्दानुशासनं गुरोः ॥८४॥ एवं फलानां तृप्तः, राज्ञः साक्षात्

न समासोऽतृशन्तैश्च, षष्ठ्यन्तस्यान्तिमोऽर्हताम् ॥८५॥

### ज्ञानेच्छार्चार्थाधारक्तेन ॥३॥१॥८६॥

ज्ञानेच्छार्चार्थधातोर्यः, आधारे क्तस्तदन्तकैः ॥
नामभिर्नैव षष्ठ्यन्त, समस्यते न सतां मतः ॥८६॥

### अस्वस्थगुणैः ॥३॥१॥८७॥

समस्यते न षष्ठ्यन्त–मनात्मगुणनामभिः ॥
सौरभं शतपत्राणां, गन्धवाहेन नीयते ॥८७॥

### सप्तमी शौण्डाद्यैः ॥३॥१॥८८॥

सप्तम्यन्तं समस्तं स्यात्, शौण्डाद्यैर्नामभिः समम् ॥
वेदान्तपण्डितः पान–शौण्डो ह्यचपलो जनः ॥८८॥

### सिंहाद्यैः पूजायाम् ॥३॥१॥८९॥

सिंहाद्यैर्नामभिर्नाम, सप्तम्यन्तं समस्यते ॥
पूजायां कालिकाचार्यो, नूनं कलियुधिष्ठिरः ॥८९॥

### काकाद्यैः क्षेपे ॥३॥१॥९०॥

काकाद्यैर्नामभिर्नाम, सप्तम्यन्तं समस्यते ॥
क्षेपे गम्ये कलौ काले, तीर्थकाकाः पदे पदे ॥९०॥

---

रामस्य द्विषन्, चैत्रस्य पचन्, मैत्रस्य पचमानः इत्यादयस्तृशशत्रानशोदाहरणतया बोध्याः ॥८५॥ ज्ञातः इष्टः, पूजित इत्यादियोगेऽप्येवमेवावसेयम् । इदमेषां–यातमित्यपि ॥८६॥ अस्वस्थगुणैरिति घटवर्णश्चन्दनगन्धः ॥८७॥ स्पष्टे ॥८८॥८९॥ क्षेप इति तीर्थे काकोऽस्ति ॥९०॥

## पात्रेसमितेत्यादयः ॥३।१।९१॥

सप्तम्यन्ताः समासेन, स्युः पात्रेसमितादयः ॥
निपातिता नु निन्दायां, गेहेशूरो भयद्रुतः ॥९१॥

## क्तेन ॥३।१।९२॥

क्षेपे क्तान्तेन नाम्ना नु, सप्तम्यन्तं समस्यते ॥
चेद् भस्मनिहुतं तेन, प्रवाहेमूत्रितं त्वया ॥९२॥

## तत्राहोरात्रांशम् ॥३।१।९३॥

सप्तम्यन्ताः समस्यन्ते-ऽहोरात्रांशाश्च तत्र च ॥
क्तान्तेन सह पूर्वाह्ण-भुक्तं तत्रकृतं वरम् ॥९३॥

## नाम्नि ॥३।१।९४॥

सप्तम्यन्तं नु संज्ञायां, नाम नाम्ना समस्यते ॥
अरण्येतिलकाः स्तूपे-शाणः कूपेपिशाचिकाः ॥९४॥

## कृद्येनावश्यके ॥३।१।९५॥

अर्थे आवश्यके गम्ये, सप्तम्यन्तं समस्यते ॥
कृद्यान्तेन सदा प्रात-रध्येयं पठतां हितम् ॥९५॥

## विशेषणं विशेष्येणैकार्थं कर्मधारयश्च ॥३।१।९६॥

समस्यते विशेष्येण, नामैकार्थं विशेषणम् ॥

---

स्पष्टे ॥९१॥९२॥ घटे कृतम्, शुक्लपक्षे कृतम्, अह्नि भुक्तम्, निशि नृत्तमित्यादौ तत्राहोरात्रांशाभावान्न समासः ॥९३॥ अरण्येतिलकादयो नामविशेषा इति ॥९४॥ कृदिति मासे पित्र्यम् ॥९५॥ एकार्थमिति वृद्ध

तत्पुरुषः स नीलाब्द-स्तथैव कर्मधारयः ॥९६॥

**पूर्वकालैकसर्वजरत्पुराणनवकेवलम् ॥३॥१॥९७॥**

पूर्वकालार्थकं नामै-कादीन्यैकार्थ्यवन्ति च ॥
नाम्ना समं समस्यन्ते, पार्थ एकधनुर्धरः ॥९७॥

**दिगधिकं संज्ञातद्धितोत्तरपदे ॥३॥१॥९८॥**

दिग्वाच्यधिकमित्येतत्, संज्ञायामुत्तरे पदे ॥
तद्धिते च समस्तं स्या-देते दक्षिणकोशलाः ॥९८॥

**संख्या समाहारे च द्विगुश्चानाम्न्ययम् ॥३॥१॥९९॥**

संख्यावाचि समस्तं स्यात्, समाहारे नु पूर्ववत् ॥
असंज्ञायां द्विगुश्चायं, द्वैमातुरो विनायकः ॥९९॥

**निन्द्यं कुत्सनैरपापाद्यैः ॥३॥१॥१००॥**

निन्द्यवाचकमेकार्थ-मपापाद्यैर्नु कुत्सनैः ॥
समस्यते सुधीधूर्तो, नृजाल्मः कवितस्करः ॥१००॥

**उपमान सामान्यैः ॥३॥१॥१०१॥**

उपमान सदैकार्थं, सामान्यवाचिनामभिः ॥

---

स्योक्षा वृद्धोक्षा नात्र कर्मधारयः ॥९६॥ एवं पूर्वं स्नातः पश्चादनुलिप्तः, सर्वान्नम्, जरद्गवः, पुराणकविः, नवोक्तिः, केवलज्ञानमित्यादि ज्ञेयम् । एकार्थमिति स्नात्वाऽनुलिप्तः ॥९७॥ स्पष्टम् ॥९८॥ समाहार इति अष्टौ प्रवचनमातरः, अनाम्नीति पाश्वर्षम् ॥९९॥ निन्द्यमिति वैयाकरणश्चौरः । पापादिवर्जनात् पापवैयाकरणः इत्यादौ न ॥१००॥ देवदत्ता श्यामा, अग्निर्माणवकं

समस्तं कुमुदश्येनी, काकवन्ध्यालपशोभना॥१०१॥

## उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ॥३।१।१०२॥

एकार्थमुपमेयं चेद् , व्याघ्रादिभिः समस्यते ॥
सामान्यस्याप्रयोगे तु, राजलक्ष्मीर्नरर्षभः ॥१०२॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ॥३।१।१०३॥

पूर्वादीनि समस्यन्ते, नाम्नैकार्थानि लक्ष्यताम् ॥
दीनानां पालको वीर–पुरुषो न तु पीडकः ॥१०३॥

## श्रेण्यादि कृताद्यैश्च्व्यर्थे ॥३।१।१०४॥

श्रेण्यादयः समस्यन्ते, कृताद्यैर्नामभिः समम् ॥
च्व्यर्थे गम्ये सदेकार्थाः, इन्द्रकृताः पटूकृताः ॥१०४॥

## क्तं नञादिभिन्नैः ॥३।१।१०५॥

क्तान्तं समस्यते नाम, तैरेव संयुतैर्नञा ॥
भुक्तं च तदभुक्तं च,भुक्ताभुक्तं कृताकृतम् ॥१०५॥

## सेड्नाऽनिटा ॥३।१।१०६॥

पूर्वं चेन्नाम सेट् क्तान्तं, नानिट्केन समस्यते ॥

---

इत्यादौ, क्रमश उपमानसामान्याभावान्न समासः ॥१०१॥ साम्यानुक्ताविति किं ?, पुरुषव्याघ्रः शूर इति मा भूत् ॥१०२॥ एवं पूर्वपुरुष इत्यादयो बोध्याः ॥१०३॥ इन्द्रकृता इत्यादौ समासेनैव च्व्यर्थो लक्ष्यते । पटूकृता इत्यादयश्च्व्यन्ता एव ॥१०४॥ क्तमिति–कर्तव्यमकर्तव्यञ्च । नञादिभिन्नैरिति–कृतं प्रकृतम् , कृतं चाविहितञ्च ॥१०५॥ स्पष्टम् ॥१०६॥

तेन श्लिशितमक्लिष्टं,क्लिष्टाक्लिशितमात्मना ॥१०६

सन्महत्परमोत्तमोत्कृष्टं पूजायाम् ॥३॥१॥१०७॥

सदादीनि समस्यन्ते, पूजायां नामभिः समम् ॥
एकार्थीनि महासान्यो, जगत्यां सज्जनो जनः ॥१०७॥

वृन्दारकनागकुञ्जरैः ॥३॥१॥१०८॥

पूज्यं समस्यते वृन्दा-रकनागककुञ्जरैः ॥
वृषवृन्दारको हस्ति-नागस्तुरगकुञ्जरः ॥१०८॥

कतरकतमौ जातिप्रश्ने ॥३॥१॥१०९॥

जातिप्रश्ने समस्येते, कतरकतमौ समम् ॥
जात्या कतमकालापः, कतरः कतमः सितः ॥१०९॥

किं क्षेपे ॥३॥१॥११०॥

निन्दायां नु किमित्येत-न्नामैकार्थं समस्यते ॥
क्षिप्यमाणार्थशब्देन, किंराजा यो न रक्षति ॥११०॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणी
प्रवक्तृश्रोत्रियाध्यापकधूर्तप्रशंसारूढैर्जातिः
॥३॥१॥१११॥

जातिवाचि समस्तं स्यात्, पोटाद्यैर्नामभिः समम् ॥

---

एवं परमपुरुषादयो बोध्याः । पूजायामिति सन् घटोऽस्तीत्यर्थः ॥१०७॥ पूजायामिति किम् ? सुसीमो नागः ॥१०८॥ स्पष्टम् ॥१०९॥ इभ्यपोटा, अग्निस्तोकम्, दधिकतिपयम्, गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोवष्कयणी, कठप्रवक्ता, कठश्रोत्रियः, कठाध्यायकः, मृगधूर्तः,

प्रशंसारूढशब्दैश्च, महेभ्ययुवती रमा ॥१११॥

## चतुष्पाद् गर्भिण्या ॥३।१।११२॥

समस्तं नाम गर्भिण्या, चतुष्पाज्जातिवाचकम् ॥
शार्दूलगर्भिणी वाजि–गर्भिणी गजगर्भिणी ॥११२॥

## युवाखलतिपलितजरद्वलिनैः ॥३।१।११३॥

युवन्नित्येतदेकार्थं, खलत्याद्यैः समस्यते ॥
पादपमातपातप्तो, युवखलतिराश्रितः ॥११३॥

## कृत्यतुल्याख्यमजात्या ॥३।१।११४॥

कृत्यान्तं तुल्यपर्याय–मजातिवाचिना समम् ॥
समस्तं जायते भोज्य–तिक्तं पानीयशीतलम् ॥११४॥

## कुमारः श्रमणादिना ॥३।१।११५॥

भवेत् कुमार इत्येतत्, समस्तं श्रमणादिना ॥
कुमारश्रमणा नूनं, धर्मकार्येषु तत्पराः ॥११५॥

## मयूरव्यंसकेत्यादयः ॥३।१।११६॥

तत्पुरुषे निपात्यन्ते, मयूरव्यंसकादयः ॥
मयूरव्यंसको वाग्मी, निश्चप्रचं नृपञ्चकः ॥११६॥

---

गोमतल्लिका, गोप्रकाण्डम् ॥१११॥–जातिरित्येव कालाक्षी–गर्भिणी ॥११२॥ एवं युवपलितः, युवजरन्, युववलिनः, इत्यादि ॥११३॥ अजात्येति भोज्य ओदनः ॥११४॥ स्पष्टम् ॥११५॥ आकृतिगणोऽयम् । शाकपार्थिवादयोऽप्यत्र ॥११६॥

## चार्थे द्वन्द्वः सहोक्तौ ॥३॥१॥११७॥

सहोक्तिविषये चार्थे, नाम नाम्ना समस्यते ॥
द्वन्द्वसंज्ञः समासोऽयं, वन्देऽहं वृषभाजितौ ॥११७॥

## समानामर्थेनैकः शेषः ॥३॥१॥११८॥

समानार्थकशब्दानां, मध्ये एकश्च शिष्यते ॥
सहोक्तौ गम्यमानायां, वक्रदण्डौ सितास्तथा ॥११८॥

## स्यादावसङ्ख्येयः ॥३॥१॥११९॥

शब्दानां तुल्यरूपाणां, स्यादावेकश्च शिष्यते ॥
असङ्ख्येयः सहोक्तिश्चे–दक्षाः पादाः नरा द्विजाः ॥११९॥

## त्यदादिः ॥३॥१॥१२०॥

त्यदादिना तथाऽन्येन, त्यदादिः शिष्यते ततः ॥
एक एव स चान्यस्तौ, भवन्तौ कुरुतां हितम् ॥१२०॥

## भ्रातृपुत्राः स्वसृदुहितृभिः ॥३॥१॥१२१॥

दुहित्रर्थेन पुत्रार्थः, स्वस्रर्थेन सहोदरः ॥
सहोक्तौ शिष्यते ह्येकः स्वसा भ्राता च भ्रातरौ ॥१२१॥

---

चार्थ इति वीप्सासहक्तौ माभूत्–ग्रामो ग्रामो रमणीयः । सहोक्ताविति प्लक्षश्च न्यग्रोधश्च वीक्ष्यतामिति ॥११७॥ अर्थेन समानामिति किम् ? प्लक्षन्यग्रोधौ । सहोक्तावित्येव–वक्रश्च कुटिलश्च दृश्यः ॥११८॥ स्यादाविति किम् ? माता च जननी माता च धान्यस्य–मातृमातरौ । असंख्येय इति एकश्चैकश्च ॥११९॥ सष्टम् ॥१२०॥ एवं पुत्रश्च दुहिता च पुत्रौ ॥१२१॥

## पिता मात्रा वा ॥३॥१॥१२२॥

पितृशब्दः सहोक्तौ वा, मातृशब्देन शिष्यते ॥
पितरौ स्तः पिता माता-ऽमू मातापितराविमौ ॥१२२॥

## श्वशुरः श्वश्रूभ्यां वा ॥३॥१॥१२३॥

श्वशुरः शिष्यते श्वश्रू-नाम्ना वा चेत् सहोक्तता ॥
तौ श्वश्रूश्वशुरौ तस्यास्तस्येमौ श्वशुरौ मतौ ॥१२३॥

## वृद्धो यूना तन्मात्रभेदे ॥३॥१॥१२४॥

वृद्धो यूना सहैकोक्तौ, वृद्धवाचि तु शिष्यते ॥
यदि तन्मात्रभेदः स्या-द्गार्ग्यौ गार्ग्यश्च तत्सुतः ॥१२४॥

## स्त्री पुंवच्च ॥३॥१॥१२५॥

वृद्धस्त्रीवाचिशब्दस्तु, शिष्यते युववाचिना ॥
पुंवच्च स च तन्मात्र-भेदे गार्ग्यौ सुतः सुता ॥१२५॥

## पुरुषः स्त्रिया ॥३॥१॥१२६॥

स्त्रीवाचिना सहोक्तौ पुं-शब्द एकश्च शिष्यते ॥
चेत् स्यात् तन्मात्रभेदोऽत्र, नरौ पुरुषयोपितौ ॥१२६॥

## ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः ॥३॥१॥१२७॥

ग्राम्याणामशिशूनां द्वि-शफानां पशुप्राणिनाम् ॥

---

स्पष्टे ॥१२२॥१२३॥ गर्गगार्ग्यायणौ, गार्ग्यगर्गौ, गार्ग्यवात्स्यायना-वित्यादौ वृद्धयुवतन्मात्रभेदाभावान्नैकशेषः । तत्सुतः-गार्ग्यायणः ॥१२४॥ गार्गी च गार्ग्यायणश्च गार्ग्यौ ॥१२५॥ पुरुषाभावे तु तीरं नदनदीपतेः । तन्मात्रभेदाभावे तु स्त्रीपुंसौ ॥१२६॥ अजाश्च स्त्रियः, अजाश्च नरा इति इमा

स्त्रीवाच्येकः समूहेऽर्थे, पूर्ववत् शिष्यते ह्यजाः ॥१२७॥

**क्लीबमन्येनैकं च वा ॥३॥१॥१२८॥**

सहोक्तौ शिष्यते क्लीब-मक्लीबेन च तच्च वा ॥
तन्मात्रभेद एकार्थे, शुक्लं वस्त्रं च कम्बलः ॥१२८॥

**पुष्यार्थाद् भे पुनर्वसुः ॥३॥१॥१२९॥**

पुष्यार्थद्धि स्थितात्तादृक्-शब्दः पुनर्वसुः परः ॥
सहोक्तौ द्व्यर्थ एकार्थ, इमौ पुष्यपुनर्वसू ॥ १२९॥

**विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः ॥३॥१॥१३०॥**

द्वन्द्वश्चेत् स्वैर्नवैकार्थो, द्रव्यभिन्नविरोधिनाम् ॥
विद्वान् विचारयेन्नित्यं, लाभालाभं हिताहिते ॥१३०॥

**अश्ववडवपूर्वापराधरोत्तराः ॥३॥१॥१३१॥**

उक्ता द्वन्द्वा नवैकार्था, निपात्यन्ते त्रयः स्वकैः ॥
पूर्वापरं तथैवाश्व-वडवमधरोत्तरम् ॥१३१॥

**पशुव्यञ्जनानाम् ॥३॥१॥१३२॥**

पशूनां व्यञ्जनानां चै-कार्थो द्वन्द्वः स्वकैर्नवा ॥

---

अजाः । इमे खरवो वर्करा गर्दभा इमौ गावावित्यादौ क्रमशो ग्राम्याशिशु-द्विशफसङ्घत्वात् पुँशेषः । प्रायः इति इमे उष्ट्राः ॥१२७॥ अन्येनेति शुक्लं च शुक्लः च शुक्ले । तन्मात्रभेद इत्येव हिमहिमान्यौ ॥१२८॥ पुनर्वसुशब्दो द्व्यर्थकः, पुष्यश्च पुनर्वसू च पुष्यपुनर्वसू ॥१२९॥ विरोधाभावे तु न कामक्रोधौ । अद्रव्याणामिति शीतोष्णे जले । स्वैरिति बुद्धिसुखदुःखानि ॥१३०॥ विकल्पपक्षे 'पूर्वापरे' इत्यादावपि ॥१३१॥ विकल्पपक्षे दधिघृते,

दधिघृतं प्रियं चेत्ते, गोमहिषं प्रपाल्यताम् ॥१२२॥

## तरुतृणधान्यमृगपक्षिणां बहुत्वे ॥३॥१॥१२३॥

तर्वादीनां बहुत्वे स्वै-र्द्वन्द्वैकार्थौ विभाषया ॥
तिलमाषं तथा हंस-चक्रवाकं पुरः स्थितम् ॥१२३॥

## सेनाङ्गक्षुद्रजन्तूनाम् ॥३॥१॥१२४॥

सेनाङ्गक्षुद्रजन्तूनां, द्वन्द्वैकार्थौ बहौ ध्रुवम् ॥
हस्त्यश्वरथपादातं, पश्य कीटपिपीलिकम् ॥१२४॥

## फलस्य जातौ ॥३॥१॥१२५॥

बहुत्वे वर्तमानानां, शब्दानां फलवाचिनाम् ॥
जातौ स्वैर्द्वन्द्व एकार्थौ, बदरामलकं चिनु ॥१२५॥

## अप्राणिपश्वादेः ॥३॥१॥१२६॥

भवेदप्राणिपश्वादेः, शब्दस्य जातिवाचिनः ॥
द्वन्द्व एकार्थवद्भावो, नारोह तरुपर्वतम् ॥१२६॥

## प्राणितूर्याङ्गाणाम् ॥३॥१॥१२७॥

प्राणितूर्याङ्गशब्दानां, द्वन्द्वैकार्थः प्रजायते ॥
दन्तोष्ठं वाद्यतां भेरी,-मृदङ्गं रङ्गमण्डपे ॥१२७॥

---

गोमहिषावित्यादि ॥१२२॥ पक्षे तिलमाषा इत्यादि ॥१२३॥ स्पष्टम् ॥१२४॥ जातावितिति एतानि बदरामलकानि सन्ति ॥१२५॥ पश्वादेरिति-पशुव्यञ्जनानाम् ।३।१।१२२। इत्यत आरभ्य सूत्रचतुष्कोक्तशब्दानाम् ॥१२६॥ स्वैरिति शेषः, तथा च पाणिग्रीवावित्यादौ न ॥१२७॥

## चरणस्य स्थेणोऽद्यतन्यामनुवादे ॥३॥१॥१३८॥

अद्यतनीपरस्थेणो-र्योगेऽनुकथने भवेद् ॥
एकार्थश्चरणार्थस्य, प्रत्यष्ठात् कठकौथुमम् ॥१३८॥

## अक्लीबेऽध्वर्युक्रतोः ॥३॥१॥१३९॥

अनपुंसकवृत्तीनाम-ध्वर्युक्रतुवाचिनाम् ॥
भवेत् स्वैद्वन्द्व एकार्थः, पौण्डरिकातिरात्रकम् ॥१३९॥

## निकटपाठस्य ॥३॥१॥१४०॥

एकार्थः स्वैर्भवेद्द्वन्द्वे, समीपपाठवाचिनाम् ॥
पदकक्रमकं चैव, भवेत् क्रमकवार्तिकम् ॥१४०॥

## नित्यवैरस्य ॥३॥१॥१४१॥

स्वाभाविकविरोधानां, शब्दानां द्वन्द्व एकता ॥
मार्ज्जारमूषिकं नाग-नकुलं देवदानवम् ॥१४१॥

## नदीदेशपुरां विलिङ्गानाम् ॥३॥१॥१४२॥

विभिन्नलिङ्गशब्दानां, नदीदेशपुरां भवेत् ॥
एकार्थो द्वन्द्व उद्धचेरा-वनि सौराष्ट्रमालवम् ॥१४२॥

## पात्र्यशूद्रस्य ॥३॥१॥१४३॥

पात्रं संस्कारमासाद्य, यैर्भुक्ते शुद्धतां व्रजेत् ॥

---

स्वैर्द्वन्द्व इति शेषः । अनुवाद इति उदगुः कठकालापाः, अप्रसिद्धं कथयन्ति ॥ १३८ ॥ अस्यार्थः-अध्वर्युः-यजुर्वेदः, तद्विहितक्रतुवाचिनां स्वैर्द्वन्द्व एकार्थः स्यात्, न चेदेते क्लीववृत्तयः ॥१३९॥ स्पष्टम् ॥१४०॥ नित्यवैराभावे तु देवमानवाः॥१४१॥विलिङ्गानामिति गङ्गायमुने॥१४२॥पात्र्येति

तच्छूद्रवाचिनां द्वन्द्वे-कार्थः किष्किन्धगन्धकम् ॥१४३॥

गवाश्वादिः ॥३॥१॥१४४॥

एकार्थो जायते द्वन्द्वे, गवाश्वप्रभृतिः सदा ॥
कुब्जकैरातकं तद्वत्, गवाश्वं कुब्जवामनम् ॥१४४॥

न दधिपयआदिः ॥३॥१॥१४५॥

दधिपयःप्रमुख्याणा-मेकार्थो नैव जायते ॥
सूर्याचन्द्रमसौ राम-लक्ष्मणौ हरिवासवौ ॥१४५॥

सङ्ख्याने ॥३॥१॥१४६॥

इयत्तायाः परिच्छेदे, शब्दानां वर्तिवाचिनाम् ॥
एकार्थो न भवेद् द्वन्द्व, दश गोमहिषाः गृहे ॥१४६॥

वान्तिके ॥३॥१॥१४७॥

सङ्ख्यानस्य तु सामीप्ये, एकार्थः स्याद्विभाषया ॥
द्वन्द्वे उपदशं दन्तो-ष्ठं तथोपदशाश्च ते ॥१४७॥

प्रथमोक्तं प्राक् ॥३॥१॥१४८॥

समासे प्रथमान्तेन, निर्दिष्टं प्राक् प्रयुज्यते ॥
यूपदारु मषीपात्रं, सप्तगङ्गं सुखश्रितः ॥१४८॥

राजदन्तादिषु ॥३॥१॥१४९॥

राजदन्तादिशब्देषु, शब्दाः पूर्वनिपातनम् ॥

---

-जनङ्गमबुक्कसाः ॥१४३॥ सूत्रपञ्चकमतिरोहितार्थकम् ॥१४४॥१४५॥१४६॥
॥१४७॥१४८॥ दन्तानां राजा राजदन्तः एवमन्यत्रापि, अनुप्रयोगार्हाः

भजन्तेऽनुप्रयोगार्हा, राजदन्तो भवेन्महान् ॥१४९॥

## विशेषणसर्वादिसंख्यं बहुव्रीहौ ॥३॥१॥१५०॥

सङ्ख्यावाचि च सर्वादि, तथा नाम विशेषणम् ॥
पतेत् पूर्वं बहुव्रीहौ, चित्रगुः स्वधनो द्विकः ॥१५०॥

## क्ताः ॥३॥१॥१५१॥

सर्वं पूर्वं बहुव्रीहौ, क्तान्त नाम पतेद् ध्रुवम् ॥
भिक्षुर्भिक्षितभिक्षोऽयं, सम्यगधीतलक्षणः ॥१५१॥

## जातिकालसुखादेर्नवा ॥३॥१॥१५२॥

जातिकालसुखादिभ्यो, बहुव्रीहौ क्तप्रत्ययम् ॥
पूर्वं शाङ्गरजग्धी वा, कुमारी जग्धशाङ्गरा ॥१५२॥

## आहिताग्न्यादिषु ॥३॥१॥१५३॥

आहिताग्न्यादिषु क्तान्त, बहुव्रीहिषु वा पतेत् ॥
पूर्वं स जात दन्तोऽयं,दन्तजातश्च वार्षिकः ॥१५३॥

## प्रहरणात् ॥३॥१॥१५४॥

प्रहरणार्थशब्देभ्यो बहुव्रीहौ क्तप्रत्ययम् ॥
पूर्वं वा धृतधन्वाऽसौ, रणे शूरो धनुर्धृतः ॥१५४॥

## न सप्तमीन्द्वादिभ्यश्च ॥३॥१॥१५५॥

सप्तम्यन्तं बहुव्रीहा-विन्द्वादेश्चास्त्रवाचिनः ॥
पूर्वं न स्याद् धनुष्पाणि-चक्रपाणीन्दुशेखराः ॥१५५॥

---

पश्चात्प्रयोगयोग्या इति ॥१४९॥ स्पष्टं सूत्रषट्कम्॥१५०॥१५१॥१५२॥१५३॥
॥१५४॥१५५॥

## गड्वादिभ्यः ॥३॥१॥१५६॥

सप्तम्यन्तं बहुव्रीहौ, गड्वादिभ्यो विभाषया ॥
पूर्वं पतति शुर्वन्त-श्चान्तेगुरुर्वहेगड्डुः ॥१५६॥

## प्रियः ॥३॥१॥१५७॥

प्रियशब्दो बहुव्रीहौ, पतेत् पूर्वं विभाषया ॥
श्रेयःप्रियः प्रियश्रेयाः, प्रियचत्वाश्चतुष्प्रियः ॥१५७॥

## कडारादयः कर्मधारये ॥३॥१॥१५८॥

वा कडारादयः शब्दाः पूर्वं स्युः कर्मधारये ॥
यो जैमिनिकडारः स्यात्, स स्यात्कडारजैमिनिः ॥१५८॥

## धर्मार्थादिषु द्वन्द्वे ॥३॥१॥१५९॥

धर्मार्थादिषु पूर्वं वा, द्वन्द्वे यत् प्राप्तपूर्वकम् ॥
धर्मार्थावर्थधर्मौ वा, चन्द्रार्कावर्कचन्द्रकौ ॥१५९॥

## लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वराच्र्यमेकम् ॥३॥१॥१६०॥

लघ्वक्षरं सखिं त्यक्त्वे-दुदन्त च स्वराल्पकम् ॥
स्वराद्यदन्तमर्च्यं च, द्वन्द्वे पूर्वं वधूवरौ ॥१६०॥

---

पक्षे गड्डवहः ॥१५६॥ व्यक्तं सूत्रत्रयम् ॥१५७॥१५८॥१५९॥ शरशीर्षम्, अग्नीषोमौ, वायुतोयम्, अश्वशस्त्रम्, प्लक्षन्यग्रोधौ, श्रद्धामेधे इत्युदाहरणतया, सुतसखायौ, कुक्कुटमयूरौ–मयूरकुक्कुटौ, शङ्खदुन्दुभिवीणाः, विस्पष्टपटुरिति प्रत्युदाहरणत्वेनावसेयम् ॥१६०॥

**मासवर्णभ्रात्रनुपूर्वम् ॥३॥१॥१६१॥**

मासवाचि तथावर्ण-वाचि च भ्रातृवाचिकम् ॥
द्वन्द्वे पूर्वं यथापूर्वं, ज्येष्ठाषाढौ बलाच्युतौ ॥१६१॥

**भर्तुतुल्यस्वरम् ॥३॥१॥१६२॥**

तुल्यस्वरं यथापूर्वं, भवाचि ऋतुवाचिकम् ॥
द्वन्द्वे पूर्वं भवेच्चित्रा-स्वाती च ग्रीष्मप्रावृषौ ॥१६२॥

**संख्या समासे ॥३॥१॥१६३॥**

पूर्वं समासमात्रे स्यात्, सङ्ख्यावाचि यथाक्रमम् ॥
पञ्चषाः द्विशती द्वित्राः, त्रयोदश चतुर्दश ॥१६३॥

॥ इति प्रथमः पादः ॥

---

ब्राह्मणक्षत्रियाविति वर्णोदाहरणम् ॥१६१॥ तुल्यस्वरमिति आर्द्रामृगशिरसी, ग्रीष्मवसन्ताविति ॥१६२॥ स्पष्टम् ॥१६३॥

॥ इति प्रथमः पादः ॥

## परस्परान्योऽन्येतरेतरस्याम् स्यादेर्वाऽपुंसि ॥३॥१॥२॥

स्यादेः परस्परादीना-माम् स्यात् क्लीबे स्त्रियां नवा ॥
भोजयतः कुले सख्यौ, परस्परां परस्परम् ॥१॥

## अमव्ययीभावस्यातोऽपञ्चम्याः ॥३॥२॥१॥

स्याददन्ताव्ययीभाव-समासयोगिनो ध्रुवम् ॥
स्यादेरम् पञ्चमीभिन्न-स्योपकुम्भं विलोकय ॥२॥

## वा तृतीयायाः ॥३॥१॥३॥

स्याददन्ताव्ययीभाव-तृतीयाया नवाऽम् भवेत् ॥
उपकुम्भेन किन्ते स्या-दुपकुम्भं प्रयोजनम् ॥३॥

## सप्तम्या वा ॥३॥१॥४॥

स्याददन्ताव्ययीभाव-सप्तम्या अम् विभाषया ॥
उपकुम्भे निधेहीदम्, उपकुम्भमिदं नय ॥४॥

## ऋद्धनदी वंश्यस्य ॥३॥१॥५॥

अदन्तार्द्धनदीवंश्या-न्ताव्ययीभावतः परम् ॥
सप्तम्याः स्यादमुन्मत्त-गङ्गं सुमगधं वस ॥५॥

## अनतो लुप् ॥३॥२॥६॥

अनदन्ताव्ययीभाव-स्यादेर्लुब् जायते ध्रुवम् ॥
सामर्थ्यमुपकर्तृ स्या-दधस्त्रि साहसादिकम् ॥६॥

---

एवम् अन्योऽन्यामन्योऽन्यमित्यादि । पुंसि तु इमे नराः परस्परं भोजयन्तीत्येव ॥१॥ अत इति अधिस्त्रि । पञ्चम्यां तु उपकुम्भादिति ॥२॥ प्रियोपकुम्भेनेत्य‌दादव्ययीभावाभावादमाभावः ॥३॥ स्पष्टम् ॥४॥ एकविंशति भारद्वाजमिति वंश्योदाहरणम् ॥५॥ स्पष्टम् ॥६॥

## अव्ययस्य ॥३॥२॥७॥

स्याल्लुब् अव्ययसम्बन्धि-स्यादेः शब्दानुशासने ॥
प्रातरुच्चैः पठेन्नैव, ध्यात्वाऽर्हं मङ्गलं स्मर ॥७॥

## ऐकार्थ्ये ॥३॥२॥८॥

ऐक्यपद्यनिमित्तस्य, स्यादेर्लुब् वै विधीयते ॥
राजराजोऽप्यसद् भाग्या-दपुत्रः पुत्रकाम्यति ॥८॥

## न नाम्येकस्वरात् खित्युत्तरपदेऽमः ॥३॥२॥९॥

नाम्यन्तैकस्वरात् पूर्व-पदादमो न लुब् भवेत् ॥
खित्युत्तरपदे मित्रं, श्रियंमन्यं न मार्गय ॥९॥

## असत्त्वे ङसेः ॥३॥२॥१०॥

असत्त्वे यो ङसिस्तस्य, लुब् भवेन्नोत्तरे पदे ॥
अभ्याशादागतोऽरीणां, स्तोकान्मुक्तो नु मोदते ॥१०॥

## ब्राह्मणाच्छंसी ॥३॥२॥११॥

लुब् न स्याद् ब्राह्मणाच्छंसीत्यत्र ङसेर्निपातनात् ॥
आदाय ब्राह्मणाच्छंसी, ब्राह्मणाद् यः प्रशंसति ॥११॥

## ओजोऽञ्जःसहोऽम्भस्तमस्तपसष्टः ॥३॥२॥१२॥

एभ्यः परं तृतीयैक-वचनस्योत्तरे पदे ॥
लुब् न स्यात्तपसा गतं, बलं किञ्चिद्विलक्षणम् ॥१२॥

---

अत्युच्चैस इति न लुबव्ययाभावात् ॥७॥ सूत्रद्वयं स्पष्टम् ॥८॥९॥ ॥१०॥ ब्राह्मणाच्छंसी ऋत्विग्विशेषः तदभावे तु लुब् यथा ब्राह्मणशंसिनी स्त्री ॥११॥ एवम् ओजसाकृतमित्यादि बोध्यम् ॥१२॥

## पुंजनुषोऽनुजान्धे ॥३॥२॥१३॥

आभ्यां परं क्रमाट्टाया, अनुजान्धोत्तरे पदे ॥
लुब् न पुंसानुजोऽपि स्याज्जनुषान्धः स्वकर्मणा ॥१३॥

## आत्मनः पूरणे ॥३॥२॥१४॥

नात्मनस्तु परं टायाः, पूरणान्तोत्तरे पदे ॥
लुब् आत्मनाद्वितीयोऽयं, पाण्डवानां वृकोदरः ॥१५॥

## मनसश्चाज्ञायिनि ॥३॥२॥१५॥

मनःशब्दात्मशब्दाभ्या-माज्ञायिन्युत्तरे पदे ॥
टाया लुब् नात्मनाज्ञायि-मनसाज्ञायिनो बुधाः ॥१५॥

## नाम्नि ॥३॥२॥१६॥

संज्ञायां मनसष्टाया, लुब् न स्यादुत्तरे पदे ॥
मनसासञ्ज्ञता काचि-द्देवी दिवि विराजते ॥१६॥

## परमात्मभ्यां ङेः ॥३॥२॥१७॥

परशब्दात्मशब्दाभ्यां, ङेर्न लुब् नाम्नि संभवेत् ॥
परस्मैपदमिच्छद्भि,-रात्मनेपदमीक्ष्यते ॥१७॥

## अदूव्यञ्जनात् सप्तम्या बहुलम् ॥३॥२॥१८॥

अदन्ताद् व्यञ्जनान्ताच्च, सप्तम्या बहुलं न लुप् ॥
अरण्येतिलका नाम्नि, त्वचिसारो युधिष्ठिरः ॥१८॥

---

स्पष्टम् ॥१३॥ वृकोदरः-भीमः ॥१४॥ स्पष्टम् ॥१५॥ नामाभावे तु मनोदत्ता इत्यादौ लुबेव ॥१६॥ स्पष्टम् ॥१७॥ अद्व्यञ्जनादिति भूमिपाशः नाम्नीति तीर्थकाकः ॥१८॥

## प्राक्कारस्य व्यञ्जने ॥३॥२॥१९॥

प्राचां कारस्य संज्ञायां, व्यञ्जानाद्युत्तरे पदे ॥
अदृव्यञ्जनान्न सप्तम्या, लुप् स्याद् दृषदिमाषकः ॥१९॥

## तत्पुरुषे कृति ॥३॥२॥२०॥

अदृव्यञ्जनान्न सप्तम्या, लुप् कृदन्ते पदोत्तरे ॥
तत्पुरुषे खलः कर्णे-जपः स्तम्बेरमो गजः ॥२०॥

## मध्यान्ताद् गुरौ ॥३॥२॥२१॥

मध्यान्तशब्दतो लुप् न, स्यात् सप्तम्या गुरौ पदे ॥
जगणो जायते मध्ये-गुरुरन्तेगुरुश्च सः ॥२१॥

## अमूर्धमस्तकात् स्वाङ्गादकामे ॥३॥२॥२२॥

अमूर्धमस्तकात् स्वाङ्गा-ददन्तव्यञ्जनान्ततः ॥
कामभिन्ने परे नो लुप्, राजते उदरेमणी ॥२२॥

## बन्धे घञि नवा ॥३॥२॥२३॥

अदृव्यञ्जनान्तु सप्तम्या, स्याद् बन्धे घञि लुप् नवा ॥
हस्तेबन्धा इमे चौरा-श्चक्रेबन्धाः शिरोरुहाः ॥२३॥

---

राजलभ्यो रक्षानिर्वेशः कारः । प्रागिति किम् ? यूथपशुः नायं प्राचामपि तूदीचाम् ॥१९॥ स्पष्टम् ॥२०॥ सः-सगणः, 'मस्त्रिगुरुस्त्रिलघुश्च नकारो, भादिगुरुः पुनरादिलघुर्नः । जो गुरुमध्यगतो रलमध्यः, सोऽन्तगुरुः कथितोऽन्तलघुस्तः ' ॥२१॥ इति श्लोकोऽनुसर्तव्यो गणज्ञानार्थम् ॥२१॥ मूर्द्धशिखः, मस्तकशिखः, मुखकामः इत्यादि प्रत्युदाहरणतया बोध्यम् ॥२२॥ विकल्पपक्षे हस्तबन्धश्चक्रबन्ध इत्यादि ॥२३॥

## कालात्तनतरतमकाले ॥३॥२॥२४॥

कालार्थाद्व्यञ्जनान्तान्तु, काले तने तरे तमे ॥
सप्तम्या लुब् न पूर्वाह्णे-तने काले सदाचरेत् ॥२४॥

## शयवासिवासेष्वकालात् ॥३॥२॥२५॥

स्याच्छयवासिवासेषु, कालान्याद्व्यञ्जनान्ततः ॥
सप्तम्या लुब् नवा कष्टं, ग्रामेवासा बिलेशयः ॥२५॥

## वर्षक्षरवराप्सरःशरोरोमनसो जे ॥३॥२॥२६॥

वर्षादिभ्यो नवा लुप् स्यात्, सप्तम्या जे पदोत्तरे
अप्सुजमब्जमादित्यो-दये शतदलं भवेत् ॥२६॥

## द्युप्रावृड्वर्षाशरत्कालात् ॥३॥२॥२७॥

लुब् न दिव्प्रभृतिभ्यो जे, सप्तम्या उत्तरे पदे ॥
दुग्ध शरदिजं हन्ति, ज्वरं प्रावृषिजं कटुः ॥२७॥

## अपो ययोनिमतिचरे ॥३॥२॥२८॥

अपो लुप् नैव सप्तम्याः, स्याद् ये योनौ मतौ चरे ॥
अप्सुचरा मता मत्स्या, अप्सुयोनिः क्षणद्युतिः ॥२८॥

---

पक्षे पूर्वाह्णतन इत्यादि ॥२४॥ विकल्पपक्षे-ग्रामवासः, बिलशय इत्यादि एवम् अन्तेवासी अन्तवासी इत्याद्यपि ॥२५॥ एवं वर्षेजः, वर्षज इत्याद्यपि ॥२६॥ एवं दिविजः, वर्षासुजः, कालेज इति। ज्वरमिति उभयत्रान्वेयम्; तेन शरदिजं ज्वरं दुग्धं हन्ति, प्रावृषिज ज्वरं कटुः हन्ति इति ॥२७॥ एवमप्सव्यः, अप्सुमतिरिति ॥२८॥

नेन् सिद्धस्थे ॥३॥२॥२९॥

इनि सिद्धे स्थशब्दे च, सप्तम्या न भवेद्लुप् ॥
हर्म्यवर्ती समस्थश्चेत्, कर्मसिद्धः सदा भवेत् ॥२९॥

षष्ठ्याः क्षेपे ॥३॥२॥३०॥

क्षेपे गम्ये न षष्ठ्या लुप्, स्यादुत्तरपदे परे ॥
इयं दासस्यभार्याऽयं, वृषल्याःपतिरुद्धतः ॥३०॥

पुत्रे वा ॥३॥२॥३१॥

क्षेपे गम्ये न वा लुप् स्यात्, षष्ठ्याः पुत्रे पदे परे ॥
दास्याः पुत्रो भवे दासी-पुत्रो दासः सदातनः ॥३१॥

पश्यद्वाग्दिशो हरयुक्तिदण्डे ॥३॥२॥३२॥

लुब् हरयुक्तिदण्डेषु, न पश्यद्वाग्दिशां परम् ॥
षष्ठ्या भवेद् दिशोदण्डः, कालदः पश्यतोहरः ॥३२॥

अदसोऽकञायनणोः ॥३॥२॥३३॥

अदसो लुब् न षष्ठ्याः स्या-दकञायनणोः सतोः ॥
स आमुष्यायणश्चास्-भवेदामुष्यपुत्रिका ॥३३॥

देवानांप्रियः ॥३॥२॥३४॥

देवानांप्रिय इत्यत्र, षष्ठ्या न लुप् निपात्यते ॥
स देवानांप्रियो मूर्खो, बोधितोऽपि न बुध्यते ॥३४॥

---

स्पष्टम् ॥२९॥ क्षेपाभावे तु ब्राह्मणकुलमित्यादि । इदं चौरकुलकम्, इयं दासभार्या अयं वृषलीपतिः इत्येवं यथावत्कथनप्रसङ्गे क्षेपाभावोऽवसेय इति ॥३०॥ विकल्पार्थं पृथग् वचनम् ॥३१॥ एवं वाचोयुक्तिः ॥३२॥ स्पष्टे ॥३३॥३४॥

### शेपपुच्छलाङ्गूलेषु नाम्नि शुनः ॥३॥२॥३५॥

श्वन्शब्दात् परं षष्ठ्याः, शेपादौ नाम्नि नैव लुप् ॥
शुनःपुच्छश्शुनश्शेप-श्शुनो-लाङ्गूलकः क्वचित् ॥३५॥

### वाचस्पतिवास्तोष्पतिदिवस्पतिदिवोदासम् ॥३॥२॥३६॥

निपात्यते न लुप् षष्ठ्या, वाचस्पत्यादिनामसु ॥
वाचस्पतिर्दिवोदासो, वास्तोष्पतिर्दिवस्पतिः ॥३६॥

### ऋतां विद्यायोनिसम्बन्धे ॥३॥२॥३७॥

स्याद्विद्यायोनिसम्बन्धे, षष्ठ्या लुप् नो ऋतां परे ॥
पितुःपुत्रेण वै होतु-रन्तेवासी समादृतः ॥३७॥

### स्वसृपत्योर्वा ॥३॥२॥३८॥

लुब् विद्यायोनिसम्बन्धे, स्वसृपत्योर्ऋतां नवा ॥
षष्ठ्या होतुःस्वसा धन्या, स्वसृपतिः स्वसुःपतिः॥३८॥

### आ द्वन्द्वे ॥३॥२॥३९॥

भवेदादन्त आदेशः, ऋतां द्वन्द्वे तु पूर्ववत् ॥
मातादुहितरौ होता-पोतारौ स्वसृयातरौ ॥३९॥

### पुत्रे ॥३॥२॥४०॥

पुत्रोत्तरपदे द्वन्द्व, आदन्तः पूर्ववद्भवेत् ॥
मातापुत्रौ पितापुत्रौ होतापुत्रौ पदे पदे ॥४०॥

---

नामासावेतु श्वपुच्छनित्यादि ॥३५॥ अनामे तु वाक्पतिरित्यादि ॥३६॥ स्पष्टम् ॥३७॥ विकल्पपक्षे होतृस्वसा ॥३८॥ स्पष्टम् ॥३९॥४०॥ स्पष्टे

## वेदसहश्रुतावायुदेवतानाम् ॥३॥२॥४१॥

वेदे सहश्रुतानां स्या-द्वायुभिन्नसुपर्वणाम् ॥
द्वन्द्व आदन्त आदेशः सूर्याचन्द्रमसौ ध्रुवौ ॥४१॥

## ईः षोमवरुणोऽग्नेः ॥३॥२॥४२॥

ईर्भवेदग्निशब्दस्य, षोमे च वरुणे परे ॥
प्राग्वद् द्वन्द्व इमावग्नीषोमौ वह्निनिशाकरौ ॥४२॥

## इर्वृद्धिमत्यविष्णौ ॥३॥२॥४३॥

द्वन्द्वेऽविष्णाविदन्तोऽग्ने-र्वृद्धिमत्युत्तरे पदे ॥
आग्निसौमं चरेत्कर्मा-ऽऽलभेत चाग्निवारुणीम् ॥४३॥

## दिवो द्यावा ॥३॥२॥४४॥

द्यावा स्याद् देवताद्वन्द्वे, दिवः पूर्वपदस्य वै ॥
स्वर्लोकं मर्त्यलोकञ्च, द्यावाभूमी प्रचक्षते ॥४४॥

## दिवस्दिवः पृथिव्यां वा ॥३॥२॥४५॥

दिव्-शब्दस्य पृथिव्यां स्याद्, विकल्पेन दिवस्दिवः ॥
धर्म्ये दिवःपृथिव्यौ द्या-वा पृथिव्यौ सतां स्थितौ ॥४५॥

## उषासोषसः ॥३॥२॥४६॥

उषासा देवताद्वन्द्व, उषसः पूर्वसंस्थितेः ॥
उषासासूर्यमालोक्य, लोकं लोकोऽभिनन्दति ॥४६॥

---

वायुवर्जनात् अग्निवायू, वाय्वग्नी इति ॥४१॥ स्पष्टम् ॥४२॥ विष्णुवर्जनात्, आग्नावैष्णवमिति ॥४३॥ एवं द्यावानक्ते इत्यादि नक्तशब्दोऽस्त्यकारान्तोऽनव्ययम् ॥४४॥ दिवस्पृथिव्यावित्यपि ॥४५॥ स्पष्टम् ॥४६॥

## मातरपितरं वा ॥३॥२॥४७॥

मातरपितरं वा स्या–न्मातृपित्रोर्निपातनात् ॥
मातरपितरौ वन्द्यौ, स्तो मातापितरौ सताम् ॥४७॥

## वर्चस्कादिष्वस्करादयः ॥३॥२॥४८॥

वर्चस्काद्यर्थवन्तः स्युः, साधवोऽवस्करादयः ॥
अवस्करश्च वर्चस्के, रथाङ्गे स्यादपस्करः ॥४८॥

## परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् ॥३॥२॥४९॥

परतः स्त्री नचोङन्तः, स्त्र्येकार्थे स्यान्नु पुंसमः ॥
एतभार्यस्तथा श्येत–भार्यः कल्याणपञ्चमी ॥४९॥

## क्यङ्मानिपित्तद्धिते ॥३॥२॥५०॥

परतः स्त्री भवेत् पुंवत्, क्यङि मानिनि तद्धिते ॥
पिति चानूङ् इयं श्येना–यते पटुचरी नरी ॥५०॥

## जातिश्च णितद्धितयस्वरे ॥३॥२॥५१॥

परतः स्त्री तथा जातिः, स्याण्णितद्धितयस्वरे ॥
अनूङ् पुंवन्नु भावत्कः, पापिष्ठा च पटीयसी ॥५१॥

## एयेऽग्नायी ॥३॥२॥५२॥

अग्नाय्येव भवेत् पुंवत्, तद्धित एय प्रत्यये ॥

---

एकशेषेषु पितराविति ॥४७॥ अयमाकृतिगणः ॥४८॥ परत इति द्रोणीभार्यः, स्त्रीति खलपुदृष्टिः, स्त्र्येकार्थे इति गृहिणीनेत्रः कल्याणीमाता, अनूङिति करभोरूभार्यः ॥४९॥ एवं दर्शनीयमानी इत्यादि ॥५०॥ एवम् एत्य इत्यादि । तद्धितेति किम् ? हस्तिनीयति, हस्तिन्यः ॥५१॥ पूर्वेण सिद्धे

अग्नायी देवता यस्य, साग्नेयो रौहिणेयकः ॥५२॥

## नाप्प्रियादौ ॥३॥२॥५३॥

पूरण्यप्प्रत्ययान्ते स्त्र्ये-कार्थे स्त्रीपरतो यदि ॥
प्रियादौ न भवेत् पुंवत्, कल्याणीपञ्चमा निशा ॥५३॥

## तद्धिताककोपान्त्य पूरणाख्याः ॥३॥२॥५४॥

न तद्धिताककोपान्त्याः, संज्ञाश्च पूरणान्तकाः ॥
परतः स्युः स्त्रियः पुंवत्, वृजिकामानिनी यथा ॥५४॥

## ताद्धितः स्वरवृद्धिहेतुररक्तविकारे ॥३॥२॥५५॥

स्यात् स्वरवृद्धिहेतुर्योऽरक्तविकारतद्धितः ॥
तदन्तस्त्री न पुंवत् स्यात्, वैदर्भीमानिनी स्वयम् ॥५५॥

## स्वाङ्गान् ङीर्जातिश्चामानिनी ॥३॥२॥५६॥

स्वाङ्गङ्यन्तस्तथा जाति-वाची शब्दोऽप्यमानिनी ॥
परतः स्त्री न पुंवत् स्या-दियं चन्द्रमुखीयते ॥५६॥

## पुंवत् कर्मधारये ॥३॥२॥५७॥

परतः स्त्री भवेत् पुंव-दुत्तरे कर्मधारये ॥
स्त्र्येकार्थेऽनूङ् महामान्या, दत्तवृन्दारिकाऽभवत् ॥५७॥

---

नियमार्थमिदम् । साग्नेयः-स आग्नेय इति पादपूरणीति सन्धिः ॥५२॥ एवं कल्याणीप्रिय इत्यादि । अप्प्रियादाविति-कल्याणपञ्चमीकः पक्षः ॥५३॥ एवं कारिकाभार्यः, पञ्चमीभार्यः, दत्ताभार्य इत्यादि । तद्धिताकेति पाकभार्यः ॥५४॥ स्वरेति वैयाकरणभार्यः, वृद्धिहेतुरिति अर्द्धप्रस्थभार्यः, अरक्तविकार इति कापायबृहतिकः, लौहेपः ॥५५॥ एवं कठीभार्यः, शूद्राभार्य इत्यादि । मानिनी-वर्जनात्-दीर्घकेशमानिनी ॥५६॥ अनूङिति-ब्रह्मबन्धूवृन्दारिका॥५७॥

रिति ॥३॥२॥५८॥

परतः स्त्री भवेत् पुंवत्, अनूङ् चेद् रितिप्रत्यये ॥
इयं मद्रकदेशीयो, पटुजातीयमानिनी ॥५८॥

त्वते गुणः ॥३॥२॥५९॥

गुणवाची ह्यनूङ्शब्दः, परतस्त्वतयोः पुमान् ॥
अस्याः पटुत्वमालोक्य, पटुतां का न वाञ्छति ॥५९॥

च्वौ क्वचित् ॥३॥२॥६०॥

च्वावनूङ् स्त्री भवेत् पुंवत्, क्वचिल्लक्ष्यानुरोधतः ॥
महत्कृता बृहद्भूता, कन्येयं महतीकृता ॥६०॥

सर्वादयोऽस्यादौ ॥३॥२॥६१॥

सर्वादिः स्त्री भवेत् पुंवत्, परतः स्यादिवर्जिते ॥
एकक्षीरं भवत्पुत्रं, पोषिष्यति सदात्मजे ॥६१॥

मृगक्षीरादिषु वा ॥३॥२॥६२॥

एषु समासशब्देषु, स्त्र्यर्थभिन्नोत्तरे पदे ॥
वा स्त्री पुंवदनेकार्थे, मृगक्षीरादयो मताः ॥६२॥

ऋदिदुदित्तरतमरूपकल्पब्रुवचेलड्गोत्रमतहते वा-ह्रस्वश्च ॥३॥२॥६३॥

ऋदिदुदिच्च ह्रस्वान्तः, पुंवच्च वा तरादिषु ॥

स्पष्टम् ॥५८॥ गुण इति कठीलम् ॥५९॥ महतीकृतेति क्वचिदित्यस्य फलतया ज्ञेयम् ॥६०॥ अस्यादाविति–सर्वस्यै ॥६१॥ विकल्पपक्षे मृगीक्षीरमित्यादि । एवं काकशाव इत्यादि ॥६२॥ एवमितरत्रापि तररूपादिपरे

रूप्येकार्थे सत्तमेयं; स्त्री सतितमा सतीतमा ॥६३॥

ङ्यः ॥३॥२॥६४॥

स्त्रीलिङ्गङ्यन्तशब्दस्य. तरादिषु ब्रुवादिषु ॥
ह्रस्वान्तता भवेद् गौरि-तमा गौरिब्रुवा स्मृता ॥६४॥

भोगवद्गौरिमतार्नाम्नि ॥३॥२॥६५॥

ङीप्रत्ययस्य ह्रस्वत्वं, तरादिष्वेतयोर्भवेत् ॥
भोगवतीब्रुवाऽनाम्नि, नाम्नि भोगवतिब्रुवा ॥६५॥

नवैकस्वराणाम् ॥३॥२॥६६॥

ङ्यन्तैकस्वरशब्दानां, ह्रस्वान्तो वा तरादिषु ॥
स्त्रितरा स्त्रीतरा काचि- द्ब्रुवा चेयमीब्रुवा ॥६६॥

ऊङः ॥३॥२॥६७॥

स्याद्वा ह्रस्वान्त आदेश, ऊङन्तस्य तरादिषु ॥
ब्रह्मबन्धुतराब्रह्म-बन्धूतराणि पूर्ववत् ॥६७॥

महतः करघासाविशिष्टे डाः ॥३॥२॥६८॥

महता डान्त आदेशः करादिषु परेषु वा ॥
महाघासो महद्धासो, महाकरो महत्करः ॥६८॥

---

रूपत्रयमवसेयम् ॥६३॥ स्पष्टम् ॥६४॥ अनाम्नि भोगवद्ब्रुवा, भोगवतिब्रुवेति रूपद्वयमप्यवसेयम् । नाम्नि तु एकमेव रूपमेवमितरत्रापि ॥६५॥ एकस्वराणा-मिति-कुटीतरेत्यादि ॥६६॥ एवं कद्रुब्रुवा, कद्रूब्रुवेत्यादि ॥६७॥ एवं महाविशिष्टः, महद्विशिष्टः ॥६८॥

स्त्रियाम् ॥३॥२॥६९॥

स्त्रीवर्तिनो महन्नाम्नो, नित्यं डान्तः करादिषु ॥
चेन्महत्या विशिष्टः स्या–न्महाविशिष्ट उच्यते ॥६९॥

जातीयैकार्थेऽच्वेः ॥३॥२॥७०॥

जातीये च तथैकार्थे महतोऽच्व्यन्तवर्तिनः ॥
डान्तादेशो महाकीर्ति–र्महाजातीय उच्यते ॥७०॥

न पुंवन्निषेधे ॥३॥२॥७१॥

पुंवत्त्वस्य निषेधश्चेद्, महत उत्तरे पदे ॥
डान्तादेशो भवेन्नैव, भाग्यवान् महतीप्रियः ॥७१॥

इच्यस्वरे दीर्घ आच्च ॥३॥२॥७२॥

पूर्वस्य दीर्घ आकार–श्चान्त इच्प्रत्ययेऽस्वरे ॥
मुष्टामुष्टि तथा मुष्टी–मुष्टी नैव महात्मनाम् ॥७२॥

हविष्यष्टनः कपाले ॥३॥२॥७३॥

हविष्यर्थेऽष्टनो दीर्घो–ऽन्तः कपाले परे भवेत् ॥
हविरष्टाकपालं तत्, कपालाष्टसु संस्कृतम् ॥७३॥

गवि युक्ते ॥३॥२॥७४॥

युक्तेऽर्थे गवि दीर्घोऽन्ता–देशोऽष्टनो विधीयते ॥
अष्टौ गावौ युता यत्र, लोकस्त्वाष्टागवं रथम् ॥७४॥

---

जातीयैकार्थ इति महत्तरः । अच्वेरिति महद्भूता कन्या ॥७०॥ स्पष्टम् ॥७१॥ अस्वर इति अस्यसि ॥७२॥ हविषीति अष्टकपालम्, कपाल अष्टपात्रं हविः ॥७३॥ युक्त इति अष्टगुश्चैत्रः ॥७४॥

## नाम्नि ॥३॥२॥७५॥

नाम्नि दीर्घोऽन्त आदेशो-ऽष्टनः स्यादुत्तरे पदे ॥
स्वर्णमष्टापदं चाष्टा-पदः कलासपर्वतः ॥७५॥

## कोटरमिश्रकसिध्रकपुरगसारिकस्य वणे ॥३॥२॥७६॥

कोटरमिश्रकादीनां, कृतणत्ववने पदे ॥
परे दीर्घोऽन्त आदेशः, स्युः कोटरावणादयः ॥७६॥

## अञ्जनादीनां गिरौ ॥३॥२॥७७॥

स्याद् दीर्घोऽन्तोऽञ्जनादीनां, गिरिशब्दे पदोत्तरे ॥
किंशुलकागिरिः साल्वा-गिरिः स्यादञ्जनागिरिः ॥७७॥

## अनजिरादिबहुस्वरशरादीनां मतौ ॥३॥२॥७८॥

अजिरादीतरानेक-स्वराणां प्रत्यये मतौ ॥
शरादीनाञ्च दीर्घत्वं, शरावत्यमरावती ॥७८॥

## ऋषौ विश्वस्य मित्रे ॥३॥२॥७९॥

विश्वशब्दस्य संज्ञायां, मित्रोत्तरपदे ऋषौ ॥
दीर्घोऽन्तः सभवेद्विश्वा-मित्रो राजऋषिः श्रुतः ॥७९॥

## नरे ॥३॥२॥८०॥

विश्वशब्दस्य दीर्घत्वं, नाम्नि नरे पदे भवेत् ॥
विश्वानरोऽभवत् कश्चित्, तज्जो वैश्वानरोऽनलः ॥८०॥

---

नाम्नीति अष्टदंष्ट्रः ॥७५॥ सष्टं सूत्रषट्कम् ॥७६॥७७॥७८॥
॥७९॥८०॥८१॥

वसुराटोः ॥३॥२॥८१॥

परयोर्वसुराटोः स्या–द्विश्वशब्दस्य दीर्घता ॥
विश्वावसुस्तथा विश्वा--राट् सर्वत्र विराजते ॥८१॥

वलच्यपित्रादेः ॥३॥२॥८२॥

पित्राद्यन्यस्वरान्तानां, दीर्घोऽन्तो वलचि ध्रुवम् ॥
स्यादासुतीवलो दन्ता–वलः पुत्रावलस्तथा ॥८२॥

चितेः कचि ॥३॥२॥८३॥

चितिशब्दस्य दीर्घोऽन्तो, जायते कचि प्रत्यये ॥
चितिश्चिता भवेदेका, सैकचितीक उच्यते ॥८३॥

स्वामिचिह्नस्याविष्टाष्टपञ्चभिन्नछिन्नच्छिद्रस्रुव–स्वस्तिकस्य कर्णे ॥३॥२॥८४॥

स्वामिचिह्नस्य विष्टादि–वर्जितस्योत्तरे पदे ॥
कर्णे दीर्घोऽन्त आदेशो, दात्राकर्णः पशुर्भवेत् ॥८४॥

गतिकारकस्य नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ ॥३॥२॥८५॥

नह्यादिषु क्विबन्तेषु, गतेः कारकवाचिनः ॥
दीर्घोऽन्तः स्यादुपानच्च, नीवृत् प्रावृड् जलासहः ॥८५॥

---

पित्रादिवर्जनात्–पितृवल इत्यादि ॥८२॥ स्पष्टम् ॥८३॥ स्वामिचिह्नस्येति लम्बकर्णः । विष्टादिवर्जनाद् विष्टकर्णः, अष्टकर्ण इत्यादि ॥८४॥ स्पष्टम् ॥८५॥

## घञ्युपसर्गस्य बहुलम् ॥३॥२॥८६॥

उपसर्गस्य दीर्घोऽन्तो, घञन्तो बहुलं भवेत् ॥
झटित्येव प्रतीकारो—ऽतिसारस्य विधीयताम् ॥८६॥

## नामिनः काशे ॥३॥२॥८७॥

नाम्यन्तस्योपसर्गस्य, काशे परे नु दीर्घता ॥
अनूकाशप्रतीकाश—नीकाशप्रमुखा मताः ॥८७॥

## दस्ति ॥३॥२॥८८॥

स्यात्ताद्यादेशदाधाता—वुपसर्गस्य नामिनः ॥
दीर्घोऽन्तो नीत्तवीत्ते च, परीत्तवान् प्रणीत्त्रिमम् ॥८८॥

## अपील्वादेर्वहे ॥३॥२॥८९॥

पील्वादिभिन्ननाम्यन्त—शब्दस्यापि वहे परे ॥
भवेद्दीर्घोऽन्त आदेशः, कपीवहं मुनीवहम् ॥८९॥

## शुनः ॥३॥२॥९०॥

शुनो दीर्घोऽन्त आदेशो, बहुलं स्यात्पदे परे ॥
श्वादन्तः श्वावराहश्च, श्वापदं श्वमुखं तथा ॥९०॥

## एकादश षोडश षोडन् षोढा षड्ढा ॥३॥२॥९१॥

एकादशादयः पञ्च, निपात्यन्ते दशादिषु ॥
षोडन् षोडश षोढा च, षड्ढैकादश सर्वदा ॥९१॥

---

बाहुलकात् क्वचिद्वा क्विचिन्न यथा प्रतीवेशः, प्रतिवेशः, विषादः, निषादः इत्यादि ॥८६॥ नामिन इति प्रकाशः ॥८७॥ द इति—वितीर्णम्, तीति सुदत्तम् ॥८८॥ पील्वादिवर्जनात् पीलुवहम्, दारुवहमित्यादि ॥८९॥ श्वमुखमित्यादि वाहुलकात् ॥९०॥ स्पष्टम् ॥९१॥

## द्वित्र्यष्टानां द्वात्रयोष्टाः प्राक् शतादनशीति-बहुव्रीहौ ॥३॥२॥९२॥

द्वित्र्यष्टानां च सङ्ख्यायां, द्वात्रयोऽष्टा नु प्राक् शतात् ॥
त्यक्त्वाऽशीतिबहुव्रीही, द्वाविंशतिः त्रयोदश ॥९२॥

## चत्वारिंशदादौ वा ॥३॥२॥९३॥

स्युश्चत्वारिंशदादौ वा, द्वात्रयोऽष्टा नु पूर्ववत् ॥
अष्टषष्टिस्त्रिषष्टिश्च, द्वासप्ततिर्द्विसप्ततिः ॥९३॥

## हृदयस्य हृल्लासलेखाण्ये ॥३॥२॥९४॥

हृदयस्य हृदादेशो, ये चाणि लासलेखयोः ॥
हृल्लासो हृद्यसौहार्दाद्, हृल्लेखः प्रियदर्शने ॥९४॥

## पदः पादस्याज्यातिगोपहते ॥३॥२॥९५॥

पद इत्ययमादेशः, पादशब्दस्य जायते ॥
आज्यादिषु पदाजिश्च, पदातिः पदगो रणे ॥९५॥

## हिमहतिकाषिये पत् ॥३॥२॥९६॥

पद्भवेत् पादशब्दस्य, हिमादिषु यप्रत्यये ॥
पद्धिमं पद्धतिः पद्या, पत्काषी लक्ष्यलक्षिताः ॥९६॥

---

एवमष्टात्रिंशत् । प्राक् शतादिति द्विशतमित्यादि । अनशीतिबहुव्रीहाविति द्व्यशीतिः, द्वित्राः ॥९२॥ विकल्पपक्षे अष्टाषष्टिः, त्रयःषष्टिरित्यादि ॥९३॥ स्पष्टम् ॥९४॥ एवं पदोपहतः ॥९५॥ स्पष्टम् ॥९६॥

ऋचः श्शसि ॥३॥२॥९७॥

शादौ शस्प्रत्यये नूनं, ऋचः पादस्य पद्भवेत् ॥
पच्छः शंसति गायत्रीं, श्लोकं ग्रथ्नाति पाद्शः ॥९७॥

शब्दनिष्कघोषमिश्रे वा ॥३॥२॥९८॥

शब्दादिषु पदादेशः, पादस्य वा विधीयते ॥
पच्छब्दः पादशब्दो वा, पन्मिश्रेण विधीयते ॥९८॥

नस् नासिकायास्तःक्षुद्रे ॥३॥२॥९९॥

नासिकाया नसादेशः, क्षुद्रे च तसि प्रत्यये ॥
नासिकाया भवेन्नस्तो, नःक्षुद्रः क्षुद्रनासिकः ॥९९॥

येऽवर्णे ॥३॥२॥१००॥

अवर्णे नासिकाया नस्, भवेद् ये प्रत्यये परे ॥
नासिकाय हितं नस्यं, नासिक्यश्चानुनासिकः ॥१००॥

शिरसः शीर्षन् ॥३॥२॥१०१॥

ये प्रत्यये परे शीर्ष-न्नादेशः शिरसो भवेत् ॥
ब्राह्मीतैल नु शीर्षण्यं, शीर्षण्यं टादिपञ्चकम् ॥१०१॥

केशे वा ॥३॥२॥१०२॥

केशे वा शिरसः शीर्ष-न्निति ये प्रत्यये परे ॥
स्त्रीणां शिरस्सु शीर्षण्याः, शिरस्याः कबरीहिताः ॥१०२॥

---

द्विःशपाठात् स्यादिशसि न स्यात्–ऋचः पादान् पद्य ॥९७॥ विकल्पपक्षे पादमिश्रेणेत्यादि ॥९८॥ स्पष्टे ॥९९॥१००॥ य इत्येव शिरस्तः शिरस्यति ॥१०१॥ स्पष्टे ॥१०२॥१०३॥

शीर्षः स्वरे तद्धिते ॥३॥२॥१०३॥

स्वरादौ तद्धिते शीर्षः, शिरस्शब्दस्य जायते ॥
हास्तिशीर्षिः वलिष्ठः, स्या-न्मार्गशीर्षी च पूर्णिमा ॥१०३॥

उदकस्योदः पेषंधिवासवाहने ॥३॥२॥१०४॥

उदकस्य ह्युदादेशः, पेषमादिषु जायते ॥
उदपेषं पिनष्टीदं, जलवानुदधिर्घटः ॥१०४॥

वैकव्यञ्जने पूर्ये ॥३॥२॥१०५॥

अयुक्तव्यञ्जनादौ वा, पूर्ये स्यादुदको ह्युदः ॥
उदपात्रोदकामत्रो-दकपात्राणि पूर्यताम् ॥१०५॥

मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे वा ॥३॥२॥१०६॥

उदकस्य ह्युदादेशो, वा मन्थादिषु जायते ॥
स्याद् उदबिन्दुना पूर्यो, घटो ह्युदकबिन्दुना ॥१०६॥

नाम्न्युत्तरपदस्य च ॥३॥२॥१०७॥

पूर्वोत्तरपदस्थस्यो-दकस्यानाम्न्युदो भवेत् ॥
क्षीरोदलवणोदाख्या, उदधयो महार्णवाः ॥१०७॥

ते लुग्वा ॥३॥२॥१०८॥

स्यादुत्तरपदं पूर्व-पदं नाम्नि नु लुग् नवा ॥
भीमसेनो भवेद्भीमः, सेनः सत्या हरिप्रिया ॥१०८॥

---

एवम् उदवासः, उदवाहनः ॥१०४॥ एकव्यञ्जनेति उदकस्थालम् । पूर्य इति उदकदेशः ॥१०५॥ एवम् उदमन्थ उदकमन्थ इत्यादि ॥१०६॥ स्पष्टम् ॥१०७॥ सत्या-सत्यभामेत्यर्थः ॥१०८॥

द्व्यन्तरनवर्णोपसर्गादप ईप् ॥३॥२॥१०९॥

अनवर्णोपसर्गेभ्यो द्व्यन्तभ्यां चाप ईप् भवेत् ॥
द्वीपं स्यादन्तरीपं च, प्रतीपं वा समीपकम् ॥१०९॥

अनोर्देश उप् ॥३॥२॥११०॥

देशे वाच्ये परस्यानो-रप उप् जायते ततः ॥
देशोऽनूपो भवेत् कच्छः, कूपादयः पृषोदराः ॥११०॥

खित्यनव्ययारुषो मोन्तो ह्रस्वश्च ॥३॥२॥१११॥

अनव्ययस्वरान्तस्या-रुषश्च खिति प्रत्यये ॥
परे मोऽन्तश्च ह्रस्वश्चा-न्तादेशः स्याद्धिहङ्गमः ॥१११॥

सत्यागदास्तोः कारे ॥३॥२॥११२॥

कारे सत्यागदास्तूनां, मोऽन्तः स्यादुत्तरे पदे ॥
सत्यङ्कारागदङ्कारा-स्तुङ्काराः सूत्रसम्मता ॥११२॥

लोकम्पृणमध्यन्दिनानभ्याशमित्यम्॥३॥२॥११३॥

कृतमान्ता अमी शब्दा, साधवः स्युर्निपातनात् ॥
लोकम्पृणं वचो मध्य-न्दिनेऽनभ्याशमित्यकम् ॥११३॥

भ्राष्ट्राग्नेरिन्धे ॥३॥२॥११४॥

भ्राष्ट्राग्निभ्यां भवेन्मोऽन्त, इन्धशब्द पदोत्तरे ॥
भ्राष्ट्रमिन्धस्तथैवाग्नि-मिन्धः सूत्रेण साध्यते ॥११४॥

---

उपसर्गादिति-स्वापः । अनवर्णेति-प्रापम् , परापम् ॥१०९॥ देश इति अन्वीपं वनम् ॥११०॥ खितीति-इमानी, अनव्ययस्येति-दोपामन्यमहः ॥१११॥ सूत्रत्रयं स्पष्टम् ॥११२॥११३॥११४॥

अगिलाद् गिलगिलगिलयोः ॥३॥२॥११५॥

पूर्वपदाद् गिलान्तान्या-न्मोऽन्तो गिलगिले गिले ॥
तिमिङ्गिलगिलो मत्स्यो, बालङ्गिलश्च राक्षसः ॥११५॥

भद्रोष्णात् करणे ॥३॥२॥११६॥

भद्रोष्णाभ्यां भवेन्मोऽन्तः, करणे उत्तरे पदे ॥
स्याद्भद्रंकरणं भद्र-मुष्णंकरणमुष्णकम् ॥११६॥

नवाऽखित्कृदन्ते रात्रेः ॥३॥२॥११७॥

रात्रिशब्दस्य मोऽन्तो वा, कृदन्ते खिद्विवर्जिते ॥
रात्र्याटो रात्रिमाटश्च, रात्रिञ्चरश्च रात्र्यटः ॥११७॥

धेनोर्भव्यायाम् ॥३॥२॥११८॥

भव्याशब्दे परे धेनो-र्भवेन्मोऽन्तो विभाषया ॥
धेनुंभव्या तथा धेनु-भव्या भव्यातिदुग्धदा ॥११८॥

अषष्ठीतृतीयादन्याद् दोऽर्थे ॥३॥२॥११९॥

स्यादषष्ठीतृतीयान्ताद, दोऽन्तोऽर्थे चान्यशब्दतः ॥
अन्यदर्थं वचोऽन्यार्थे, वक्रोक्तिः स्यान्नियोजनात् ॥११९॥

आशीराशास्थितास्थोत्सुकोतिरागे ॥३॥२॥१२०॥

आशीराद्युत्तरेष्वन्ते, दो भवेदन्यशब्दतः ॥

---

अगिलादिति तिमिङ्गिलगिल इत्यत्र गिलान्मोऽन्तो न ॥११५॥ स्पष्टम् ॥११६॥ विकल्पपक्षे रात्रिचरः, रात्रिमट इति । रात्रिमन्यमहः, रात्रिसुखम्, रात्रयिता, इति क्रमशः खिद्वर्जन-कृदन्ता-न्तग्रहणफलतयाऽवसेयम् ॥११७॥ स्पष्टम्॥११८॥षष्ठयादिवर्जनाद् अन्यस्यान्येन वाऽर्थः अन्यार्थः॥११९॥ एव-

अन्यदाशाऽन्यदास्थाऽन्य–दुत्सुकश्चान्यदास्थितः॥१२०

## ईयकारके ॥३॥२॥१२१॥

अन्यशब्दाद्भवेद् दोऽन्तः, कारके चेयप्रत्यये ॥
अन्यत्कारकमन्यस्या–यमन्यदीय उच्यते ॥१२१॥

## सर्वादिविष्वग्देवाड्डद्रिः क्व्यञ्चौ ॥३॥२॥१२२॥

स्याद् विष्वग्देवशब्दाभ्यां, सर्वादेश्चाञ्चतौ क्विपि ॥
डद्रिरन्तस्त्वदद्रीचा, देवद्र्यञ्चो विशेषिताः ॥१२२॥

## सहसमः सध्रिसमि ॥३॥२॥१२३॥

क्व्यञ्चौ परे यथासङ्ख्यं, सहसमोः सध्रिः समिः ॥
सध्र्यङ्कार्यं भवेत्सम्यङ्, समीचीनं तदुच्यते ॥१२३॥

## तिरसस्तिर्यति ॥३॥२॥१२४॥

अकारादौ क्विबन्तेऽञ्चौ, परे स्यात्तिरसस्तिरिः ॥
तिर्यञ्चस्तिरसाऽञ्चन्ति, तिरश्चीनं तिरोगतम् ॥१२४॥

## नञत् ॥३॥२॥१२५॥

नञ्शब्दः स्यादकारो वा, उत्तरस्मिन् पदे परे ॥
अहिंसनामृषास्तेयामैथुनामूर्च्छना व्रताः ॥१२५॥

---

मन्यदाशीः, अन्यदूतिः, अन्यद्रागः । षष्ठ्यादिवर्जनमत्रापि तेन अन्यस्यान्येन वा आशीः अन्याशीरित्यादि ॥१२०॥ स्पष्टम् ॥१२१॥ क्वीति विष्वगञ्चनम् ॥१२२॥ क्व्यञ्चावित्येव सहाञ्चनम् ॥१२३॥ स्पष्टम् ॥१२४॥ न भुङ्क्ते इत्यादावुत्तरपदत्वाभावादत्वाभावः ॥१२५॥

## त्यादौ क्षेपे ॥३॥२॥१२६॥

क्षेपे गम्ये भवेदद् नञ्, त्याद्यन्त उत्तरे पदे ॥
रे ! अपचसि जाल्म ! त्व-मकरोषि त्वमुन्मद ! ॥१२६॥

## नगोऽप्राणिनि वा ॥३॥२॥१२७॥

अप्राणिन्यभिधेये वा, नगशब्दो निपात्यते ॥
अगो नगश्च भूमिध्रः, पादपाः स्युर्नगा अगाः ॥१२७॥

## नखादयः ॥३॥२॥१२८॥

शब्दा एतेऽकृताकारा, निपात्यन्ते नखादयः ॥
नखो नभ्राट् नपान्नागो, नक्षत्रं नान्तरीयकम्॥१२८॥

## अन् स्वरे ॥३॥२॥१२९॥

नञोऽनित्ययमादेशः, स्वरादावुत्तरे पदे ॥
अनाद्यनन्तसंसाराद–नन्तोऽर्हन् सदाऽवतात् ॥१२९॥

## कोः कत्तत्पुरुषे ॥३॥२॥१३०॥

तत्पुरुषे समासे स्यात्, स्वरादौ कोः कदित्ययम् ॥
आदेशः कुत्सितोऽश्वः स, कदश्च, कदन्नातपः ॥१३०॥

---

क्षेपाभावेतु न पचति चैत्र इत्यादि ॥१२६॥ प्राणिनि तु अगोऽयं शीतेनेत्याद्येव ॥१२७॥ अयमाकृतिगणस्तेन नारङ्गमित्यादयोऽपि ॥१२८॥ अनन्त इति अनन्तगुणगणकलित इति जिनसामान्यविशेषणम् ; तदभिधान-विभूषितो वा चतुर्दशः ॥१२९॥ तत्पुरुष इति कूष्ट्रोदेशः, स्वर इति कुब्राह्मणः ॥१३०॥

रथवदे ॥३॥२॥१३१॥

कुशब्दस्य कदादेशः, स्यादुत्तरे रथे वदे ॥
उचितं कद्रथोऽनेन, कद्वदाय समर्पितः ॥१३१॥

तृणे जातौ ॥३॥२॥१३२॥

कदादेशस्तृणे जातौ, वाच्यायां कोर्विधीयते ॥
कत्तृणा रौहिषाख्या स्या-दन्यथा कुतृणानि वै ॥१३२॥

कत्त्रिः ॥३॥२॥१३३॥

किंशब्दस्य कुशब्दस्य, त्रिशब्दे कद् निपात्यते ॥
कुत्सिताः के त्रयो वा स्युः,कुत्त्रयो वाऽस्य कत्त्रिकः॥१३३॥

काक्षपथोः ॥३॥२॥१३४॥

कोः का इत्ययमादेशः, पथिन्यक्षे पदोत्तरे ॥
कापथेन न गन्तव्यं, काक्षैर्दृश्यं न जातुचित् ॥१३४॥

पुरुषे वा ॥३॥२॥१३५॥

विकल्पेन कुशब्दस्य, कादेशः पुरुषोत्तरः ॥
कापुरुषैर्न योद्धव्यं, कुपुरुषाः सदा खलाः ॥१३५॥

अल्पे ॥३॥२॥१३६॥

ईषदर्थे कुशब्दस्य, कादेशः स्यात् पदे सदा ॥
मिष्टं कामधुरं काच्छं, क्षुधा यस्य न विद्यते ॥१३६॥

---

सूत्रषट्कमतिरोहितार्थम् ॥१३१॥ ॥१३२॥ ॥१३३॥ ॥१३४॥
॥१३५॥ ॥१३७॥

## काकवौ वोष्णे ॥३॥२॥१३७॥

उष्णशब्दे कुशब्दस्य, काकवौ स्तो विभाषया ॥
कोष्णं कवोष्णमुष्णं यत्, कदुष्णमीषदुष्णकम् ॥१३७॥

## कृत्येऽवश्यमो लुक् ॥३॥२॥१३८॥

लुक् कृत्यप्रत्ययान्ते स्यात्, मस्यावश्यंविवर्तिनः ॥
अवश्यकरणीयं तद्, निर्वाहो नैव यद्विना ॥१३८॥

## समस्ततहिते वा ॥३॥२॥१३९॥

सम्शब्दस्य लुगन्तो वा, तते हिते पदे परे ॥
सहितं संहितं धर्मः सततं तस्य सन्ततम् ॥१३९॥

## तुमश्च मनःकामे ॥३॥२॥१४०॥

सम्शब्दस्य तुमश्चान्ते, कामे मनसि लुग् भवेत् ॥
गन्तुकामः सकामोऽन्तु-मना स समना सुधीः ॥१४०॥

## मांसस्यानड्घञि पचि नवा ॥३॥२॥१४१॥

पच्यनड्घञि मांसस्य, लुगन्तः स्याद्विभाषया ॥
मांस्पचनं च मांस्पाको, नरकायैव जायते ॥१४१॥

## दिक्शब्दात्तीरस्य तारः ॥३॥२॥१४२॥

तीरशब्दस्य दिक्शब्दा-त्तारादेशो विभाषया ॥
पूर्वतारं तथा पूर्व-तीरं देशस्य सुन्दरम् ॥१४२॥

---

तत्पुरुषे कदुष्णम् , बहुव्रीहौ कूष्णो देश इति ॥१३७॥ कृत्य इति अवश्यंलावकः ॥१३८॥ स्पष्टे ॥१३९॥१४०॥ विकल्पपक्षे मांसपचनं, मांसपाकः ॥१४१॥ स्पष्टम् ॥१४२॥

## सहस्य सोऽन्यार्थे ॥३॥२॥१४३॥

समासे स्याद् बहुव्रीहौ, सः सहस्य पदे नवा ॥
सपुत्रः सहपुत्रोऽयं, सशिष्यः सहशिष्यकः ॥१४३॥

## नाम्नि ॥३॥२॥१४४॥

सहशब्दस्य सादेशोऽ–न्यार्थे नाम्नि पदे परे ॥
सरसा नाम दूर्वा स्यात्, साश्वत्थं नाम काननम् ॥१४४॥

## अदृश्याधिके ॥३॥२॥१४५॥

सोऽन्यार्थे सहशब्दस्य, त्वदृश्याधिकवाचिनोः ॥
कार्षापणः समाषः स्यात्, सानलश्च कपोतकः ॥१४५॥

## अकालेऽव्ययीभावे ॥३॥२॥१४६॥

कालान्यार्थेऽव्ययीभावे, सहशब्दस्य सो भवेत् ॥
वृत्तं सब्रह्म साधूनां, सचक्रं–धेहि सद्रथम् ॥१४६॥

## ग्रन्थान्ते ॥३॥२॥१४७॥

स्याद् ग्रन्थान्तेऽव्ययीभावे, सहशब्दस्य सो ध्रुवम् ॥
सकलं ज्यौतिषं कृत्वा, सपादं लक्षणं श्रुतम् ॥१४७॥

## नाशिष्यगोवत्सहले ॥३॥२॥१४८॥

आशिषिं गम्यमानायां, परे गवादिवर्जिते ॥

---

अन्यार्थ इति सहजः ॥१४३॥ अन्यार्थ इति सहदेवः कुरुः ॥१४४॥ स्पष्टम् ॥१४५॥ अकाल इति सहपूर्वाह्णं शेते । अव्ययीभाव इति सहयुध्वा ॥१४६॥ स्पष्टम् ॥१४७॥ आशिषीति सपुत्रः । गवादि–वर्जनात् स्वस्ति

न सः सहस्य भद्रं स्तात्, सहसङ्घाय सूरिणे ॥१४८॥

## समानस्य धर्मादिषु ॥३।२।१४९॥

स्यात् समानस्य सादेशो, धर्मादिषु परेषु वै ॥
सजातीयः सधर्मा वा, सगोत्रो भवति प्रियः ॥१४९॥

## सब्रह्मचारी ॥३।२।१५०॥

शब्दः सब्रह्मचारीति, लक्षणेन निपात्यते ॥
समानव्रतशीलस्य, सब्रह्मचारिता मता ॥१५०॥

## दृग्दृशदृक्षे ॥३।२।१५१॥

सादेशः स्यात् समानस्य, दृशि दृक्षे तथा दृशे ॥
दृश्यते समरूपेण, सदृक्षः सदृशः सदृक् ॥१५१॥

## अन्यत्यदादेराः ॥३।२।१५२॥

त्यदादेश्चान्यशब्दस्य, दृशि दृक्षे तथा दृशे ॥
स्यादाकारान्त आदेशो-ऽन्यादृशस्त्यादृशो न वै ॥१५२॥

## इदंकिमीत्की ॥३।२।१५३॥

इदंशब्दश्च किंशब्द, ईत्की स्यातां दृशादिषु ॥
क इव दृश्यते कीदृक् कीदृश ईदृगीदृशः ॥१५३॥

---

तुभ्यं सगवे सहगवे, सवत्साय सहवत्साय, सहलाय सहहलाय ॥१४८॥
व्यक्तं सूत्रत्रयम् ॥१४९॥१५०॥१५१॥ एवमन्यादृगन्यादृक्ष इत्यादि॥१५३॥

अनञः क्त्वो यप् ॥३॥१॥१५४॥

नञ्भिन्नादव्ययात्पूर्व–पदाद्यदुत्तरं पदम् ॥
तदंशस्य भवेत् क्त्वो यप्, मुक्ताः प्राप्य शिवं जिनाः॥१५४

पृषोदरादयः ॥३॥१॥१५५॥

शिष्टैः प्रयुज्यमानाश्चे–च्छब्दाः पृषोदरादयः ॥
लोपागमादिभिर्ज्ञेया, निपातिताः पृषोदराः ॥१५५॥

वाऽवाप्योस्तनिक्रीधाञ्नहोर्वपी ॥३॥१॥१५६॥

तनिक्रीपरतोऽवस्य, वोऽपेः पिर्धाञ्नहोर्नवा ॥
अवतंसो वतंसोऽपि, विधानमपिधानकम् ॥१५६॥

॥ इति द्वितीयः पादः ॥

---

इति सन्धि–नाम–कारक–समासात्मिका
प्रथमा वृत्तिः समाप्ता ॥

---

एवमीदक्ष कीदक्ष इति ॥१५३॥ अनञ इति अकृत्वा परमकृत्वा। उत्तरपदस्येत्येव अलंकृत्वा ॥१५४॥ एते शब्दा विहितलोपागमवर्णविकाराः साधवः। भवेद्वर्णागमाद्धंसः, सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृते–र्वर्ण-नाशात् पृषोदरः ॥१॥ इति ॥१५५॥ एवं वक्रयः, अवक्रयः, पिनद्धम् अपि नद्धमित्यादि। केचित्तु सर्वत्रेच्छन्ति। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां, यथा वाचा निशा दिशा ॥२॥ इति ॥१५६॥

॥ इति द्वितीयः पादः ॥

## ॥ अथ—आख्यातवृत्तिरारभ्यते ॥

### वृद्धिरारैदौत् ॥३॥३॥१॥

आ—आरैकार औकारः, चत्वारो वृद्धिसंज्ञकाः ॥
साम्प्रतं साम्प्रतं कार्य—मैन्द्रमौद्धत्यमिच्छता ॥१॥

### गुणोऽरेदोत् ॥३॥३॥२॥

स्युररेदोच्च प्रत्येकं, त्रयोऽपि गुणसंज्ञकाः ॥
यः करोति स्वकर्तव्यं, स चेता धनविद्ययोः ॥२॥

### क्रियार्थो धातुः ॥३॥३॥३॥

क्रिया कृतिः प्रवृत्तिर्वा, व्यापारः कथ्यते बुधैः ॥
धातुसंज्ञस्तदर्थः स्या—च्छब्दो जयति धातुमान् ॥३॥

### न प्रादिरप्रत्ययः ॥३॥३॥४॥

चाद्यभ्यन्तर्गतः प्रादि—र्धात्वंशो नैव जायते ॥
ततश्चेत् प्रत्ययो न स्यात्, प्राभवदौत्सुकायत ॥४॥

### अवौ दाधौ दा ॥३॥३॥५॥

दाधाववानुबन्धौ चेद्, दासंज्ञौ भवतो ध्रुवम् ॥
प्रणिदाता धनं नित्यं, याचकैः प्रणिधीयते ॥५॥

---

इन्द्रसत्कमैन्द्रं—शाक्रमात्मिकं वा औन्नत्यमिच्छता सम्प्रतिसमये समुचितं कार्यं कर्तव्यमित्यर्थः ॥१॥ स्पष्टे ॥२॥३॥ प्रादिरिति अमहापुत्रीयत् ॥४॥ अवाविति दांव्—दातं बर्हिः । दैव्—अवदातं मुखम् ॥५॥

**वर्तमाना तिव् तस् अन्ति सिव् थस् थ मिव् वस् मस्—ते आते अन्ते से आथे ध्वे ए वहे महे॥३॥३॥६॥**

वर्तमाना भवन्त्येते, ह्यष्टादश तिवादयः ॥
वर्तमानेन योगेन, वर्तन्ते हि विचक्षणाः ॥६॥

**सप्तमी यात् यातां युस् यास् यातं यात याम् याव याम—ईत ईयाताम् ईरन ईथास् इयाथाम् ईध्वम् ईय ईवहि ईमहि ॥३॥३॥७॥**

यात्यातामादयः साष्टा, सप्तमीसंज्ञका दश ॥
प्रसिद्धया सप्तमत्वेन, सप्तमीयं भवेत् स्फुटम् ॥७॥

**पञ्चमी तुव् ताम् अन्तु हि तम् त आनिव् आवव् आमव्—ताम् आताम् अन्ताम् स्व आथाम् ध्वम् ऐव् आवहैव् आमहैव् ॥३॥३॥८॥**

अष्टादश तुवाद्याः स्युः पञ्चमीसंज्ञका इमे ॥
लडादौ पञ्चमत्वेन, पञ्चमी जायतामियम् ॥८॥

---

स्पष्टम् ॥६॥ साष्टेति—अष्टा इति अष्टादशघटकोऽंशस्तेन सहिता इति तथा चाष्टादशेत्यर्थः सङ्गतः । यद्वा पूर्वार्धे ' स्युरष्टादशयादाद्याः, सप्तमीसंज्ञका मताः' इति ॥७॥ १ लट्, २ लिट्, ३ लुट्, ४ लृट्, ५ लोट् ६ लङ्, ७ लिङ्, ८ लुङ्, ९ लृङ्, इति पाणीनीयप्रसिद्धा लकारास्तत्र लोट् इत्यस्य क्रमप्राप्तपञ्चमत्वेन पञ्चमीसंज्ञाऽन्वर्था । एवं पूर्वत्र सप्तमीसंज्ञाऽपि लिङः सप्तमत्वेन सार्थिका । न च लेट् इत्यस्य पञ्चमत्वमाशङ्क्यम्, तस्य छन्दोमात्रगोचरत्वेन प्रकृतेऽगणनात् ॥८॥

ह्यस्तनी दिव् ताम् अन् सिव् तम् त अम्‌व् व म-
त आताम् अन्त थास् आथाम् ध्वम् इ वहि महि
॥३।३।९॥

ह्यस्तनीसंज्ञका एते, ह्यष्टादश दिवादयः ॥
ह्यस्तन्यां हस्तिनी रात्रौ, प्रागच्छद्गजगामिनी ॥९॥

एताः शितः ॥३।३।१०॥

चतस्रो वर्तमानाद्याः, शानुबन्धा विदेल्मिाः ॥
शित्त्वाच्च भवतीत्यादौ, गुणादिः स्याद् यथायथम् ॥१०॥

अद्यतनी दि ताम् अन् सि तम् त अम् व म-त आताम्
अन्त थास् आथाम् ध्वम् इ वहि महि ॥३।३।११॥

दिमुख्या अद्यतन्यः स्यु-रष्टादशार्थसार्थकाः ॥
रजनिरजनि ग्लावाऽ-द्यतनी चन्द्रिकान्विता ॥११॥

परोक्षा णव् अतुस् उस् थव् अथुस् अ णव् व म-ए
आते इरे से आथे ध्वे ए वहे महे ॥३।३।१२॥

अष्टादश परोक्षाः स्युः, शब्दशास्त्रे णवादयः ॥
परोक्षामपि तां देवी-मपरोक्षां चकार सन् ॥१२॥

---

हस्तिनीति—पद्मिन्यादिप्रसिद्धा, योषिद्विशेषः ॥९॥ सन् ॥१०॥
ग्लावा—चन्द्रमसा अद्यतनी रजनिः चन्द्रिकान्विता अजनि जातेत्यर्थः ॥११॥
परोक्षां—प्रत्यक्षाद्यविषयीभूतामपि तां—प्रसिद्धां देवीममरीं सन्—सत्पुरुषः अपरोक्षां प्रत्यक्षां चकार कृतवान् ॥१२॥

आशीः क्यात् क्यास्ताम् क्यासुस् क्यास् क्यास्तम् क्यास्त क्यासम् क्यास्व क्यास्म–सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयास्थाम् सीध्वम् सीय सीवहि सीमहि ॥३॥३॥१३॥

स्युराशीःसंज्ञका अष्टा–दश क्यादादयः समे ॥
समेषां श्रेयसं भूया–दित्याशीः स्यान्महात्मनाम् ॥१३॥

श्वस्तनी ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस्–ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ॥३॥३॥१४॥

तादयः श्वस्तनीसंज्ञा, अष्टादश भवन्त्यमी ॥
श्वस्तन्यां निशि सत्पर्षद्, भवितेति प्रयत्यताम् ॥१४॥

भविष्यन्ती स्यति स्यतस् स्यन्ति स्यसि स्यथस् स्यथ स्यामि स्यावस् स्यामस्–स्यते स्येते स्यन्ते स्यसे स्येथे स्यध्वे स्ये स्यावहे स्यामहे ॥३॥३॥१५॥

स्यत्यादयो भविष्यन्ती-संज्ञा अष्टादश ध्रुवम् ॥
ज्ञात्वा मार्ष्टि भविष्यन्तीं, हर्षितोऽद्य भविष्यति ॥१५॥

---

सद्रूम् ॥१३॥ आगामिन्यां तमस्विन्यां सतां सभा भविता इति–तस्माद्धेतोः प्रयत्यताम्–क्रियतां यत्नः ॥१४॥ भविष्यन्तीं–भाविनीमिति ॥१५॥

**क्रियातिपत्तिः स्यत् स्यताम् स्यन् स्यस् स्यतम् स्यत स्यम् स्याव स्याम–स्यत स्येताम् स्यन्त स्यथास् स्येथाम् स्यध्वम् स्ये स्यावहि स्यामहि ॥३॥३॥१६॥**

क्रियातिपत्तिसंज्ञाः स्यु–रष्टादश स्यदादयः ॥
सैधिष्यत पयोऽपास्यत्, क्रियातिपत्तिभागपि ॥१६॥

**त्रीणि त्रीण्यन्ययुष्मदस्मदि ॥३॥३॥१७॥**

अन्यार्थे युष्मदर्थे चा–स्मदर्थेऽपि यथाक्रमम् ॥
सर्वासां त्रीणि त्रीणि स्यु–र्वर्तेऽहं सोऽस्ति तं नय ॥१७॥

**एकद्विबहुषु ॥३॥३॥१८॥**

स्युरेकद्विबहुत्वार्थेऽ–न्यादिषु त्रीण्यपि क्रमात् ॥
सोऽधीते तावधीयाते, श्रेयसे तेऽप्यधीयते ॥१८॥

**नवाद्यानि शतृक्वसू च परस्मैपदम् ॥३॥३॥१९॥**

परस्मैपदसंज्ञानि, नवाद्यानि शतृक्वसू ॥
सदा विन्दन्ति शं विद्वान्, मोहमपनयन्नरम् ॥१९॥

**पराणि कानानशौ चात्मनेपदम् ॥३॥३॥२०॥**

विभक्तीनां पराणि स्यु–र्नव कानानशौ तथा ॥
आत्मनेपदसंज्ञानि, कुर्वाणाः कार्यमासताम् ॥२०॥

---

क्रियातिपत्तिभागपि–विशरारुतामवाप्तोऽपि स यदि पयः–दुग्धं जलं वाऽपास्यत, स्तनन्धयः पादपो वा ॥१६॥ स्पष्टे ॥१७॥१८॥ वर्तमानायां तिवादीनि नवाद्यानि, एवं सर्वासु । अरं मोहम् अपनयन् विद्वान् सदा शं विन्दतीति ॥१९॥ वर्तमानायां ते आदीनि नव पराणि, एवं सर्वासु ॥२०॥

## तत् साप्यानाप्यात् कर्मभावे कृत्यक्तखलर्थाश्च ॥३॥३॥२१॥

कर्मणि साप्यतो धातो–स्तत् कृत्यक्तखलर्थकाः ॥
भावे चाकर्मकाज्ज्ञेया, भूयते शिवमाप्यते ॥२१॥

## इङितः कर्तरि ॥३॥३॥२२॥

इकारेतो ङकारेतः, स्यात् कर्तर्यात्मनेपदम् ॥
स्यादिङ् अध्ययनेऽधीते, 'एधि' वृद्धौ सदैधते ॥२२॥

## क्रियाव्यतिहारेऽगतिहिंसाशब्दार्थहसोहवहश्चानन्योऽन्यार्थे ॥३॥३॥२३॥

भवेत् क्रियाव्यतीहारेऽ–गत्यादेर्हरतेर्वहेः ॥
अन्योऽन्याद्यप्रयोगे वै, व्यतिस्ते आत्मनेपदम् ॥२३॥

## निविशः ॥३॥३॥२४॥

निपूर्वाद्विशतेर्धातोः, कर्त्रर्थे आत्मनेपदम् ॥
निविशन्ते सदा सन्तः, सत्पथं नोत्पथं क्वचित् ॥२४॥

---

तदिति–आत्मनेपदम् । उदाहरणसमूहः समूह्यः ॥२१॥ स्पष्टम् ॥२२॥ अन्यच्चिकीर्षितायाः क्रियाया अन्येन हरणं करणम्–क्रियाव्यतिहारः। चैत्रस्य धान्यं व्यतिलुनन्ति अत्र द्रव्यतिहारान्नात्मनेपदम् । गत्यर्थादिवर्जनात्–व्यतिसर्पन्तीत्यादि । अनन्योऽन्यार्थ इति परस्परस्य व्यतिलुनन्ति । कर्तरीति अनुवर्तनीयम्–तेन भावकर्मणोः पूर्वेणैव सर्वत्र ॥२३॥ स्पष्टम् ॥२४॥

उपसर्गादस्योहो वा ॥३।३।२५॥

वाऽस्यतेः सोपसर्गात् स्या-दूहतेश्चात्मनेपदम् ॥
समूहन्ति समूहन्ते, समस्यति समस्यते ॥२५॥

उत्स्वराद्युजेरयज्ञतत्पात्रे ॥३।३।२६॥

उदः परं स्वरान्ताच्चो-पसर्गात् स्याद् युजेरपि ॥
कर्त्रर्थयज्ञतत्पात्रे, उद्युङ्क्ते आत्मनेपदम् ॥२६॥

परिव्यवात् क्रियः ॥३।३।२७॥

परिव्यवोपसर्गेभ्यः, क्रीणातेरात्मनेपदम् ॥
विक्रीणीते जनः काच-मूल्येन मणिजीवनम् ॥२७॥

पराव्रेर्जेः ॥३।३।२८॥

कर्त्रर्थे विपराभ्यां स्या-ज्जयतेरात्मनेपदम् ॥
धर्मो विजयतेऽधर्मो, वै पराजयते सदा ॥२८॥

समः क्ष्णोः ॥३।३।२९॥

समः परात् क्ष्णुधातोः स्यात्, कर्त्रर्थे आत्मनेपदम् ॥
संक्ष्णुते क्षत्रियः शस्त्र-मायसं क्ष्णौति लोहकृत् ॥२९॥

अपस्किरः ॥३।३।३०॥

अपपूर्वात् किरतेर्नित्यं, सस्सट्कादात्मनेपदम् ॥
उक्षाऽपस्किरते हृष्टो, भक्ष्यार्थी कुक्कुटस्तथा ॥३०॥

---

कर्त्रर्थेति [illegible] ॥२५॥ उत्स्वरादिति-संयुनक्ति । [illegible] इति इन्द्रं यज्ञपात्रे प्रयुनक्ति ॥२६॥ एवं परिक्रीणीते, अवक्रीणीते ॥२७॥ [illegible] ॥२८॥२९॥ [illegible] । [illegible] ॥३०॥

## उदश्चरः साप्यात् ॥३॥३॥३१॥

उत्पूर्वाच्चरतेः साप्यात्, स्यात् कर्तर्यात्मनेपदम् ॥
मार्गमुच्चरते धूर्तः, सद्गोच्चरति सज्जनः ॥३१॥

## समस्तृतीयया ॥३॥३॥३२॥

तृतीयान्तेन संपूर्वा-चरतेरात्मनेपदम् ॥
सञ्चरतेऽयमश्वेन, स सञ्चरति रथ्यया ॥३२॥

## क्रीडोऽकूजने ॥३॥३॥३३॥

अकूजनार्थसम्पूर्व-क्रीडतेरात्मनेपदम् ॥
संक्रीडते समं सख्या, संक्रीडति रथोऽध्वनि ॥३३॥

## अन्वाङ्परेः ॥३॥३॥३४॥

अन्वाङ्पर्युपसर्गेभ्यः, क्रीडतेरात्मनेपदम् ॥
बालाऽनुक्रीडते कामं, बालकाननु क्रीडति ॥३४॥

## शप उपलम्भने ॥३॥३॥३५॥

उपलम्भनरूपेऽर्थे, शपतेरात्मनेपदम् ॥
शिष्याय शपते सूरिः, कुशिष्यं च शपत्यसौ ॥३५॥

## आशिषि नाथः ॥३॥३॥३६॥

आशिष्येव स्थिताज्ज्ञेयं, नाथतेरात्मनेपदम् ॥

---

स्पष्टम् ॥३१॥ तृतीयान्तेन योगे सति-योगाभावे न, तथा च रथ्यया सञ्चरति, नात्र योगः ॥३२॥ संक्रीडति अव्यक्तं शब्दं करोतीत्यर्थः ॥३३॥ एवमाक्रीडते इत्यादि । बालकाननु क्रीडति-बालकैः सह क्रीडतीत्यर्थः । नात्र-धातुनाऽनोः सम्बन्धः ॥३४॥ उपलम्भनं प्रकाशनं ज्ञापनम् । शपति-आक्रोशतीत्यर्थः ॥३५॥ श्रेयसो नाथते-श्रेयो मे भूयादित्याशास्ते इत्यर्थः ।

श्रेयसो नाथते भक्तो, बालको मधु नाथति ॥३६॥

## भुनजोऽत्राणे ॥३॥३॥३७॥

अत्राणेऽर्थे भुनक्तेः स्यात्, कर्तर्य्यप्यात्मनेपदम् ॥
भुङ्क्ते ज्ञानामृतं योगी, भुनक्ति भूपतिर्भुवम् ॥३७॥

## हृगो गततार्च्छील्ये ॥३॥३॥३८॥

भवेत् प्रकारताच्छील्ये, हरतेरात्मनेपदम् ॥
नूनमनुहरन्तेऽश्वाः, पैतृकं मातृकं त्वजाः ॥३८॥

## पूजाचार्यकभृत्युत्क्षेपज्ञानविगणनव्यये नियः ॥३॥३॥३९॥

पूजादौ गम्य उत्क्षेपा-दिषु वाच्येष्ववस्थितात् ॥
आत्मनेपदमुन्नेयं, नयतेर्नयते हितम् ॥३९॥

## कर्तृस्थामूर्ताप्यात् ॥३॥३॥४०॥

नयतेः कर्तरि ज्ञेयं, कर्तृस्थामूर्तकर्मकात् ॥
आत्मनेपदमक्षान्तिं, विनयस्व नयं नय ॥४०॥

## शदेः शिति ॥३॥३॥४१॥

शिद्विषयाच्छदेर्धातो-रात्मनेपदमिष्यते ॥
अशदच्छीयते कर्म, शत्स्यति चात्मबोधतः ॥४१॥

---

नाथति-याचते ॥३६॥ भुनक्ति-पालयति ॥३७॥ गत इति पितुर्हरति-चोरयतीत्यर्थः । ताच्छील्य इति नटो राममनुहरति ॥३८॥ पूजादिष्विति अजां नयति ग्रामम् ॥३९॥ स्पष्टे ॥४०॥४१॥

## म्रियतेरद्यतन्याशिषि च ॥३॥३॥४२॥

अद्यतन्याशिषोः शिच्चे, म्रियतेश्चात्मनेपदम् ॥
अमृत म्रियते मर्ता, मर्त्यो मृषीष्ट मारतः ॥४२॥

## क्यङ्षो नवा ॥३॥३॥४३॥

पित्क्यङन्ताच्चवेद्धातोः, कर्तरि वाऽऽत्मनेपदम् ॥
बुभुक्षुः पथिको मूर्खो, निद्रायति निद्रायते ॥४३॥

## द्युद्भ्योऽद्यतन्याम् ॥३॥३॥४४॥

अद्यतन्यां द्युतादिभ्यः, कर्तरि वाऽऽत्मनेपदम् ॥
व्यद्योतिष्ट शरच्चन्द्रो, व्यद्युतद्धेमचन्द्रवत् ॥४४॥

## वृद्भ्यः स्यसनोः ॥३॥३॥४५॥

स्यसनोर्विषये वृद्भ्यः, पञ्चभ्यो वाऽऽत्मनेपदम् ॥
वर्त्स्यन् वर्तिष्यमाणश्च, वर्तिष्यते विवृत्सति ॥४५॥

## कृपः श्वस्तन्याम् ॥३॥३॥४६॥

श्वस्तन्या विषये धातोः, कृपेः स्याद्वात्मनेपदम् ॥
ज्ञानाय यदि कल्प्तासि, कल्पिता ते हिताय तत् ॥४६॥

## क्रमोऽनुपसर्गात् ॥३॥३॥४७॥

उपसर्गोज्झिताद्वा स्यात्, क्रमतेरात्मनेपदम् ॥
त्रिविक्रमस्त्रिपद्योर्वी–मक्रामच्चक्रमे यतः ॥४७॥

---

मर्तेति श्वस्तन्यामात्मनेपदाभावोदाहरणम् ॥४२॥ स्पष्टम् ॥४३॥ अद्यतन्यामिति–द्योतते ॥४४॥ स्यसनोरिति वर्तते ॥४५॥ स्पष्टम् ॥४६॥ अनुपसर्गादिति–अनुक्रामति ॥४७॥

### वृत्तिसर्गतायने ॥३॥३॥४८॥

वृत्तौ च तायने सर्गे, क्रमेः स्यादात्मनेपदम् ॥
शास्त्रेऽस्य क्रमते बुद्धिः, श्रेयसे क्रमते सुधीः ॥४८॥

### परोपात् ॥३॥३॥४९॥

परापाभ्यां नु वृत्त्यादौ, क्रमतेरात्मनेपदम् ॥
न पराक्रमते बुद्धि-र्यस्य किमुपक्रामति ॥४९॥

### वेः स्वार्थे ॥३॥३॥५०॥

पादविक्षेपरूपेऽर्थे, वेः क्रमेरात्मनेपदम् ॥
साधु विक्रमते वाजी, विक्रामति भुवि स्मरः ॥५०॥

### प्रोपादारम्भे ॥३॥३॥५१॥

आरम्भार्थक्रमेः प्रोप-संयुतादात्मनेपदम् ॥
शास्त्रं प्रक्रमते विद्वान्, सन्नुपक्रमते हितम् ॥५१॥

### आङो ज्योतिरुद्गमे ॥३॥३॥५२॥

ज्योतिषामूर्ध्वगत्यर्थे, प्रधाने चोपसर्जने ॥
स्यादात्मनेपदं नूनं, क्रमेराक्रमते विधुः ॥५२॥

### दागोऽस्वास्यप्रसारविकासे॥३॥३॥५३॥

आङ्पूर्वकाद् ददातेः स्यु-रात्मनेपदप्रत्ययाः ॥

---

वृत्तिः-अप्रतिबन्धः, सर्गः-उत्साहः, तायनम्-स्फीतता। तायने-क्रमन्तेऽस्मिन् योगाः ॥४८॥ परोपादिति अनुक्रामति। वृत्त्यादाविति-पराक्रमति ॥४९॥ स्पष्टम् ॥५०॥ आरम्भ इति-प्रक्रामति-यातीत्यर्थः ॥५१॥ ज्योतिरुद्गम इति आक्रामति वटुः कुतुपम्, धूम आक्रामति ॥५२॥ स्वास्यादि-

विकासास्यप्रसारौ चे-न्नार्थौ वाददमहे धनम् ॥५३॥

नुप्रच्छः ॥३॥३॥५४॥

आङ्पूर्वनौतिप्रच्छिभ्या-मात्मनेपदप्रत्ययाः ॥
शिवाऽऽनुते समुत्कण्ठ-माप्रृच्छस्व प्रवासिनम् ॥५४॥

गमेः क्षान्तौ ॥३॥३॥५५॥

क्षान्तौ गमयतेर्धातो-राङ्पूर्वादात्मनेपदम् ॥
गामागमयते गोपः, शास्त्रमागमयेच्छिशुः ॥५५॥

ह्वः स्पर्धे ॥३॥३॥५६॥

पराभिभववाञ्छायां, गम्यायामात्मनेपदम् ॥
आङ्पूर्वाद् ह्वयतेर्मल्लो, मल्लमाह्वयतेऽञ्जसा ॥५६॥

संनिवेः ॥३॥३॥५७॥

स्यात् सं-नि-व्युपसर्गेभ्यो, ह्वयतेरात्मनेपदम् ॥
संह्वयते तथा निह्व-यते विह्वयते गमी ॥५७॥

उपात् ॥३॥३॥५८॥

ह्वयतेरुपपूर्वात् स्यु-रात्मनेपदप्रत्ययाः ॥
सन्नुपह्वयते सूरिः, शिष्यान् पाठयितुं श्रुतम् ॥५८॥

यमः स्वीकारे ॥३॥३॥५९॥

स्वीकारे तूपपूर्वात् स्याद्, यच्छतेरात्मनेपदम् ॥

---

वर्जनात्-उष्ट्रो मुखं व्याददाति, कुलं व्याददाति ॥५३॥ शिवा-शृगाली ॥५४॥ क्षान्तिः-कालहरणम् । आगमयते-किञ्चित् कालं प्रतीक्षते इत्यर्थः ॥५५॥ स्पर्द्ध इति-गामाह्वयति ॥५६॥ स्पष्टे ॥५७॥५८॥ च्विनिर्देशः

रामः सीतामुपायँस्त, कालकूटं महेश्वरः ॥५९॥

## देवार्चामैत्रीसङ्गमपथिकर्तृकमन्त्रकरणे स्थः ॥३॥३॥६०

देवार्चाद्यर्थकाज्ज्ञेय-मुपात्स्थ आत्मनेपदम् ॥
गङ्गोपतिष्ठतेऽम्भोधिं, नाऽर्हन्तमुपतिष्ठते ॥६०॥

## वा लिप्सायाम् ॥३॥३॥६१॥

लिप्सायामुपपूर्वाद्वा, तिष्ठतेरात्मनेपदम् ॥
अर्थी 'धनं लभेये' ति, दातारमुपतिष्ठते ॥६१॥

## उदोऽनूर्ध्वेहे ॥३॥३॥६२॥

स्यादूर्ध्वभिन्नचेष्टाया-मुदःस्थ आत्मनेपदम् ॥
मुक्तावुत्तिष्ठते योऽसौ, धन्यात्मा जगतीतले ॥६२॥

## संविप्रावात् ॥३॥३॥६३॥

संविप्रावोपसर्गेभ्य-स्तिष्ठतेरात्मनेपदम् ॥
संतिष्ठते वितिष्ठस्व,प्रतिष्ठस्वावतिष्ठते ॥६३॥

## ज्ञीप्सास्थेये ॥३॥३॥६४॥

ज्ञीप्सास्थेयक्रियार्थात् स्यात्, तिष्ठतेरात्मनेपदम् ॥
धनिभ्यस्तिष्ठते वेश्या, मन्त्रिणि तिष्ठते नृपः ॥६४॥

---

किम् ? शाटकानुपयच्छति, नात्रास्वं स्वं क्रियते ॥५९॥ गङ्गेति-सङ्गमः । नेति-नरः, देवार्चा । मैत्री, रथिकानुपतिष्ठते । पन्थाः कर्ता यस्य तत्र-स्रुघ्नमुपतिष्ठते पन्थाः । मन्त्रः करणं यस्य तत्र-ऐन्द्या गार्हपत्यमुपतिष्ठते ॥ ॥६०॥ पक्षे उपतिष्ठति ॥६१॥ अनूर्ध्वेति आसनादुत्तिष्ठति । ईहेति ग्रामाच्छतमुत्तिष्ठति ॥६२॥ सष्टम् ॥६३॥ ज्ञीप्सा-आत्मप्रकाशनम् । स्थेयः-सभ्यः ॥६४॥

## प्रतिज्ञायाम् ॥३॥३॥६५॥

तिष्ठतेः स्युः प्रतिज्ञाया-मात्मनेपदप्रत्ययाः ॥
शब्दमातिष्ठते नित्यं, शाब्दिको नतु तार्किकः ॥६५॥

## समो गिरः ॥३॥३॥६६॥

प्रतिज्ञायां समः पूर्वा-द्गिरतेरात्मनेपदम् ॥
स्याद्वादं सङ्गिरन्ते ये, विश्वे स्युस्तेऽकुतोभयाः ॥६६॥

## अवात् ॥३॥३॥६७॥

गिरतेरवपूर्वात् स्यु-रात्मनेपदप्रत्ययाः ॥
पक्त्वा स्वार्थं नु भुञ्जानो, जनोऽवगिरते वृथा ॥६७॥

## निह्नवे ज्ञः ॥३॥३॥६८॥

जानातेरपलापेऽर्थे, संभवेदात्मनेपदम् ॥
स्वल्पमप्यपजानीते, तत्त्वं जानञ्जनः किमु ? ॥६८॥

## संप्रतेरस्मृतौ ॥३॥३॥६९॥

जानातेः संप्रतिभ्यां स्या-दस्मृतावात्मनेपदम् ॥
सहस्रं प्रतिजानीते, सञ्जानाति स मातरम् ॥६९॥

## अननोः सनः ॥३॥३॥७०॥

अनुवर्जितजानातेः, सन्नन्तादात्मनेपदम् ॥
धर्मं जिज्ञासते लोकेऽ-नुजिज्ञासति कामितम् ॥७०॥

---

स्पष्टम् ॥६५॥ अकुतोभयाः-सर्वथा निर्भयाः ॥ स्पष्टे ॥६७॥६८॥
एवं सञ्जानीतेऽस्मरणे । स्मरणे प्रतिजानाति ॥६९॥ स्पष्टम् ॥७०॥

श्रुवोऽनाङ्प्रतेः ॥३॥३॥७१॥

श्रृणातेः कर्तरि ज्ञेयं, सन्नन्तादात्मनेपदम् ॥
आङ्प्रतिभ्यां परस्मान्नो, शिष्यः शुश्रूषते गुरून् ॥७१॥

स्मृदृशः ॥३॥३॥७२॥

स्मरतेः पश्यतेश्चापि, सन्नन्तादात्मनेपदम् ॥
भव्यो दिदृक्षतेऽर्हन्तं, सुस्मूर्षते पुराजनुः ॥७२॥

शको जिज्ञासायाम् ॥३॥३॥७३॥

जिज्ञासायां शकेर्धातोः, सन्नन्तादात्मनेपदम् ॥
सद्विद्यां शिक्षते योऽसौ, नूनं तामधिगच्छति ॥७३॥

प्राग्वत् ॥३॥३॥७४॥

सनः प्रकृतितुल्यं स्यात्, सन्नन्तादात्मनेपदम् ॥
कामं शिशयिषन्ते चे-च्छेरतां योगनिद्रया॥७४॥

आमः कृगः ॥३॥३॥७५॥

प्रकृत्या तुल्यमामो वै, तत्पराद् धातुतः कृगः ॥
स्यादात्मनेपदं तद्व-दीहांचक्रे शिवं पदम् ॥७५॥

गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथनोपयोगे ॥३॥३॥७६॥

गन्धनाद्यभिधेयेषु, करोतेरात्मनेपदम् ॥

---

अनाङ्प्रतेरिति-आशुश्रूषति, प्रतिशुश्रूषति ॥७१॥ स्पष्टम् ॥७२॥ जिज्ञासायामिति शिक्षति ॥७३॥ स्पष्टम् ॥७४॥ विभयाञ्चकार अत्र न, प्रकृतेः परस्मैपदत्वात्। कृग इति ईक्षामास ॥७५॥ द्रोहेण परदोषोद्घाटनम्-गन्धनम् । कुत्सनम्-अवक्षेपः । सेवा-सपर्या । अविमृश्यप्रवृत्तिः-

उत्कुरुते सदैवासन्, सँश्चोपकुरुते न कम् ॥७६॥

**अधेः प्रहसने ॥३॥३॥७७॥**

प्रहसनेऽधिपूर्वात् स्यात्, करोतेरात्मनेपदम् ॥
अरातीनधिकुर्वाणं, नाधिकुर्वन्ति शत्रवः ॥७७॥

**दीप्तिज्ञानयत्नविमत्युपसंभाषोपमन्त्रणे वदः ॥३॥३॥७८॥**

दीप्त्याद्यर्थेषु गम्येषु, वदतेरात्मनेपदम् ॥
स्याद्वादे वदते विद्वान्, तत्त्वार्थे वदते सुधीः ॥७८॥

**व्यक्तवाचां सहोक्तौ ॥३॥३॥७९॥**

व्यक्तवाचां सहोक्तौ स्या–द्वदतेरात्मनेपदम् ॥
सन्तः सम्प्रवदन्ते नो, सम्प्रवदन्ति कुक्कुटाः ॥७९॥

**विवादे वा ॥३॥३॥८०॥**

व्यक्तवाचां विवादे वा, वदतेरात्मनेपदम्
वैद्या विप्रवदन्तेऽपि, विप्रवदन्ति तार्किकाः ॥८०॥

---

साहसम् । गुणान्तराऽऽधानम्–**प्रतियत्नः** । **प्रकथनम्**–स्पष्टनम् । धर्मा-दौ विनियोगः–**उपयोगः** ॥७६॥ **प्रहसनम्**–पराभिभवः, परेणापराजयो वा ॥७७॥ **विमतिः**–नानामतिः । **उपसंभाषाः**–उपसान्त्वनम् । **उपमन्त्रणम्**–रहस्युपच्छन्दनम् । तपसि वदते, धर्मे विवदन्ते, कर्मकरानुपवदते, कुलभार्यामुपवदते इत्यादि क्रमशो यत्नाद्युदाहरणतयाऽवसेयम् ॥७८॥ सहोक्ताविति–चैत्रेणोक्ते मैत्रोवदति । **व्यक्तवाचो**–स्फुटवाचो मनुष्यादयः तेषां **सहोक्तिः**–सम्भूयोच्चारणम् ॥७९॥ विवाद इति सम्प्रवदन्ते वैयाकरणाः । सहोक्ताविति वैद्यो वैद्येन क्रमाद्विप्रवदति ॥८०॥

**अनोः कर्मण्यसति ॥३॥३॥८१॥**

व्यक्तवाग्विषयाच्चानो-र्वदेरसति कर्मणि ॥
स्यादात्मनेपदं कामं, पुत्राऽनुवदते पितुः ॥८१॥

**ज्ञः ॥३॥३॥८२॥**

कर्मण्यसति जानातेः, स्यात् कर्तर्यात्मनेपदम् ॥
जानीते सर्पिषः श्रीमाँ-स्तत्त्वं जानाति तत्त्ववित् ॥८२॥

**उपात् स्थः ॥३॥३॥८३॥**

कर्मण्यसति सोपात् स्यात्, तिष्ठतेरात्मनेपदम् ॥
आत्मोपतिष्ठते मुक्तौ, राजानमुपतिष्ठते ॥८३॥

**समो गमृच्छिप्रच्छिश्रुवित्स्वरत्यर्तिदृशः ॥३॥३॥८४॥**

सम्पूर्वकगमादिभ्योऽ-कर्मभ्य आत्मनेपदम् ॥
सूक्तं सङ्गच्छते काले, संशृणोति हितं हितात् ॥८४॥

**वेः कृगः शब्दे चानाशे ॥३॥३॥८५॥**

अनाशेऽकर्मकाच्छब्द-कर्मकाद् वेः कृगो भवेत् ॥
आत्मनेपदमत्यन्तं, क्रोष्टा विकुरुते स्वरान् ॥८५॥

**आङो यमहनः स्वेऽङ्गे च ॥३॥३॥८६॥**

आङो यमिहनिभ्यां स्यु-रात्मनेपदप्रत्ययाः ॥

---

कर्मण्यसतीति-उक्तमनुवदति । व्यक्तवाचामिति-अनुवदति वीणा ॥८१॥ स्पष्टे ॥८२॥८३॥ एवं समृच्छिष्यते, संपृच्छते, संवित्ते, संस्वरते, समृच्छते, समियृते, संपश्यते इत्यादि ॥८४॥ विकुर्वते सैन्धवाः । शब्दे चेति विकरोति मृदम् । अनाश इति विकरोत्यब्यायम् ॥८५॥ स्वेऽङ्गे चेति-

अकर्मस्वाङ्गकर्मभ्यां, पादमायच्छते स्वयम् ॥८६॥

## व्युदस्तपः ॥३॥३॥८७॥

व्युद्भ्यां परात्तपेर्धातो-रकर्मस्वाङ्गकर्मणः ॥
आत्मनेपदमादित्यः, शरद्युत्तपते करैः ॥८७॥

## अणिकर्मणिकर्तृकाण्णिगोऽस्मृतौ ॥३॥३॥८८॥

णिगन्तात् स्यादणिकर्म-णिकर्तृधातुतोऽस्मृतौ ॥
आत्मनेपदमुद्ग्रीवं, राजा दर्शयते प्रजाः ॥८८॥

## प्रलम्भे गृधिवञ्चेः ॥३॥३॥८९॥

णिगन्तगृधिवञ्चिभ्यां, वञ्चन आत्मनेपदम् ॥
वर्तुं गर्धयते गृध्नुः, पटुं वञ्चयते पटुः ॥८९॥

## लीङ्लीनोऽर्चाभिभवे चाच्चाकर्तर्यपि ॥३॥३॥९०॥

लीङ्लीनाभ्यां णिगन्ताभ्यां, लम्भार्चाभिभवेषु तत् ॥
चात्वं स्यात् कर्तृभिन्नेऽप्या-लापयते जटादिभिः ॥९०॥

## स्मिङः प्रयोक्तुः स्वार्थे ॥३॥३॥९१॥

प्रयोक्तुः स्वार्थतो ण्यन्तात्, स्मयतेरात्मनेपदम् ॥
अन्त्यस्यात्वं च प्राग्वत् स्याद्, व्यस्मापयत तापसः ॥९१॥

---

आयच्छति रज्जुम् ॥८६॥ एवं वितपते इत्यादि ॥८७॥ तत्तद्विशेषफलं बृहद्वृत्तेरवसेयम् ॥८८॥ प्रलम्भ इति श्वानं गर्द्धयति अभिकाङ्क्षामस्योत्पादयतीत्यर्थः । एवम् अहिं वञ्चयति-वर्जयतीत्यर्थः ॥८९॥ तदिति-आत्मनेपदम् **अभिभवे**—श्येनो वर्तिकामपलापयते । **प्रलम्भे**—कस्त्वामुल्लापयते । अकर्तर्यपीति-जटाभिरालाप्यते जटिलेन ॥९०॥ प्रयोक्तुः स्वार्थ इति रूपेण विस्मापयति ॥९१॥

## बिभेतेर्भीष् च ॥३॥३॥९२॥

प्रयोक्तुः स्वार्थतो ण्यन्ताद्, बिभेतेरात्मनेपदम् ॥
भियो भीष् स्यात्तथाऽऽत्वञ्च, प्राभीषयत भापनः ॥९२॥

## मिथ्याकृगोऽभ्यासे ॥३॥३॥९३॥

मिथ्याशब्दयुताण्ण्यन्तात्, करोतेरात्मनेपदम् ॥
अभ्यासेऽर्थे पदं मिथ्या-कारयते स्वरादिभिः ॥९३॥

## परिमुहायमायसपाट्धेवदवसदमादरुचनृतः फलवति ॥३॥३॥९४॥

आङो यमियसिभ्याञ्च, पिबत्यादेः परेर्मुहः ॥
परिमोहयते चत्रं, फलवत्यात्मनेपदम् ॥९४॥

## ईगितः ॥३॥३॥९५॥

ईकारेतो गकारेतः, फलवत्यात्मनेपदम् ॥
पठते लक्षयते रूपं, शालीन् पचति पाचकः ॥९५॥

## ज्ञोऽनुपसर्गात् ॥३॥३॥९३॥

अनुपसर्गजानातेः, फलवत्यात्मनेपदम् ॥
जानते साधवस्तत्त्वं, प्रजानाति शिवं सुधीः ॥९६॥

---

एवं भापयते । प्रयोक्तुः स्वार्थ इति कुञ्चिकया भाययति ॥९२॥ मिथ्येति-पदं साधुकारयति । अभ्यास इति सकृत् पदं मिथ्या कारयति ॥९३॥ आयामयते सर्पम्, आयासयते मैत्रम्, पाययते बटुम्, धापयते-शिशुम्, वादयते बटुम्, वासयते पान्थम्, दमयते अश्वम्, आदयते चैत्रेण, रोचयते मैत्रम्, नर्तयते नटम् ॥९४॥ स्पष्टे ॥९५॥९६॥

## वदोऽपात् ॥३॥३॥९७॥

अपपूर्ववदेर्धातोः, फलवत्यात्मनेपदम् ॥
'अपवदेत्त नो तथ्यं' वदन्ति हितमुत्तमा ॥९७॥

## समुदाङो यमेरग्रन्थे ॥३॥३॥९८॥

समुदाङ्भ्यो यमोऽग्रन्थे, फलवत्यात्मनेपदम् ॥
व्रीहीन् संयच्छते भार-मुद्यच्छते नियच्छति ॥९८॥

## पदान्तरगम्ये वा ॥३॥३॥९९॥

फलस्य कर्तृगामित्वं, बोध्यते चेत् पदान्तरैः ॥
अग्रिमैः पञ्चभिः सूत्रै-स्तत्र स्याद्वाऽऽत्मनेपदम् ॥९९॥

## शेषात् परस्मै ॥३॥३॥१००॥

येभ्यो येन विशेषेण, धातुभ्य आत्मनेपदम् ॥
उक्तं ततोऽन्यतो धातोः परस्मैपदप्रत्ययाः ॥१००॥

## परानोः कृगः ॥३॥३॥१०१॥

परानुभ्यां करोतेः स्युः, परस्मैपदप्रत्ययाः ॥
पराकरोति पापं स, साधूननुकरोति यः ॥१०१॥

## प्रत्यभ्यतेः क्षिपः ॥३॥३॥१०२॥

प्रत्यभ्यतेः क्षिपो धातोः, परस्मैपदप्रत्ययाः ॥
यदि वाञ्छसि कल्याणं, मा प्रतिक्षिप सज्जनम् ॥१०२॥

## प्राद्वहः ॥३॥३॥१०३॥

प्रपूर्वाद् वहतेर्धातोः, परस्मैपदमुच्यते ॥

---

फलवतीत्येव-अपवदति परं स्वभावात् ॥९७॥ एवमायच्छते । अग्रन्थ इति-चिकित्सामुद्यच्छति ॥९८॥ 'परिमुहे'-त्यादिसूत्रपञ्चकैः । स्वं शत्रुं; परिमोहयते परिमोहयति वेत्यादि ॥९९॥ भवति अत्ति इत्यादि ॥१००॥ स्पष्टम् ॥१०१॥ एवम् अभिक्षिपति, अतिक्षिपति ॥१०२॥ स्पष्टम् ॥१०३॥

प्रवहति धुरां धर्म्यां, जिनो धर्मधुरन्धरः ॥१०३॥

परेर्मृषश्च ॥३।३।१०४॥

परेर्मृषेर्वहेश्चापि, स्यात् परस्मैपदं ध्रुवम् ॥
परिमृषति भव्यात्मा, सततं मोक्षसाधनम् ॥१०४॥

व्याङ्परे रमः ॥३।३।१०५॥

व्याङ्परिभ्यो रमेर्धातोः, परस्मैपदमुच्यते ॥
प्रारभ्य श्रेयसे कर्म, विरमन्ति न साधवः ॥१०५॥

वोपात् ॥३।३।१०६॥

उपपूर्वाद् रमेर्धातोः, स्याद् परस्मैपदं नवा ॥
उपरमेद् रमां रम्यां, मुक्तिमुपरमेत सन् ॥१०६॥

अणिगि प्राणिकर्तृकानाप्याण्णिगः ॥३।३।१०७॥

स्यात् प्राणिकर्तृकानाप्या-दणिगि णिगि नित्यशः ॥
परस्मैपदमास्ते या, तामासयति गुर्विणीम् ॥१०७॥

चल्याहारार्थेङ्बुधयुधप्रुद्रुस्नुनशजनः ॥३।३।१०८॥

चल्याहारार्थधातुभ्य, इङादिभ्यश्च जायते ॥
णिङन्तेभ्यः पदं प्रोक्तं, पापः कम्पयति क्षमाम् ॥१०८॥

इति तृतीयपादः ॥

---

एवं परिवहति ॥१०४॥ एवम् आरमति, परिरमति ॥१०५॥ स्पष्टम् ॥१०६॥ तत्तद्विशेषफलमूह्यम् ॥१०७॥ एवं–चलयति, भोजयति, आशयति चैत्रमन्नम्, सूत्रमध्यापयति शिष्यम्, बोधयति पद्मं रविः, योधयति काष्ठानि, प्रावयति राज्यम्, द्रावयत्ययः, स्रावयति तैलम् नाशयति पापम्, जनयति पुण्यम् ॥१०८॥

इति तृतीयः पादः समाप्तः ॥

गुपौधूपविच्छिपणिपनेरायः ॥३॥४॥१॥

गुपादिभ्यस्तु धातुभ्यो, जायते आयप्रत्ययः ॥
अर्थानिर्देशतः स्वार्थे, गोपायति पणायति ॥१॥

कमेर्णिङ् ॥३॥४॥२॥

भवेत् स्वार्थे कमेर्धातोः, प्रत्ययो णिङ् णङौ मतौ ॥
आत्मनेपदवृद्धयर्थौ, कामयस्व सदा शिवम् ॥२॥

ऋतेर्डीयः ॥३॥४॥३॥

गतिस्पर्धघृणाद्यर्थात्, स्यादृतेर्डीयप्रत्ययः ॥
आत्मनेपदता ङित्वा-दगुणश्च ऋतीयते ॥३॥

अशवि ते वा ॥३॥४॥४॥

अशवि स्याद् गुपादिभ्य, आयादयो विभाषया ॥
गोप्ता गोपायिता काम-यिता ना कमिता सुधीः ॥४॥

गुप्तिजो गर्हाक्षान्तौ सन् ॥३॥४॥५॥

गर्हायां स्याद् गुपेर्धातोः, सन् क्षमायां तिजेस्तथा ॥
पापी जुगुप्सते धर्मं, मुनिः सर्वं तितिक्षते ॥५॥

कितः संशयप्रतीकारे ॥३॥४॥६॥

जायते सन् कितो धातोः, संशयप्रतिकारयोः ॥

---

सूत्रत्रयं व्यक्तार्थम् ॥१॥२॥३॥ एवम् ऋतीयिता, अर्तिता ॥४॥ गार्हाक्षान्ताविति गोपनम् तेजनम् ॥ संशयप्रतीकार इति केतयति ॥६॥...

चिकित्सति भिषग् व्याधिं, दुर्जनो विचिकित्सति ॥६॥

## शान्दान्मान्बधान्निशानार्जवविचारवैरूप्ये दीर्घश्चेतः ॥३॥४॥७॥

निशानार्जववैरूप्य–विचारार्थेषु सन् क्रमात् ॥
शानेर्दानेर्बधेर्माने–र्दीर्घश्चेतः शीशांसते ॥७॥

## धातोः कण्ड्वादेर्यक् ॥३॥४॥८॥

कण्ड्वादिभ्योऽपि धातुभ्यः, स्वार्थे यक् प्रत्ययो भवेत् ॥
कण्डूयन्ति महीयन्ते, मन्तूयन्ति जना भुवि ॥८॥

## व्यञ्जनादेरेकस्वराद् भृशाऽऽभीक्ष्ण्ये यङ् वा ॥३॥४॥९॥

स्यादेकस्वरतो धातो–र्व्यञ्जनादेर्नु यङ् नवा ॥
आभीक्ष्ण्येऽर्थे भृशार्थे च, मानी जाज्वल्यते सदा ॥९॥

## अट्यर्तिसूत्रिमूत्रिसूच्यशूर्णोः ॥३॥४॥१०॥

स्याद् भृशाभीक्ष्ण्ययोरेभ्यो, धातुभ्यो यङ् अटाट्यते ॥

---

एवं दीदांसति, मीमांसते, बीभत्सते । अर्थोक्तिः किम् ? अर्थान्तरे माभूत्, निशानम्, अवदानम्, मानयति, बाधयति । अत्र पाठान्तरद्वय-मित्थम् ‘शानादिभ्यः क्रमात् स्वार्थे, निशानादिषु सन् भवेत् । पूर्वेकारस्य दीर्घत्वं, मीमांसेत सदा शिवम् ॥’ ‘शानेस्तैक्ष्ण्ये वधेर्वैरू–प्ये दानेरार्जवे हि सन् । माने विचारणे दीर्घ–श्चेतो मीमांसते सुधीः ॥’ ॥७॥ धातोरिति कण्डूः ॥८॥ गुणक्रियाणामधिश्रयणादीनां क्रियान्तराव्यवधानेन साकल्येन संपत्तिः फलातिरेको वा–भृशत्वम, प्रधानक्रियाया विक्लेदादेः क्रियान्तराव्यवधानेना-वृत्तिः आभीक्ष्ण्यम् । व्यञ्जनादेरिति–भृशमीक्षते । एकस्वरादिति भृशं चकास्ति । वेति लुनीहि लुनीहीत्येवायं लुनातीत्यादि यथा स्यात् ॥९॥ एवं सोसूच्यते, अशाश्यते, प्रोर्णोनूयते ॥ ॥१०॥

आराट्यर्यते तथा सोसू-च्यते मोसूच्यते भयात् ॥१०॥

## गत्यर्थात् कुटिले ॥३॥४॥११॥

स्यादेकस्वरतो व्यञ्ज-नादेर्गत्यर्थधातुतः ॥
यङ् कुटिले न पूर्वार्थे, चङ्क्रम्यते खलो जनः ॥११॥

## गलुपसदचरजपजभदशदहो गर्ह्ये ॥३॥४॥१२॥

गर्ह्ये गॄप्रभृतिभ्यः स्याद्, धातुभ्यो यङ् न पूर्वयोः ॥
धूर्तः सासद्यते लोलु-प्यते चञ्चूर्यते तथा ॥१२॥

## न गृणाशुभरुचः ॥३॥४॥१३॥

गृणाशुभरुचिभ्यस्तु, भृशाद्यर्थे न यङ् भवेत् ॥
गृणाति गर्हितं मूर्खोऽ-तिमात्रं शोभते शिशुः ॥१३॥

## बहुलं लुप् ॥३॥४॥१४॥

बाहुल्येन यङो लुप् स्याद्, रोरवीति महावृषः ॥
विलालपीति ना शोका-दशोकाल्लालपीत्यपि ॥१४॥

## अचि ॥३॥४॥१५॥

यङो लुब् जायते नित्यं, नन्वचि प्रत्यये परे ॥
लोलुवः पोपुवश्चेच्यः, सनीसंसादयो मताः ॥१५॥

## नोतः ॥३॥४॥१६॥

उदन्ताद् विहितो यो यङ्, तस्य लुग् नाचि प्रत्यये ॥

---

कुटिल इति भृशं क्रामति ॥११॥ एवं निजेगिल्यते, जञ्जप्यते, जञ्जभ्यते, दन्दश्यते, दन्दह्यते । गर्ह्यं इति साधु जपति, भृशं निगिरति ॥१२॥ एवं भृशं रोचते ॥१३॥ बहुलमिति क्वचिन्न लोलूया, पोपूया ॥१४॥ स्पष्टे ॥१५॥१६॥

रोस्त्यो नीरवाद्वार्य्यो, न प्रतिरवतो बलात् ॥१६॥

## चुरादिभ्यो णिच् ॥३॥४॥१७॥

चुरादयो णितः प्रोक्ता-स्तेभ्यो णिच्प्रत्ययो भवेत् ॥
स्वार्थे चोरयति स्तेनो, धनं भाग्यं नचार्थिनाम् ॥१७॥

## युजादेर्नवा ॥३॥४॥१८॥

युजादिभ्यस्तु धातुभ्यः, स्वार्थे णिज्जायते नवा ॥
योजयेद्वा नियोजेत् स्वं, धर्मेण नतु कर्मणा ॥१८॥

## भूङः प्राप्तौ णिङ् ॥३॥४॥१९॥

भुवो धातोर्भवेत् प्राप्ता-वर्थे णिङ्प्रत्ययो नवा ॥
ज्ञानी भावयते योगाद्, भवते वा शिवं पदम् ॥१९॥

## प्रयोक्तृव्यापारे णिग् ॥३॥४॥२०॥

प्रयोक्तुः प्रेषणादौ स्याद्, व्यापारे णिग् नु धातुतः ॥
पाठयति गुरुः शिष्यं, शिशुं पाययति प्रभुः ॥२०॥

## तुमर्हादिच्छायां सन्नतत्सनः ॥३॥४॥२१॥

यो धातुः स्यादिषेः कर्म, हीषिणा समकर्तृकः ॥
सन्नवा तत इच्छाया-मिच्छासन्नन्ततो नवै ॥२१॥

---

णकारो वृद्ध्यर्थः । एवं नाटयति, पदयते इत्यादि ॥१७॥ एवं साहयति सहतीत्यादि ॥१८॥ प्राप्ताविति-भवति ॥१९॥ स्पष्टम् ॥२०॥ यथा चिकीर्षति, जिगमिषति । तुमर्हादिति यानेनेच्छति । इच्छायामिति भोक्तुं याति । अतत्सन इति चिकीर्षितुमिच्छति । तदिति जुगुप्सिषते ॥२१॥

द्वितीयायाः काम्यः ॥३॥४॥२२॥

वा स्यान्नाम्नो द्वितीयान्ता-दिच्छार्थे काम्यप्रत्ययः ॥
धर्मकाम्यति धर्मात्मा, कामात्मा कामकाम्यति ॥२२॥

अमाऽव्ययात् क्यन् च ॥३॥४॥२३॥

वाऽनव्ययादमान्ताच्च, स्याद् द्वितीयान्तनामतः ॥
इच्छार्थे क्यन् च काम्यश्च, पुत्रीयति स्वरिच्छति ॥२३॥

आधाराच्चोपमानादाचारे ॥३॥४॥२४॥

उपमानाद् द्वितीयान्ता-दाधारात् स्यादमाव्ययात् ॥
क्यन् वा कन्यां यतिर्वस्त्री-यति कुट्यां गृहीयति ॥२४॥

कर्तुः क्विप् गल्भक्लीबहोडात्तु ङित् ॥३॥४॥२५॥

क्विब् नवा नामतः कर्तु-राचार उपमानतः ॥
गल्भादेर्ङित् स एव स्या-दश्वति गल्भते खरः ॥२५॥

क्यङ् ॥३॥४॥२६॥

उपमानाद् भवेद् कर्तु-राचारे क्यङ् विभाषया ॥
विदुषां सङ्गतिं कृत्वा, मूर्खोऽपि विबुधायते ॥२६॥

सो वा लुक् च ॥३॥४॥२७॥

आचार उपमानात् स्यात्, क्यङ् नवा सान्तकर्तृतः ॥
लुगन्त्यसस्य वा ज्योत्स्ना, यशायते यशस्यते ॥२७॥

---

द्वितीयाया इति इष्टः पुत्रः ॥२२॥ एवं पुत्रकाम्यति ॥२३॥ आचारार्थे इति बोध्यम् ॥२४॥ ङित्वादात्मनेपदम् ॥२५॥ क्विप्क्यङोस्तुल्यविषयत्वादसत्युत्सर्गापवादत्वे पर्यायेण प्रयोगः ॥२६॥ स्पष्टे ॥२७॥२८॥

## ओजोऽप्सरसः ॥३॥४॥२८॥

क्यङ् स्यादोजोऽप्सरोभ्यां वा, कर्तृभ्यामुपमानतः ॥
सलोपश्च ध्रुवं क्वापि–दोजायतेऽप्सरायते ॥२८॥

## च्व्यर्थे भृशादेः स्तोः ॥३॥४॥२९॥

भृशादिभ्योऽपि कर्तृभ्य–श्च्व्यर्थे क्यङ्प्रत्ययो नवा ॥
लुक् स्तोर्भवेद्यथास्थान–मोजायते भृशायते ॥२९॥

## डाच् लोहितादिभ्यः षित् ॥३॥४॥३०॥

डाजन्तेभ्यस्तथा लोहि–तादिभ्यः क्यङ् षिदुच्यते ॥
दमदमायति क्ष्मेयं, किञ्च दमदमायते ॥३०॥

## कष्टकक्षकृच्छ्रसत्रगहनाय पापे क्रमणे ॥३॥४॥३१॥

कष्टादिभ्यश्चतुर्थ्यर्थे, पापे क्यङ् क्रमणे भवेत् ॥
कष्टायते जनः कृच्छ्रा–यते च गह्नायते ॥३१॥

## रोमन्थाद् व्याप्यादुच्चर्वणे ॥३॥४॥३२॥

रोमन्थकर्मणः क्यङ् स्या–दुच्चर्वणे विभाषया ॥
भुक्त्वा पश्चाच्च रोमन्था–यन्ते गावः स्वभावतः ॥३२॥

---

कर्तुरित्येव अभृशं भृशं करोति । च्व्यर्थ इति भृशो भवति ॥२९॥ कर्तुरित्येव अपटपटा पटपटा करोति, च्व्यर्थ इति लोहितो भवति ॥३०॥ एवं कक्षायते, सत्रायते । चतुर्थीति रिपुः कष्टं क्रामति । पाप इति कष्टाय तपसे क्रामति ॥३१॥ अभ्यवहृतं द्रव्यं रोमन्थः, उद्गीर्य चर्वणम् उच्चर्वणम् । उच्चर्वण इति कीटो रोमन्थं वर्तयति ॥३२॥

फेनोष्मबाष्पधूमादुद्वमने ॥३॥४॥३३॥

फेनादिभ्यो नु कर्मभ्यः, क्यङ् स्यादुद्वमने नवा ॥
ऊष्मायते मरुद् धूमायते फेनायते पयः ॥३३॥

सुखादेरनुभवे ॥३॥४॥३४॥

साक्षात्कारे सुखादिभ्यः, कर्मभ्यः क्यङ् विभाषया ॥
जनः सुखायते दुःखा-यते च निजकर्मतः ॥३४॥

शब्दादेः कृतौ वा ॥३॥४॥३५॥

शब्दादिभ्योऽपि कर्मभ्यः, कृतौ क्यङ्प्रत्ययो नवा ॥
पात्रं शब्दायते कांस्यं, न शब्दयति काञ्चनम् ॥३५॥

तपसः क्यन् ॥३॥४॥३६॥

कर्मवाचितपःशब्दात्, करोतौ क्यन् भवेन्नवा ॥
तपस्येन्मानवः सर्व-कालं कामं शमिच्छया ॥३६॥

नमोवरिवश्चित्रङोऽर्चासेवाश्चर्ये ॥३॥४॥३७॥

एभ्यस्त्रिभ्यो नु शब्देभ्यः, पूजादिषु भवेत् कृतौ ॥
क्यन् वा नमस्यति चित्री-यते च वरिवस्यति ॥३७॥

अङ्गान्निरसने णिङ् ॥३॥४॥३८॥

भवेन्निरसनेऽर्थे णिङ्, कर्मणो वाऽङ्गवाचिनः ॥
भीतभीतो जनो हस्त-यते पादयतेऽथवा ॥३८॥

---

एवं बाष्पायते ॥३३॥ स्पष्टे ॥३४॥३५॥ तपस्यति शत्रूनित्यादौ स्वकर्मणा सकर्मणः ॥३६॥ स्पष्टे ॥३७॥३८॥

## पुच्छादुत्परिव्यसने ॥३॥४॥३९॥

उत्परिव्यसने पुच्छ-शब्दाण्णिङ्प्रत्ययो नवा ॥
परिपुच्छयते हर्षात्, कपिः पुच्छयते सदा ॥३९॥

## भाण्डात् समाचितौ ॥३॥४॥४०॥

कर्मणो भाण्डशब्दाद्वा, णिङ् प्रत्ययः समाचितौ ॥
ना सम्भाण्डयते यत्नात्, परिभाण्डयते परम् ॥४०॥

## चीवरात् परिधानाऽर्जने ॥३॥४॥४१॥

चीवरात् कर्मणो णिङ् वा, परिधानेऽर्जने तथा ॥
सञ्चीवरयते सम्यग्, यावदावश्यकं मुनिः ॥४१॥

## णिज् बहुलं नाम्नः कृगादिषु ॥३॥४॥४२॥

नाम्नो णिच् प्रत्ययो ज्ञेयो, बाहुल्येन कृगादिषु ॥
लघयन्ति महात्मानं, दुर्जनाः स्वस्वभावतः ॥४२॥

## व्रताद् भुजितन्निवृत्त्योः ॥३॥४॥४३॥

भोजने तन्निवृत्तौ च, व्रतशब्दात् कृगादिषु ॥
अचित्तं व्रतयते सुष्ठु, सचित्तं व्रतयेद् व्रती ॥

## सत्यार्थवेदस्याः ॥३॥४॥४४॥

सत्यार्थवेदशब्दाना-माकारोऽन्तो भवेण्णिचि ॥

---

एवम् उत्पुच्छयत इत्यादि ॥३९॥ स्पष्टम् ॥४०॥ एवं परिचीवरयते ॥४१॥ लघुं करोति लघयति । एवं मुण्डयति च्छात्रमित्यादि ॥४२॥ अचित्तं-चैतन्यरहितम् । सचित्तं-चैतन्यसहितम् ॥४३॥ विधानसामर्थ्यात् 'त्र्यन्त्यस्वरादे......७-४-४०' इति लुग् न ॥४४॥

सत्यापयन्ति ये वेदा-पर्यन्त्यर्थापयन्त्यपि ॥४४॥

श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक्

॥३॥४॥४५॥

श्वेताश्वादिचतुर्णां स्या-दश्वादेर्लुग् णिचि ध्रुवम् ॥
श्वेतयन्त्युत्तमा ग्राम-मश्वयन्ति च नीचकाः ॥४५॥

धातोरनेकस्वरादाम् परोक्षायाः कृभ्वस्ति चानु तदन्तम् ॥३॥४॥४६॥

अनेकस्वरतो धातोः, परोक्षास्थान आमनु ॥
कृभ्वस्तयः परोक्षान्ता-श्चकासामास धार्मिकः ॥४६॥

दयायास्कासः ॥३॥४॥४७॥

दयायास्कासधातुभ्यः, परोक्षास्थान आमनु ॥
कृभ्वस्तयः परोक्षान्ता, दयाञ्चक्रेऽकरोद् दयाम् ॥४७॥

गुरुनाम्यादेरनृच्छूर्णोः ॥३॥४॥४८॥

गुरुनाम्यादितो धातो-र्ऋच्छूर्णुवर्जिताद् भवेत् ॥
आमादेशस्तथाऽन्यच्च, प्राग्वदीहांबभूवतुः ॥४८॥

---

श्वेताश्व-अश्वतर-गालोडित-आह्वरक इति शब्दचतुष्कं तस्य क्रमशो णिचि अश्व-तर-इत-क इति चतुष्कस्य लुक् ॥४५॥ एवं चकासांचकार, चकासां-बभूवेत्यादि ॥४६॥ एवं पलायाञ्चक्रे, आसाञ्चक्रे इत्यादि ॥४७॥ गुर्विति किम् इयेष । नामीति-आनर्च । आदीति-निनाय । अनृच्छूर्णोरिति-आनर्च्छ, प्रोर्णुनाव ॥४८॥

जागुषसमिन्धेर्नवा ॥३।४।४९॥

स्याज्जागुषसमिन्धिभ्य, आमादेशो विभाषया ॥
प्राग्वदन्यज्जजागर, जागरामास योगवान् ॥४९॥

भीह्रीभृहोस्तिवत् ॥३।४।५०॥

एभ्यः परं परोक्षाया, आम् वा तिव्वत् स जायते ॥
पूर्ववद् विभयामास, बिभाय पापतो मुनिः ॥५०॥

वेत्तेः कित् ॥३।४।५१॥

वेत्तेर्धातोः परोक्षाया, आम् वा किच्च स जायते ॥
प्राग्वदन्यद्विदामास, विवेद शिवमक्षरम् ॥५१॥

पञ्चम्याः कृग् ॥३।४।५२॥

वेत्तेर्धातोर्नु पञ्चम्याः, किदाम् वा स्यात्ततः परम् ॥
पञ्चम्याः कृग् प्रयुज्येत, वेत्तु विदाङ्करोतु गाम् ॥५२॥

सिजद्यतन्याम् ॥३।४।५३॥

परस्यामद्यतन्यां सिच्, प्रत्ययो धातुतो भवेत् ॥
अनैषीत् कालमम्लानो, रामो दाशरथिर्वने ॥५३॥

स्पृशमृशकृषतृपदृपो वा ॥३।४।५४॥

स्पृशादिभ्यो नु धातुभ्यो-ऽद्यतन्यां सिज् विभाषया ॥

---

एवम् ओषाञ्चकार, उवोष, समिन्धाञ्चक्रे, समीधे ॥४९॥ एवं जिह्रया-ञ्चकार, जिह्राय । बिभराञ्चकार, बभार जुहवाञ्चकार, जुहाव ॥ ५० ॥ अक्षरं शिवम्–अविनश्वरं कल्याणम् ॥५१॥ गाम्–वाणीम् ॥५२॥ स्पष्टम् ॥५३॥ एवम् अप्राक्षीदित्यादि बोध्यम् ॥५४॥

अस्प्राक्षीत्तीर्थभूमिं सोऽ–स्पार्क्षीदस्पृक्षदन्वहम् ॥५४॥

**हशिटो नाम्युपान्त्याददृशोऽनिटः सक् ॥३॥४॥५५॥**

हान्तात् शिडन्तन्तो नाम्यु–पान्त्याच्च दृशिवर्जितात् ॥
अनिटो धातुतः सक् स्या–दद्यतन्यामधुक्षत ॥५५॥

**श्लिषः ॥३॥४॥५६॥**

अद्यतन्यां श्लिषो धातो–र्भवेत् सक्प्रत्ययो ध्रुवम् ॥
आश्लिक्षद् भरतं रामः, काननादागतः कृशः ॥५६॥

**नासत्त्वाश्लेषे ॥३॥४॥५७॥**

अप्राण्याश्लेषरूपेऽर्थे, श्लिषः सक्प्रत्ययो नवै ॥
सर्वं समाश्लिषत् काष्ठं, जतु मुनिकुलं मुनिः ॥५७॥

**णिश्रिद्रुस्रुकमः कर्तरि ङः ॥३॥४॥५८॥**

ण्यन्ताच्छ्र्यादेश्च कर्त्रर्थे–ऽद्यतन्यां ङः प्रजायते ॥
अचीकमत सद्धर्मं, रामो राज्यमचीकरत् ॥५८॥

**ट्धेश्वेर्वा ॥३॥४॥५९॥**

ट्धेश्विभ्यामद्यतन्यां ङः, कर्तरि स्याद्विभाषया ॥
अधासीददधद् वार्धे–रधाद्वा विबुधः सुधाम् ॥५९॥

---

हशिट इति अभैत्सीत् । नाम्युपान्त्यादिति अधाक्षीत् । अदृश इति अद्राक्षीत् । अनिट इति अकोषीत् ॥५५॥ अनिट इत्यनुसन्धेयं तेनाश्लेषीत्–अधाक्षीदित्यर्थः इत्यत्र न सक्, दाहार्थस्य श्लिषः सेट्त्वात् ॥५६॥ व्यत्याश्लिक्षत काष्ठानि अत्र सिच् । व्यत्यश्लिक्षन्त मिथुनानि अत्र 'हशिट...' ।३।४।५५। इति सक् ॥५७॥ एवम् अशिश्रियदित्यादि ॥५८॥ एवम् अशिश्वियत्, अश्वयीत्, अश्वदित्यादि ॥५९॥

## शास्त्यसूवक्तिख्यातेरङ् ॥३॥४॥६०॥

कर्तर्येभ्यो नु धातुभ्यो-ऽद्यतन्यामङ् प्रजायते ॥
भविकानखिलाँल्लोका-नशिषज्जिनभास्करः ॥६०॥

## सर्त्यर्तेर्वा ॥३॥४॥६१॥

अङ्प्रत्ययोऽद्यतन्यां स्यात्, सर्त्यर्तिभ्यां विभाषया ॥
असार्षीदसरच्चन्द्र, आर्षीदारत् समारत ॥६१॥

## ह्वालिप्सिचः ॥३॥४॥६२॥

भवेदेभ्योऽद्यतन्यामङ्, प्रत्ययो ननु कर्तरि ॥
आह्वत् स्नेहेन सन्मित्र-मसिचच्च वचोऽमृतैः ॥६२॥

## वात्मने ॥३॥४॥६३॥

ह्वादिभ्योऽङद्यतन्यां वा, स्यात् कर्तर्यात्मनेपदे ॥
आह्वताह्वास्त वेगेन, रावणं रघुनन्दनः ॥६३॥

## लृदिद्द्युतादिपुष्यादेः परस्मै ॥३॥४॥६४॥

भवेदेभ्योऽद्यतन्यामङ्, परस्मैपदप्रत्यये ॥
अगमदस्पृशद् ग्राम-मद्युतच्चापुषज्जनम् ॥६४॥

---

एवम्, असूच्-आस्थत, वचंक् ब्रूग्क्वा-अवोचत्, ख्यांक्चक्षिक्वा-आख्यात् इत्यादि ॥६०॥ एवं समार्ष्ट इत्यादि ॥६१॥ एवम् अलिपदित्यादि ॥६२॥ एवम् अलिपत, अलिप्त, असिचत, असिक्तेत्यादि ॥६३॥ परस्मैपद इति-समगँस्त ॥६४॥

ऋदिच्छ्विस्तम्भूम्रुचूम्लुचूग्लुचूग्लुञ्चूज्रो वा ॥३॥४॥६५॥

स्यात् परस्मैपदेऽङ् वाद्य–तन्यां श्व्यादेश्च ऋदितः ॥
न्यरुधदात्मनः शत्रुं, न्यरौत्सीच्चाभिदत्तथा ॥६५॥

ञिच् ते पदस्तलुक् च ॥३॥४॥६६॥

गत्यर्थात् पद्यतेर्धातो–रद्यतनीतप्रत्यये ॥
ञिच् तकारस्य लुक् च स्यात्, सद्विद्या समपादि ते ॥६६॥

दीपजनबुधिपूरितायिप्यायो वा ॥३॥४॥६७॥

कर्तर्येभ्योऽद्यतन्यास्ते, परे ञिच्प्रत्ययो नवा ॥
लोकमदीप्यदीपिष्टा–पूर्यपूरिष्ट कामनाम् ॥६७॥

भावकर्मणोः ॥३॥४॥६८॥

धातोरद्यतनीते स्याद्, ञिच् तलुग् भावकर्मणोः ॥
क्षीरोदे हरिणाऽशायि, दयाऽकारि जिनेश्वरैः ॥६८॥

स्वरग्रहदृशहन्भ्यः स्यसिजाशीःश्वस्तन्यां ञिट् वा ॥३॥४॥६९॥

ग्रहादिभ्यः स्वरान्ताच्च, स्यादिषु भावकर्मणोः ॥
ञिड् वा दायिष्यते विद्या, दास्यते सूरिभिः सदा ॥६९॥

---

एवम् अश्वत्, अश्वयीदित्यादि ॥५६॥ त इति उदपत्साताम् ॥६६॥ एवमजनि, अजनिष्टेत्यादि ॥६७॥ स्पष्टम्, ॥६८॥ एवमदायिषाताम्, अदिषाताम्, दायिषीष्ट, दासीष्ट, दायिता, दाता, इत्यादि ॥६९॥

## क्यः शिति ॥३॥४॥७०॥

धातोः क्यः प्रत्ययो ज्ञेयो, भावकर्मशिति ध्रुवम् ॥
शय्यतां योगनिद्रायां, श्रुतं सम्यगधीयताम् ॥७०॥

## कर्त्तर्यनद्भ्यः शव् ॥३॥४॥७१॥

कर्त्तरि शिति शव् ज्ञेयो, धातोरदादिवर्जितात् ॥
भवति संभवेच्छ्रेयोऽ–भवद् भवतु धमतः ॥७१॥

## दिवादेः श्यः ॥३॥४॥७२॥

दिवादिगणतो धातोः, श्यो भवेत् शिति कर्त्तरि ॥
दीव्यन्ति कृतिनो लोके, जायन्ते विशदाशयाः ॥७२॥

## भ्रासभ्लासभ्रमक्रमक्लमत्रसित्रुटिलाषियसिसंयसेर्वा ॥३॥४॥७३॥

श्यो नवा सम्भवेदेभ्यः, कर्तरि विहिते शिति ॥
भवे भ्रमन्ति भ्राम्यन्ति, प्राणिनः स्वेन कर्मणा ॥७३॥

## कुषिरञ्जेर्व्याप्ये वा परस्मै च ॥३॥४॥७४॥

आभ्यां शिद्विषये व्याप्ये, कर्तरि जायते नवा ॥
श्यः परस्मैपदं चापि, कुष्यन्ति चरणाः स्वयम् ॥७४॥

---

शितीति–बभूवे ॥७०॥ कर्तरीति पच्यते । अनद्भ्य इति अत्ति ॥७१॥ स्पष्टम् ॥७२॥ एवं भ्रास्यते, भासते इत्यादि ॥७३॥ पक्षे कुष्यन्ते, एवं रज्यति रज्यते वा वस्त्रं स्वयमेव । व्याप्ये कर्त्तरीति–कुष्णाति पादं रोगः । शितीति अकोषि ॥७४॥

स्वादेः श्नुः ॥३॥४॥७५॥

धातोः स्वादिगणात् श्नुः स्यात्, कर्त्तरि विहिते शिति ॥
विषयिणं विसिन्वन्ति, शब्दाद्या विषयास्ततः ॥७५॥

वाऽक्षः ॥३॥४॥७६॥

'अक्षौ' धातोर्भवेत् श्नुर्वा, कर्तरि विहिते शिति ॥
अक्ष्णोत्यक्षति सङ्घातं, करोति व्याप्नुतेऽथवा ॥७६॥

तक्षः स्वार्थे वा ॥३॥४॥७७॥

'तक्षौ' धातोर्भवेत् स्वार्थे, कर्तरि विहिते शिति ॥
श्नुर्वा तक्ष्णोति यः काष्ठं, तक्षति काष्ठतट् स वै ॥७७॥

स्तम्भूस्तुम्भूस्कम्भूस्कुम्भूस्कोः श्ना च ॥३॥४॥७८॥

स्तम्भ्वादिसौत्रधातुभ्यः, स्कुगश्च शिति जायते ॥
श्नाः श्नुश्च प्रत्ययो विष्ट–भ्नाति स्तभ्नोति सम्मदः ॥७८॥

क्र्यादेः ॥३॥४॥७९॥

श्नाः क्र्यादिगणतो धातोः, कर्तरि विहिते शिति ॥
यो यं प्रीणाति सद्भावात्, स तं क्रीणात्यसंशयम् ॥७९॥

व्यञ्जनाच्छ्नाहेरानः ॥३॥४॥८०॥

व्यञ्जनान्ताद् भवेद्धातो–रानः श्नासहितस्य हेः ॥
धर्मं पुषाण विज्ञानं, गृहाण मा लुनीहि शम् ॥८०॥

---

स्पष्टे ॥७५॥७६॥ स्वार्थ इति–संतक्षति शिष्यम् ॥७७॥ एवं स्तुभ्नाति, स्तुभ्नोतीत्यादि ॥७८॥ स्पष्टं सूत्रत्रयम् ॥७९॥८०॥८१॥

## तुदादेः शः ॥३॥४॥८१॥

शस्तुदादिगणाद्धातोः, कर्तरि विहिते शिति ॥
मूर्खः पुत्रस्तुदत्येव, पापश्चेत्तुदते भृशम् ॥८१॥

## रुधां स्वराच्श्नो न लुक् च ॥३॥४॥८२॥

रुधादेः स्वरतः श्नः स्यात्, कर्तरि विहिते शिति ॥
लुक् प्रकृतेर्नकारस्य, भिन्ध्यरीनान्तरान् खलान् ॥८२॥

## कृग्तनादेरुः ॥३॥४॥८३॥

भवेत् कृगस्तनादेश्च, कर्तरि विहिते शिति ॥
करोति कुरुते धर्मं, तनोति तनुते स शम् ॥८३॥

## सृजः श्राद्धे ञिक्यात्मने तथा ॥३॥४॥८४॥

श्राद्धे कर्तरि सृज्धातो–र्ञिक्यात्मनेपदानि वै ॥
विहितमनतिक्रम्य, धार्मिकः सृज्यते स्रजम् ॥८४॥

## तपेस्तपःकर्मकात् ॥३॥४॥८५॥

तपःकर्मकतप्धातो–स्तथा कर्तरि जायते ॥
ञिक्यात्मनेपदं तेपे, तप्यते वा तपो मुनिः ॥८५॥

## एकधातौ कर्मक्रिययैकाऽकर्मक्रिये ॥३॥४॥८६॥

कर्मस्थक्रिययाऽभिन्ना, सम्प्रत्यकर्मिका क्रिया ॥

---

एवं रुणद्धि, हिनस्ति इत्यादि ॥८२॥ स्पष्टम् ॥८३॥ एवम् असर्जि, स्रक्ष्यते इत्यादि । 'श्राद्ध इति व्यत्यसृष्ट माले मिथुनम् ॥८४॥ तप इति– उत्तपति स्वर्णं स्वर्णकारः । कर्मेति तपः साधुं तपति ॥८५॥ अस्यार्थः–

एकधातौ ततो ञिक्या–त्मनेपदान्यकारि किम् ? ॥८६॥

## पचिदुहेः ॥३॥४॥८७॥

एकधातौ नु कर्मस्थ–क्रिये कार्य्याणि कर्तरि ॥
ञिक्यात्मनेपदान्याभ्यां, पच्यते ओदनः स्वयम् ॥८७॥

## न कर्मणा ञिच् ॥३॥४॥८८॥

कर्मयोगे भवेदाभ्यां, कर्तरि प्रत्ययो न ञिच् ॥
त्र्याऽदोहि गौः पयोऽपाचि, वायुनोदुम्बरः फलम् ॥८८॥

## रुधः ॥३॥४॥८९॥

कर्मकर्तरि रुध्धातो–र्नैव ञिच्प्रत्ययो भवेत् ॥
अरुद्ध गौः स्वयं गोपै–ररांधि गौः सयष्टिकैः ॥८९॥

## स्वरदुहो वा ॥३॥४॥९०॥

दुहेः स्वरान्तधातोश्च, ञिज् नवा कर्मकर्तरि ॥
स्वयं कटोऽकृताकार्य्य–दुग्धाऽदोहि च गौः स्वयम् ॥९०॥

---

एकस्मिन् धातौ कर्मस्थक्रियया पूर्वदृष्टया एका–अभिन्ना सम्प्रत्यकर्मिका क्रिया यस्य, तस्मिन् कर्तरि कर्मकर्तृरूपे धातोः । एवमपाचि, पक्ष्यते इत्यादि । एकधाताविति–पचत्योदनं चैत्रः, सिध्यत्योदनः स्वयम् । कर्मक्रिययेति–साध्वसिश्छिनत्ति । एकक्रिय इति–स्रवत्युदकं कुण्डिका, स्रवत्युदकं कुण्डिकायाः । अकर्मक्रिय इति भिद्यमानः कुशूलः पात्राणि भिनत्ति ॥८६॥ एवमपाचि, पक्ष्यते इत्यादि, अदोहि, दुह्यते धोक्ष्यते वा गौः स्वयमेव ॥८७॥ कर्मणेति–अपाचि ओदनः स्वयमेव ॥ ८८ ॥ गोपैरित्यादि प्रत्युदाहरणम् ॥ ८९ ॥ स्पष्टम् ॥९०॥

## तपः कर्त्रनुतापे च ॥३॥४॥९१॥

अनुतापे तपेर्ञिङ् न, कर्मकर्तरि कर्तरि ॥
अन्ववातप्त पापेना-न्वतप्त कितवः स्वयम् ॥९१॥

## णिस्नुश्र्यात्मनेपदाकर्मकात् ॥३॥४॥९२॥

स्नुश्रिभ्यां ण्यन्तधातोश्चाऽकर्मभ्यः कर्मकर्तरि ॥
आत्मनेपदतायां ञिच्, नैव प्रास्नोष्ट गौः स्वयम् ॥९२॥

## भूषार्थसन्किरादिभ्यश्च ञिक्यौ ॥३॥४॥९३॥

भूषार्थसन्किरादिभ्यो, ण्यादिभ्यः कर्मकर्तरि ॥
ञिक्यौ स्यातां न भाग्येन, कन्याऽलमकृत स्वयम् ॥९३॥

## करणक्रियया क्वचित् ॥३॥४॥९४॥

ञिक्यात्मनेपदानि स्युः, करणक्रियया क्वचित् ॥
कर्तरि पादपं सद्यो, वेष्टयन्ते लताः स्वयम् ॥९४॥

इतिचतुर्थः पादः

॥ तृतीयोऽध्यायः समाप्तः ॥

---

कर्त्रनुतापे चेति-अतापि पृथिवी राज्ञा ॥९१॥ एवम् अपीपचदोदनं चैत्रेण-मैत्रः । अपीपचतौदनः स्वयमेव । उदशिश्रियत दण्डः स्वयमेव । व्यकृत सैन्धवः स्वयमेव ॥९२॥ एवमलङ्कुरुते कन्या स्वयमेव, सन्नन्तप्रमुखेभ्योऽप्येवमेव ॥९३॥ क्वचिदिति-साध्वसिश्छिनत्ति ॥९४॥

इतिचतुर्थः पादः ॥

॥ समाप्तिमगात्तृतीयोऽध्यायः ॥

# अथ चतुर्थोऽध्यायः ॥

## द्विर्धातुः परोक्षाङे प्राक् तु स्वरे स्वरविधेः ॥४॥१॥१॥

धातुर्द्विः स्यात् परोक्षायां, ङे च द्विर्वचने स्वरे ॥
द्वित्वं स्वरविधेः पूर्वं, पपाठाशिश्रियद् गुरून् ॥१॥

## आद्योऽश एकस्वरः ॥४॥१॥२॥

अनेकस्वरधातोश्चा-द्यैकस्वरोऽंश उच्यते ॥
द्विर्ङेपरोक्षयोर्नक्तं, जजागार महामुनिः ॥ २ ॥

## सन्यङश्च ॥४॥१॥३॥

द्विराद्यैकस्वरोऽंशो हि, स्यात् सन्नन्तयङन्तयोः ॥
पापठ्यते श्रुतं सम्यक्, तितिक्षन्ते क्षमाधनाः ॥३॥

## स्वरादेर्द्वितीयः ॥४॥१॥४॥

स्वरादिधातुसम्बन्धी, द्वितीयांशो द्विरुच्यते ॥
एकस्वरो न चाद्योऽंशो, नाशिशदाटिटिच्चतः ॥४॥

## न बदनं संयोगादिः ॥४॥१॥५॥

स्वरादेस्तु द्वितीयस्यै-कस्वरस्य न जायते ।
संयोगादिबकारादे-र्द्वित्वमाङ्डिटदात्मना ॥५॥

---

चक्रतुः, जेघ्रीयते, शुशावेत्यादि प्रागित्यादेः फलतया बोध्यम् । प्राक् तु स्वरे स्वरविधेरिति आद्विर्वचनमधिकारः ॥१॥ स्पष्टे ॥२॥३॥ प्रागित्यादेरिति–आटिटत् ॥४॥ एवम् उब्जिजिषति, उन्दिदिषतीत्यादि । संयोगादेरिति प्राणिणिषति ॥५॥

## अयि रः ॥४॥१॥६॥

संयोगादी रकारो द्वि-न स्याद् ये तु परे भवेत् ॥
अन्यच्च पूर्ववज्ज्ञेय-मर्चिचिषत्यरार्यते ॥६॥

## नाम्नो द्वितीयाद् यथेष्टम् ॥४॥१॥७॥

द्विर्भाक्स्वरादिनाम्नस्तु, द्विर्द्वितीयाद् यथेप्सितम् ॥
अशिश्वीयिषति स्नेहा-दश्वीयियिषति ध्रुवम् ॥७॥

## अन्यस्य ॥४॥१॥८॥

स्वराद्यन्यस्य नाम्नस्तु, धातोर्द्विर्भाज इष्यते ॥
एकस्वरो यथेष्टं द्विः, पुपुत्रीयिषति ह्रिया ॥८॥

## कण्ड्वादेस्तृतीयः ॥४॥१॥९॥

कण्ड्वादेर्द्विवचोभाज-स्तृतीयांशो द्विरुच्यते ॥
एकस्वरो बुधः कण्डू-यियिषति स्वयं क्वचित् ॥९॥

## पुनरेकेषाम् ॥४॥१॥१०॥

प्रधानाचार्यसम्मत्या, द्वित्वेऽपि द्विः पुनर्भवेत् ॥
सुसोषुषिषते प्राणि-णिनिषद् मानवो मुदा ॥१०॥

## यिः सन् वेर्ष्यः ॥४॥१॥११॥

ईर्ष्यतेर्द्विवचोभाजो, यिः सन् वा द्विः प्रजायते ॥
ईर्ष्यियिषति नज्ञाना-दीर्ष्यिषिषति धार्मिकम् ॥११॥

---

स्पष्टम् ॥६॥ एवम् अश्वीयिपिषति ॥७॥ एवं पुतित्रीयिषति, पुत्रीयियिषति, पुत्रीयिषिषति ॥८॥ एवम् असूयियिषतीत्यादि ॥९॥ एकेषामिति–सोषुषिषते ॥१०॥ स्पष्टे ॥११॥

## ह्वः शिति ॥४॥१॥१२॥

जुहोत्याद्याः शिति द्विः स्यु-राददानि ददाति यः ॥
परार्थं स सुखं सन्तः, प्राणान् जुह्वति सर्वदा ॥१२॥

## चराचर–चलाचल–पतापत–वदावद–घनाघन–पाटूपटं वा ॥४॥१॥१३॥

कृतद्विर्वचना वैते, निपात्यन्तेऽचि सूरिभिः ॥
चलाचलो भवेद् धूर्तो, वदावदो घनाघनः ॥१३॥

## चिक्लिद–चक्नसम् ॥४॥१॥१४॥

क्लिद्यतेः क्नस्यतेश्चापि, क्रमशः केऽचि केऽथवा ॥
कृतद्वित्वौ निपात्येते, चिक्लिदः किमु चक्नसः ॥१४॥

## दाश्वत्–साह्वत्–मीढ्वत् ॥४॥१॥१५॥

अद्वित्वाद्या निपात्यन्ते, त्रयोऽमी क्वसुप्रत्ययाः ॥
दाश्वान् वित्तं सुतं साह्वान्, वृक्षं मीढ्वान् गृही गृहे ॥

## ज्ञप्यापो ज्ञीपीप्, नच द्विः सिसनि ॥४॥१॥१६॥

सादौ सनि ज्ञपेर्ज्ञीप् स्या–दापेरीप् न च द्विस्तयोः ॥
ईप्सति शाश्वतं शं यो, ज्ञीप्सति मतमार्हतम् ॥१६॥

---

॥१२॥ एवं चराचरः, पतापतः, पाटूपट इति । पक्षे चरः, चलः, पतः, वदः, हनः, पाटः इति ॥१३॥ अथवा के इति–उभयत्र घञर्थे के इत्यर्थः ॥१४॥ दाशृग् दाने, षहि मर्षणे, मिह सेचने इत्येषां क्रमशो दाश्वदित्यादि ज्ञेयम् ॥१५॥ सीति–जिज्ञपयिषति १६॥

## ऋध ईर्त् ॥४॥१॥१७॥

सादौ सनि ऋधेरीर्त् स्याद्, धातुश्च द्विर्न जायते ॥
अर्दिधिषति सन् धर्मैः, पापी चेर्त्सति पाप्मना ॥१७॥

## दम्भो धिप्धीप् ॥४॥१॥१८॥

दम्भेः सिसनि धिप्धीपौ, न चास्य द्विर्भवेत्तदा ॥
धिप्सति धीप्सति क्रोष्टा, दिदम्भिषति नापितः॥१८॥

## अव्याप्यस्य मुचेर्मोग् वा ॥४॥१॥१९॥

अकर्मकमुचेर्धातोः, सिसनि मोग् विभाषया ॥
धातुश्च द्विर्न मोक्षन्ति, मुमुक्षन्ति च सज्जनाः ॥१९॥

## मिमीमादामित् स्वरस्य ॥४॥१॥२०॥

दासंज्ञानां तथा मीमा–मीत्येतेषां स्वरस्य वै ॥
सादौ सनीद् न चैषां द्वि–र्मित्सति मित्सते शतम् ॥२०॥

## रभ–लभ–शक–पत–पदामिः ॥४॥१॥२१॥

सादौ सनि स्वरस्यैषा–मिकारादेश उच्यते ॥
द्वित्वं नैव समाप्त्यर्थं, प्रारिप्सन्ते मनस्विनः ॥२१॥

## राधेर्वधे ॥४॥१॥२२॥

हिंसार्थराधिधातोः स्या–दित् स्वरस्य परे सनि ॥

---

ऋधूट् वृद्धाविति वृद्ध्यर्थोऽयम् ॥१७॥ स्पष्टम् ॥१८॥ अव्याप्यस्येति–मुमुक्षति वत्सम् ॥१९॥ एवं मित्सति, दित्सति, धित्सति इत्यादि ॥२०॥ एवं लिप्सते, शिक्षति, पित्सति, पित्सते । सीत्येव–पिपतिषति ॥२१॥ वध-

सादौ द्वित्वं न धर्मिष्ठाः, प्रतिरित्सन्ति कल्मषम् ॥२२॥

अवित्परोक्षासेट्थवोरेः ४॥१॥२३॥

सेट्थव्यवित्परोक्षायां, हिंसार्थकस्य राधतेः ।
एः स्वरस्य न धातुर्द्वी, रेधतुः प्रतिरेधिथ ॥२३॥

अनादेशादेरेकव्यञ्जनमध्येऽतः ॥४॥१॥२४॥

अनादेशादिधातोरे-रेकव्यञ्जनवर्तिनः ॥
सेट्थव्यवित्परोक्षाया-मतो न द्विश्च नेमिथ ॥२४॥

तॄत्रपफलभजाम् ॥४॥१॥२५॥

सेट्थव्यवित्परोक्षाया-मेषामेत्वं भवेदतः ॥
द्वित्वं न च भजन्त्येते, तेरुस्तेरिथ तेरतुः ॥२५॥

जभ्रमवमत्रसफणस्यमस्वनराजभ्राजभ्रासभ्लासो वा ॥४॥१॥२६॥

सेट्थव्यवित्परोक्षाया-मेत्वं वैषामतो भवेत् ॥
न च द्वित्वं स बभ्राजे, भ्रेजे तौ च रराजतुः ॥२६॥

---

इति-आरिरात्सतिं ॥२२॥ अविदिति-अपरराध । वध इत्येव-आरराधतुः ॥२३॥ एकेत्यादि-असहायव्यञ्जनयोर्मध्यगतस्य, अस्य अत इत्यनेन सम्बन्धः । अनादेशादेरिति-बभणतुः । एकव्यञ्जनमध्य इति-ततक्षिथ । अत इति दिदिवतुः । सेट्थवीत्येव-पापक्थ ॥२४॥ एवं त्रेपे, फेलुः, फेलिथ, भेजुः, भेजिथ ॥२५॥ एवं जेरुः, जजरुः, जेरिथ, जजरिथेत्यादयः ॥२६॥

वा श्रन्थग्रन्थो नलुक् च ॥४॥१॥२७॥

सेट्थन्यवित्परोक्षायां, स्वरस्यैरनयोर्नवा ॥
तद्योगे च नलुग् द्विर्न, श्रेथिथ त्वं जग्रन्थिथ ॥२७॥

दम्भः ॥४॥१॥२८॥

दम्भेरवित्परोक्षाया–मेत्वं स्वरस्य नश्च लुक् ॥
द्वित्वं न देभतुर्देभु–स्तौ ते च स ददम्भ ना ॥२८॥

थे वा ॥४॥१॥२९॥

दम्भेः स्वरस्य थे वैत्वं, नस्य लुग् द्विश्च नो भवेत् ॥
न त्वं देभिथ दुष्टात्मा, ददम्भिथ न मौनभाक् ॥२९॥

न शसददवादिगुणिनः ॥४॥१॥३०॥

शसिदद्योस्तथा वादि–धातूनां गुणिनाञ्च न ॥
एत्वं स्वरस्य जायेत, दददे ववले तथा ॥३०॥

हौ दः ॥४॥१॥३१॥

दासंज्ञकस्य धातोर्हा–वन्तस्यैत्वं प्रजायते ॥
न च द्वि 'देहि देही' ति, धेहि दीनवचो न हि ॥३१॥

देर्दिगिः परोक्षायाम् ॥४॥१॥३२॥

परोक्षायां भवेद् देङो, दिगिर्द्वित्वं च नो भवेत् ॥
दिग्याते दिग्यिरे दिग्ये–ऽवादिग्यातेऽवादिग्यिरे ॥

---

एवं श्रेथुः, शश्रन्थुरित्यादि ॥२७॥ स्पष्टे ॥२८॥२९॥ एवं विशशसुः, विशशसिथ, विशशरुः, विशशरिथ ॥३०॥ सूत्रत्रयमतिरोहितार्थम् ॥३१॥ ॥३२॥३३॥

### ङे पिबः पीप्य् ॥४॥१॥३३॥

ण्यन्तस्य पिबतेर्ङे स्यात्, पीप्यादेशः सनातनः ॥
दित्वं न, मुनयोऽपीप्यन्, पिपासुनमृतं शिशून् ॥३३॥

### अङे हि-हनो हो घः पूर्वात् ॥४॥१॥३४॥

हिहन्नित्येतयोर्धात्वो-रङे द्वित्वे सति ध्रुवम् ॥
पूर्वस्माद् हस्य घत्वं स्या-ज्जघान प्राजिघीषति ॥३४॥

### जेर्गिः सन्-परोक्षयोः ॥४॥१॥३५॥

द्वित्वे परस्य गिर्ज्ञेयो, जयतेः सन्परोक्षयोः ॥
शत्रूञ्जिगीषति क्ष्माभृन्, मुनिश्च विजिगीषते ॥३५॥

### चेः किर्वा ॥४॥१॥३६॥

द्वित्वे परस्य किर्वा स्या-च्चिनोतेः सन्परोक्षयोः ॥
चिक्ये चिच्ये च यो धर्मं, चिकीषति चिचीषति ॥

### पूर्वस्यास्वे स्वरे य्वोरियुव् ॥४॥१॥३७॥

इत उतश्च पूर्वस्य, द्वित्वे स्त इयुवौ स्वरे ॥
अस्वे इयेष चोवोष, प्रारियर्ति तथेषतुः ॥३७॥

### ऋतोऽत् ॥४॥१॥३८॥

स्यात् पूर्वस्य ऋतो द्वित्वे, सत्यकारश्चकार शम् ॥
पृथ्वीं बभार सद्धर्म-स्ततार भवसागरम् ॥३८॥

---

अङ इति-प्राजीहयत् ॥३४॥ स्पष्टे ॥३५॥३६॥ ईषतुरित्यस्व इत्यस्य फलम् । स्वर इति इयाज ॥३७॥ स्पष्टम्॥ ३८॥

## ह्रस्वः ॥४।१।३९॥

स्यात् पूर्वस्य सति द्वित्वे, ह्रस्वः पपौ बभौ दधौ ॥
निनाय च सिसेके च, लुलोके च चकार कम् ॥३९॥

## गहोर्जः ॥४।१।४०॥

स्यात् पूर्वयोर्गहोर्द्वित्वे, सति जत्वं जहास खम् ॥
जगाम विपिनं तप्तु-मजहाद्रुदतो जनान् ॥४०॥

## द्युतेरिः ॥४।१।४१॥

द्युतेर्द्वित्वे सति स्यादिः, पूर्वस्योतः स्वदिद्युतत् ॥
दिद्युते भुवि भूपालो, भानुमान् गगनाङ्गणे ॥४१॥

## द्वितीय-तुर्ययोः पूर्वौ ॥४।१।४२॥

द्वित्वे आद्यतृतीयौ स्तः, पूर्वद्वितीयतुर्ययोः ॥
आसन्नौ क्रमशस्तस्थौ, पफाल दधतुर्दधुः ॥४२॥

## तिर्वा ष्ठिवः ॥४।१।४३॥

ष्ठिवेर्द्वित्वे तिरादेशः पूर्वस्य स्याद्विभाषया ॥
तिष्ठेव ननु टिष्ठेव, तेष्ठीयते जराकुलः ॥४३॥

## व्यञ्जनस्यानादेर्लुक् ॥४।१।४४॥

अनादेर्व्यञ्जनस्य स्याद्, द्वित्वे पूर्वस्य लुग् मुनिः ॥
जगामाष्टापदं तत्र, ननाम जिनमन्दिरम् ॥ ४४ ॥

---

कम्-जलं सुखञ्च । चकार-कृ इत्यस्य ॥३९॥ खम्-नभः ॥४०॥ स्पष्टानि ॥४१॥४२॥४३॥ अनादेरिति-आदेर्माभूत्-पपाच ॥४४॥

## अघोषे शिटः ॥४॥१॥४५॥

द्वित्वे पूर्वस्य तत्सम्ब-न्धिन्यघोषे परे शिटः ॥
लुक् स्यात् चुश्च्योत पस्पर्धे, सस्नौ पप्सौ जनो भुवि ॥

## कङश्चञ् ॥४॥१॥४६॥

द्वित्वे सति चञौ स्यातां, क्रमशः पूर्वयोः कङोः ॥
चकार जुङ्गुवे कामं, चख्यान विश्वविश्रुतः ॥४६॥

## न कवतेर्यङः ॥४॥१॥४७॥

द्वित्वे सति यङन्तस्य, कवतेः पूर्वको न चः ॥
कोकूयते खरश्चोकूयते, पुँस्कोकिलो मधौ ॥४७॥

## आगुणावन्यादेः ॥४॥१॥४८॥

यङन्तस्य सति द्वित्वेऽ-न्यादेः पूर्वस्य चागुणौ ॥
पापच्यते फलं चेची-यते लोलूयते जनः ॥४८॥

## न हाको लुपि ॥४॥१॥४९॥

द्वित्वे सति न हाकः स्या-दात्वं पूर्वस्य यङ्लुपि ॥
प्रजहाति सदा कामान्, मुनिर्जेहीयते धनम् ॥४९॥

## वञ्चस्रंसध्वंसभ्रंशकसपतपदस्कन्दोऽन्तो नीः ॥४॥१॥५०॥

एषां द्वित्वे यङन्तानां, पूर्वस्यान्तो नु नीर्भवेत् ॥
शं पनीपद्यतेऽर्हन्तं, यः पनीपत्यते मुदा ॥५०॥

---

स्पष्टे ॥४५॥४६॥ कवतेरिति–कौति–कुवत्योर्ग्रहणं भूत्, चोकूयते । यङ इति चुकुवे ॥४७॥ अन्यादेरिति–वनीवच्यते, जञ्जप्यते इत्यादि ॥४८॥ स्पष्टम् ॥४९॥ एवं वनीवच्यते इत्यादि ॥५०॥

## मुरतोऽनुनासिकस्य ॥४॥१॥५१॥

मुरन्तः संभवेत् पूर्व–स्यात् परो योऽनुनासिकः ॥
तदन्तस्य यङन्तस्य, द्वित्वे रंरम्यते दिवि ॥५१॥

## जपजभदहदशभञ्जपशः ॥४॥१॥५२॥

एषां यङन्तधातूनां, द्वित्वे पूर्वो मुरन्तिमः ॥
जञ्जप्यते मुनिर्मन्त्रं, नहि दन्दह्यतेऽशुभम् ॥५२॥

## चरफलाम् ॥४॥१॥५३॥

चरफलां यङन्तानां. द्वित्वे पूर्वो मुरन्तिमः ॥
चञ्चूर्यते तथा चञ्चू–-रीति पम्फुल्यते भवेत् ॥५३॥

## ति चोपान्त्यातोऽनोदुः ॥४॥१॥५४॥

चरफलां यङन्तानां, तादौ च प्रत्यये परे ॥
उपान्त्यस्यात उस्तस्य, गुणो न चञ्चुरीत्यघः ॥५४॥

## ऋमतां रीः ॥४॥१॥५५॥

ऋमद्यङन्तधातूनां, द्वित्वे पूर्वस्य जायते ॥
रीरन्तो धनलाभेन, ना नरीनृत्यते मुधा ॥५५॥

## रि–रौ च लुपि ॥४॥१॥५६॥

यङो लुपि ऋमद्धातो–र्द्वित्वे पूर्वस्य रीस्तथा ॥
रिरौ चान्तौ चरीकर्ति, चर्कर्ति चरिकर्ति च ॥५६॥

---

अत इति तेतिम्यते ॥५१॥ एवं जञ्जभ्यते, दन्दश्यते, बम्भज्यते, पम्पश्यते ॥५२॥ बहुवचनं ञिफला–विशरणे इत्यस्य परिग्रहार्थम् ॥५३॥ अत इति चञ्चार्यते । अनोदिति चञ्चूर्ति ॥५४॥ स्पष्टानि ॥५५॥५६॥५७॥

## निजां शित्येत् ॥४॥१॥५७॥

निजिविजिविषां द्वित्वे, शिति पूर्वस्य जायते ॥
एद् नेनेक्ति च वेवेक्ति, वेवेष्टि च निनेज च ॥५७॥

## पृभृमाहाङामिः ॥४॥१॥५८॥

पूर्वस्य पृभृमाहाङा–मिः द्वित्वे शिति जायते ॥
स्वामी नूनं पिपर्त्येव, सेवकानां मनोरथान् ॥५८॥

## सन्यस्य ॥४॥१॥५९॥

धातोर्द्वित्वे हि पूर्वस्याऽ–कारस्येत्वं परे सनि ॥
दर्शनात्तृप्तचित्तोऽपि, भव्योऽर्हन्तं दिदृक्षति ॥५९॥

## ओर्जान्तस्थापवर्गेऽवर्णे ॥४॥१॥६०॥

धातोर्द्वित्वे उदन्तस्य, पूर्वस्यावर्णके परे ॥
जान्तस्थापवर्गे हि, सनोकारः प्रजायते ॥६०॥

## श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥४॥१॥६१॥

एषां सनि परे द्वित्वे, पूर्वोदन्तस्य वेद् भवेत् ॥
अन्तस्थायामवर्णान्ता–यां शिश्रावयिषन्ति ते ॥६१॥

---

एवम् इयर्ति, बिभर्ति, मिमीते, जिहीते, । हाङिति, जहाति । शितीत्येव–पपार ॥५८॥ अस्येति–पापचिषते ॥५९॥ जिजावयिषति, यियविषति, यियावयिषति इत्यादि । जान्तस्थापवर्ग इति–जुहावयिषति । अवर्ण इति बुभूषति ॥६०॥ पक्षे शुश्रावयिषति, एवं सिस्रावयिषति, सुस्रावयिषति इत्यादि ॥६१॥

**स्वपो णावुः ॥४।१।६२॥**

स्वपेर्णौ विहिते द्वित्वे, पूर्वस्योत् स्याद् यथा शिशुम् ॥
सुष्वापयिषति प्रेम्णा, माता नैव तथाऽन्यका ॥६२॥

**असमानलोपे ङे ॥४।१।६३॥**

स्यादसमानलोपे ङे, णौ द्विर्भावे सति ध्रुवम् ॥
सन्वल्लघुनि पूर्वस्याऽ-चीकरत् सुकृतं जिनः ॥६३॥

**लघोर्दीर्घोऽस्वरादेः ॥४।१।६४॥**

द्वित्वेऽसमानलोपे ङे, णावस्वरादिकस्य तु ॥
लघोर्लघुनि पूर्वस्य, दीर्घश्चालीलवद् वनम् ॥६४॥

**स्मृ-दृ-त्वर-प्रथ-म्रद-स्तृ-स्पशेरः ॥४।१।६५॥**

द्वित्वेऽसमानलोपे ङे, णौ पूर्वस्याद् भवेत् सदा ॥
एतेषां सप्तधातूना-मसस्मरत् स्मरं हरः ॥६५॥

**वा वेष्टचेष्टः ॥४।१।६६॥**

स्यादसमानलोपे ङे, णौ द्वित्वेऽदनयोर्नवा ॥
पूर्वस्य न्ववेवेष्टद् द्रु-मांविवेष्टल्लताततीः ॥६६॥

णाविति-सिष्वापकीयिषति । स्वपोणाविति-स्वापं चिकीर्षति-सिष्वापयिषति । स्वपो णौ सति द्वित्वे इति-सोषोपयिषति ॥६२॥ अस्यार्थः—न विद्यते समानस्य लोपो यस्मिन्, तस्मिन् ङपरे णौ द्वित्वे पूर्वस्य लघुनि धात्वक्षरे सनीव कार्यं स्यात् । लघुनीति-अततक्षत् । णाविति-अचकमत । असमानलोप इति-अचकथत् ॥६३॥ लघोरिति-अचिक्वणत् । अस्वरादेरिति-औण्र्णुनवत् ॥६४॥ एवमददरदित्यादि ॥६५॥ एवमचचेष्टत, अचिचेष्टत् ॥६६॥

## ई च गणः ॥४॥१॥६७॥

ङे णौ द्वित्वे गणेर्धातोः, पूर्वस्य स्याददन्तता ॥
ईदन्तता च विज्ञेय-मजगणदजीगणत् ॥६७॥

## अस्यादेराः परोक्षायाम् ॥४॥१॥६८॥

धातोर्द्वित्वे परोक्षायां, पूर्वस्यादेरतो भवेत् ॥
आदाटतुरुभौ लोके, धर्मतो जीवपुद्गलौ ॥६८॥

## अनातो नश्चान्त ऋदाद्यशौसंयोगस्य ॥४॥१॥६९॥

संयोगान्त-ऋदश्नोतेः, स्याद् द्वित्वेऽनात आ ध्रुवम् ॥
कृताकारात्तु नश्चान्तः, परोक्षायां किमानशे? ॥६९॥

## भूस्वपोरदुतौ ॥४॥१॥७०॥

परोक्षायां सति द्वित्वे, पूर्वस्य स्तो यथाक्रमम् ।
भूस्वपोरदुतो जाड्यात्, सुष्वाप च बभूव ढः ॥७०॥

## ज्या-व्ये-व्यधि-व्यचि-व्यथेरिः ॥४॥१॥७१॥

एषां द्वित्वे परोक्षायां, पूर्वस्येत्वं भवेत्तथा ॥
जिज्यौ, विव्याध विव्याथ, वाव्यथ्यते च विव्यथे७१

स्पष्टम् ॥६७॥ अस्येति-ईयुः । आदेरिति-पपाच ॥६८॥ अस्यार्थः — ऋदादेरश्नोतेः संयोगान्तस्य च परोक्षायां द्वित्वे पूर्वस्यादेरात् स्थानादन्यस्यास्य आः स्यात्, कृतातो नोऽन्तश्च । आनृधुः, आनञ्ज । ऋदादीति-आर । अनात इति आञ्छ ॥६९॥ ढः-निर्गुणः, लक्षणया जड इति यावत् ॥७०॥ स्पष्टम् ॥७१॥

## यजादि-वश्-वचः सस्वरान्तस्था य्वृत् ॥४।१।७२॥

वश्वचोश्च यजादीनां, परोक्षाद्वित्व उच्यते ॥
पूर्वस्य सस्वरान्तस्था, य्वृदियाज नरोऽमरान् ॥७२॥

## न वयो य् ॥४।१।७३॥

स्याद् वेगादेशभूतस्य, वयो यो य्वृन्न जातुचित् ॥
ऊयुस्ते तन्तुजालेन, कुविन्दाः पटमुत्तमम् ॥७३॥

## वेरयः ॥४।१।७४॥

वेगोऽयन्तस्य पूर्वस्य, परस्य च न जायते ॥
लक्षणे य्वृत् परोक्षायां, रम्यं ववौ पुरातनम् ॥७४॥

## अविति वा ॥४।१।७५॥

य्वृदयन्तस्य वेवो वा, परोक्षायां न जायते ॥
ववतुरूवतुर्द्धौं तौ, मिथ उत्कर्षकाङ्क्षिणौ ॥७५॥

## ज्यश्च यपि ॥४।१।७६॥

ज्या इत्येतस्य वेगश्च, यपि य्वृन्नैव जायते ॥
उपवाय प्रवायोप--ज्यायप्रज्यायमुख्यकाः ॥७६॥

## व्यः ॥४।१।७७॥

व्येगो यपि परे धातो-र्जायते य्वृन्न जातुचित् ॥
प्रव्याय लौकिकीं लीला-मात्मा मोक्षमियान्न किम् ? ॥७७॥

---

य्वृद्=इ-उ-ऋ-रूपा । एवम् उवाय, उवाश, उवाच ॥७२॥ स्पष्टम् ॥७३॥ अय इति किम् ?-उवाय ॥७४॥ सूत्रद्वयं व्यक्तार्थम् ॥७५॥७६॥ प्रव्याय-संवृत्येत्यर्थः ॥७७॥

## संपरेर्वा ॥४॥१॥७८॥

संपरिभ्यां परं व्येगो, यपि य्वृद्धा न जायते ॥
परिवीय परिव्याय, द्विविधं रूपमिष्यते ॥७८॥

## यजादिवचेः किति ॥४॥१॥७९॥

यजादीनां वचेश्चापि, य्वृद् भवत् किति प्रत्यये ॥
ईयतुरिज्यते इज्यात्, इष्ट इष्ट्वा तथेजिवान् ॥७९॥

## स्वपेर्यङ्ङे च ॥४॥१॥८०॥

स्वपेर्य्वृत् सस्वरान्तस्था, यङि ङे किति च क्रियात् ॥
सर्वथा कृतकार्य्यो हि, सोसुप्यते सुषुप्सति ॥८०॥

## ज्या–व्यधः ङ्किति ॥४॥१॥८१॥

जिनातेर्विध्यतेश्चापि, किति ङिति च प्रत्यये ॥
य्वृद् भवेत् सस्वरान्तस्था, जीनो जेजीयते जनः ॥८१॥

## व्यचोऽनसि ॥४॥१॥८२॥

व्यचेर्य्वृत् सस्वरान्तस्था, किति ङित्यसुविवर्जिते ॥
विचितुं विचिता वेवि–च्यते न स्यादुरुव्यचाः ॥८२॥

## वशेरयङि ॥४॥१॥८३॥

वशेर्य्वृत् सस्वरान्तस्था, यङ्भिन्ने ङ्किति प्रत्यये ॥
उश्यते चेत् सुखं स्थातुं, सत्सङ्गतिर्विधीयताम् ॥८३॥

---

एवं संव्याय, संवीय ॥७८॥ एवम् ऊयुः, ऊचुरित्यादि । क्कितीति किम् ? यक्षीष्ट ॥७९॥ एवम् असूषुपत् ॥८०॥ जीनः—वृद्धः । एवं विध्यात् , विध्यतीत्यादि ॥८१॥ स्पष्टम् ॥८२॥ यङ्वर्जनात्—वावश्यते ॥८३॥

ग्रह--व्रश्च--भ्रस्ज--प्रच्छः ॥४॥१॥८४॥

गृह्णातेर्वृश्चतेर्भ्रस्जेः, पृच्छतेर्य्वृद् भवेत् ङ्किति ॥
गृह्णाति वृश्चति वृक्णो, भृष्टः पृष्टश्च भृज्जति ॥८४॥

व्ये--स्यमोर्यङि ॥४॥१॥८५॥

व्येस्यमोः सस्वरान्तस्था, य्वृद् भवेद् यङि प्रत्यये ॥
सेसिमीति तथा वेवी-यते इत्यादि साध्यताम् ॥८५॥

चायः की ॥४॥१॥८६॥

भवेत् कीत्ययमादेश-श्चायृगित्यस्य यङ्परे ॥
जडश्चेकीयते ज्ञानं, चेत् कुर्यात् पञ्चमीतपः ॥८६॥

द्वित्वे ह्वः ॥४॥१॥८७॥

ह्वयतेः सस्वरान्तस्था, य्वृद् द्वित्वविषये भवेत् ॥
जोहूयते भवेत् सिद्धं, जुहाव च जुहूषति ॥८७॥

णौ ङ--सनि ॥४॥१॥८८॥

ह्वयतेः सस्वरान्तस्था, ङपरे सन्परे च णौ ॥
य्वृत् स्यादजूहवत् कश्चि-ज्जुहावयिषतीच्छया ॥८८॥

श्वेर्वा ॥४॥१॥८९॥

श्वयतेः सस्वरान्तस्था, ङपरे सन्परे च णौ ॥
य्वृत् स्याद्वा धिषणां प्राज्ञो, ह्यशूशवदशिश्वयत् ॥८९॥

---

एवं जगृहुः, पृच्छा इत्यादि ॥८४॥ सूत्रचतुष्कं स्पष्टम् ॥८५॥८६॥
॥८७॥८८॥ एवं शुशावयिषति, शिश्वाययिषति ॥८९॥

### वा परोक्षायङि ॥ ४॥१॥९०॥

श्वयतेः सस्वरान्तस्था, ग्वृत् परोक्षायङोर्नवा ॥
ततः शोशूयते शेश्वी-यते शिश्वाय लक्ष्यताम् ॥९०॥

### प्यायः पी ॥४॥१॥९१॥

प्यायतेः पीः परोक्षायां, यङि च प्रत्यये भवेत् ॥
जनः पेपीयते नूनं, शुभाच्छुभोऽशुभोऽशुभात् ॥९१॥

### क्तयोरनुपसर्गस्य ॥४॥१॥९२॥

क्तक्तवतोर्भवेत् प्यायोऽ-नुपसर्गस्य पीरिति ॥
प्रप्यानो वारिदः पीन-माननं पीनवच्छ्रिये ॥९२॥

### आङोऽन्धूधसोः ॥४॥१॥९३॥

अन्धावूधसि चार्थे स्यात्, प्यायेराङः परस्य पीः ॥
क्तयोः स्यादन्धुरापीन, आपीनमूध उन्नतम् ॥९३॥

### स्फायः स्फी वा ॥४॥१॥९४॥

जायते स्फायतेः स्फीर्वा, क्तयोः प्रत्यययोः परे ॥
स्फीतं च स्फीतवत् स्फातं, स्फातवद्धेनवं पयः ॥९४॥

### प्रसमः स्त्यः स्ती ॥४॥१॥९५॥

प्रसमित्येवसङ्घात-पूर्वस्य स्त्यायतेः क्तयोः ॥
स्तीरादेशः प्रसंस्तीतः, संप्रस्त्यानोऽन्यथा भवेत् ॥९५॥

---

एवं शुशाव ॥९०॥ एवम् आपिप्ये ॥९१॥ स्पष्टम् ॥९२॥ अन्धूधसोरिति किम् ?– आप्यानश्चन्द्रः । आङ एवेति नियमात्–प्राप्यानमूधः ॥९३॥ स्पष्टे ॥९४॥९५॥

## प्रात् तश्च मो वा ॥४।१।९६॥

प्रपूर्वस्त्यायतेः स्तीः स्यात्, क्तयोस्तस्य च मो नवा ॥
प्रस्तीमश्चापि प्रस्तीतो, द्वे रूपे तद्विधीयताम् ॥९६॥

## श्यः शीर्द्रवमूर्ति-स्पर्शे नश्चास्पर्शे ॥४।१।९७॥

द्रवमूर्तौ तथा स्पर्शे, श्यायतेः शीः क्तयोर्भवेत् ॥
न श्चास्पर्शे घृतं शीनं, शीताच्छीतः समीरणः ॥९७॥

## प्रतेः ॥४।१।९८॥

श्यायतेः प्रतिपूर्वस्य, जायते शीः क्तयोस्ततः ॥
तकारस्य च नत्वं स्याद्, प्रतीशीनो हि पीनसः ॥९८॥

## वाऽभ्यवाभ्याम् ॥४।१।९९॥

श्यायतेरभ्यवाभ्यां वा, शीरादेशः क्तयोर्भवेत् ॥
नश्चास्पर्शे तकारस्या-भिशीनं घृतमुच्यते ॥९९॥

## श्रः शृतं हविःक्षीरे ॥४।१।१००॥

क्षीरे हविषि चार्थे वै, क्ते श्रातेः श्रायतेश्च शृः ॥
निपात्यते शृतं क्षीरं, स्वयमेव शृतं हविः ॥१००॥

## श्रपेः प्रयोक्त्रैक्ये ॥४।१।१०१॥

ण्यन्तस्य श्रायतेः श्रातेः, प्रयोक्त्रैक्ये निपात्यते ॥

---

एवं प्रस्तीतवान्, प्रस्तीमवान् ॥९६॥ एवं शीनवद् । द्रवमूर्तिस्पर्शे इति किम्? संश्यानो वृश्चिकः, शीतेन सङ्कुचित इत्यर्थः ॥९७॥ एवं प्रतिशीनवान् ॥९८॥ एवम् अभिशीनवान्, अभिश्यानः अभिश्यानवान्। एवम् अवशीनमित्यादि ॥९९॥ हविःक्षीर इति किम्?-श्राणा यवागूः ॥१००॥ हविः-

शृहविःक्षीरयोः क्ते तत्, शृतं क्षीरं हविस्तया ॥१०१॥

**य्वृत् सकृत् ॥४॥१॥१०२॥**

सकृदेव भवेद् य्वृद् य—दन्तस्थास्थानभाविनी ॥
विरहिणः करैः स्वीयै—र्विध्यतीति विधुर्मतः ॥१०२॥

**दीर्घमवोऽन्त्यम् ॥४॥१॥१०३॥**

य्वृदन्त्यं संभवेद्दीर्घं, वेगश्चन्न भवेत्तथा ॥
अद्भुतां लभते स्फूर्त्तिं, जीनोऽपि जिनवन्दनात् ॥१०३॥

**स्वरहनगमोः सनि धुटि ॥४॥१॥१०४॥**

धुडादौ सनि दीर्घः स्यात्, स्वरान्तस्य च हन्गमोः ॥
यः सञ्जिगांसते दुर्गं, चिचीषति जिघांसति ॥१०४॥

**तनो वा ॥४॥१॥१०५॥**

तनेः स्वरस्य दीर्घो वा, धुडादौ सनि प्रत्यये ॥
सन् भूयाश्चेद्यशः शुभ्रं, नितांससि तितंससि ॥१०५॥

**क्रमः क्त्वि वा ॥४॥१॥१०६॥**

क्रमेः स्वरस्य दीर्घत्वं, धुडादौ क्त्वि विभाषया ॥
क्रान्त्वा क्रन्त्वा क्रमित्वा वा, लब्धा स्थानान्तरं मुनिः ॥१०६॥

---

क्षीर इति श्रपिता यवागूः । प्रयोक्त्रैक्य इति श्रपितं हविश्चैत्रेण मैत्रेण ॥१०१॥ स्पष्टम् ॥१०२॥ जीनः—जीर्णः, वृद्ध इति यावत् । अव इति—उतः । अन्त्य-मिति—सुप्तः ॥१०३॥ धुटीति—यियविषति ॥१०४॥ धुटीत्येव—तितनिषति ॥१०५॥ स्पष्टम् ॥१०६॥

## अहन्पञ्चमस्य क्विक्ङिति ॥४॥१॥१०७॥

हन्वर्जपञ्चमान्तस्य, धातोः स्वरस्य दीर्घता ॥
क्वौ प्रत्यये धुडादौ च, क्ङिति शान्तः प्रतान् प्रशान् ॥१०७॥

## अनुनासिके च च्छ्वः शूट् ॥४॥१॥१०८॥

धातोश्च्छ्वोः स्तः क्रमात् शूटौ, धुडादौ प्रत्यये तथा ॥
क्वावनुनासिके प्रश्नं, पृष्टो नाऽऽलोकते नभः ॥१०८॥

## मव्यविश्रिविज्वरित्वरेरुपान्त्येन ॥४॥१॥१०९॥

मव्यादीनां वकारस्यो–पान्त्येन धुटि प्रत्यये ॥
क्वौ चोट् भवेज्जनो जूर्मा, तूर्मा नैव भवेत् क्वचित् ॥१०९॥

## राल्लुक् ॥४॥१॥११०॥

रात् परयोर्भवेच्छ्वोर्लुक्, धुडादौ प्रत्यये तथा ॥
क्वावनुनासिके मोर्मा, होर्मा मोमोर्ति तूर्णवान् ॥११०॥

## क्तेऽनिटश्चजोः कगौ घिति ॥४॥१॥१११॥

जायते क्तेऽनिटो धातो–श्चजोर्घिति क्रमात् कगौ ॥
पाकः सेकः तथा रागो, भोग्यमर्चसमाजकः ॥१११॥

---

पञ्चमस्येति किम् ? पक्त्वा । अहन्निति किम् ? वृत्रहणि । धुटीत्येव यम्यते ॥१०७॥ एवं शब्दप्राशौ, स्योमा, अक्षद्यूः, द्यूतः इत्यादि ॥१०८॥ एवं मोमा, मूः मूतिः, ओमा, ओम् , ऊः, ऊतिः, श्रोमा, श्रूः, श्रूतिः, जूः, जूर्तिः; तूः, तूर्णः इत्यादि ॥१०९॥ एवं मूः, मूर्तिः, हूः, हुरौ, हुरः, तूः, तूर्णः, इत्यादि ॥११०॥ क्तोऽनिट इति सङ्कोचः, कूजः । घितीति किम् ? पचनम् , त्यजनम् ॥१११॥

## न्यङ्क्वादीनां च ॥४।१।११२॥

न्यङ्क्वादयश्च मेघाद्या, उद्गाद्याश्च निपातिताः
कत्वे घत्वे च गत्वे स्यु-, र्न्यङ्कुमेघसमुद्गकाः ॥११२॥

## न वञ्चेर्गतौ ॥४।१।११३॥

कत्वं न जायते धातो-र्गत्यर्थकस्य वञ्चतेः ॥
वङ्कं काष्ठं करे कृत्वा, वञ्चं वञ्चन्ति वञ्चकाः ॥११३॥

## यजेर्यज्ञाङ्गे ॥४।१।११४॥

जायते जस्य गत्वं नो, यजेर्यज्ञाङ्गवर्तिनः ॥
यदि पञ्च प्रयाजा स्युः, प्रयागे पञ्चता नहि ॥११४॥

## घ्यण्यावश्यके ॥४।११५॥

धातोश्चजोः कगौ नवाऽऽ-वश्यकोपाधिके घ्यणि ॥
अवश्यपाच्यमौपध्य-मिच्छया पाक्यमौषधम् ॥११५॥

## निप्राद् युजः शक्ये ॥४।१।११६॥

आभ्यां घ्यणि युजः शक्ये, गम्ये गत्वं न जायते ॥
नियोज्या वा प्रयोज्या वा, नियोग्या हितकर्मणि ॥११६॥

---

एवं तक्रवक्रशुक्राद्याः कत्वे, सर्गव्यतिषङ्गमद्गुभृगुयोगाद्या गत्वे, ओघनिदाघार्घाद्या घत्वे साधवः । एवमविहितलक्षणानि कत्वगत्वघत्वानि द्रष्टव्यानि ॥११२॥ वञ्चं वञ्च-तीति–' पश्यैते व्याघ्रवार्कैण्य–सङ्कुले वित्तवत्तमाः । रात्रावपि महारण्यं, वञ्चं वञ्चन्ति वाणिजाः ॥ ' इति श्लोकमुद्बोधयति ॥११३॥ स्पष्टम् ॥११४॥ एवमवश्यरेच्यमित्यादि ॥११५॥ नियोग्याः–सेवकाः प्रत्युदाहरणमिदम् ॥११६॥

## भुजो भक्ष्ये ॥४॥१॥११७॥

भुनक्तेर्भक्ष्यरूपेऽर्थे, घ्यणि गत्वं न जायते ॥
भुक्त्वा भोज्यं सदाभोगी, भुङ्क्ते भोग्यं गृहादिकम् ॥११७

## त्यज-यज-प्रवचः ॥४॥१॥११८॥

एषां चजोः कगौ नैव, भवेतां घ्यणि प्रत्यये ॥
त्याज्यप्रवाच्ययाज्यानां, सिद्धये स्मर लक्षणम् ॥११८॥

## वचोऽशब्दनाम्नि ॥४॥१॥११९॥

वचेरशब्दसंज्ञायां, घ्यणि कत्वं न जायते ॥
वाच्यं वाक्यं तथा येन, वचनीयं न जायते ॥११९॥

## भुज-न्युब्जं पाणिरोगे ॥४॥१॥१२०॥

घञन्तस्य भुजेर्न्युब्जे—र्भुजो न्युब्जो निपात्यते ॥
पाणौ रोगे यथासङ्ख्यं, न्युब्जो रोगो भुजः करः ॥१२०॥

## वीरुन्-न्यग्रोधौ ॥४॥१२१॥

रोहतेर्वेर्न्यचश्चापि, क्विपि चाचि यथाक्रमम् ॥
धान्तावेतौ निपात्येते, न्यग्रोधो भाति वीरुधा ॥१२१॥

॥ इति प्रथमः पादः ॥

---

भोज्यमन्नादि ॥११७॥ लक्षणम्—सिद्धहेमचन्द्रशब्दानुशासनचतुर्थाध्याय-प्रथमपादसत्कमष्टादशाधिकं शतसङ्ख्यं सूत्रमिति ॥११८॥ वचनीयं—निन्द्यम् ॥११९॥ पाणिरोगभिन्नेऽर्थे तु भोगः, न्युद्ग इति ॥१२०॥ केचित्त्ववरोधमप्यत्रेच्छन्ति ॥१२१॥

॥ इति प्रथमः पादः समाप्तः ॥

## आत् सन्ध्यक्षरस्य ॥४।२।१॥

धातोः सन्ध्यक्षरान्तस्य, स्यादात् धास्यति दास्यति ॥
ध्यास्यति ग्लास्यति म्लाता, ध्याता दाता कास्यति ॥१॥

## न शिति ॥४।२।२॥

धातोः सन्ध्यक्षरान्तस्य, स्यादान्न शिति प्रत्यये ॥
ग्लायति म्लायति ज्ञान-मन्तराऽसत्पथं श्रितः ॥२॥

## व्यस्थव्णवि ॥४।२।३॥

व्ययतेर्जायते नैवा-त्वं थवि णवि प्रत्यये ॥
संविव्ययिथ रूपं सत्, संविव्याय तथैव सत् ॥३॥

## स्फुर-स्फुलोर्घञि ॥४।२।४॥

स्फुरतेः स्फुलतेरात्वं, सन्ध्यक्षरस्य घञ्परे ॥
तथ्यतत्त्वस्य विस्फारो, विस्फालः क्रियते बुधैः ॥४॥

## वाऽपगुरो णमि ॥४।२।५॥

अपपूर्वगुरेर्वात्वं, सन्ध्यक्षरस्य णम्परे ॥
अपगारं द्विरुक्तं स-दपगोरञ्च सूत्रतः ॥५॥

## दीङः सनि वा ॥४।२।६॥

दीङो धातोर्भवेदात्वं, विकल्पेन परे सनि ॥
ततो रूपद्वयं सिद्धं, दिदासते दिदीषते ॥६॥

---

धातोरित्येव गोभ्याम् ॥१॥ सूत्रत्रयं व्यक्तार्थम् ॥२॥३॥४॥ आभीक्ष्ण्ये रूपं द्वित्वञ्च ॥५॥ स्पष्टम् ॥६॥

## यबक्ङिति ॥४॥२॥७॥

आकारोऽन्तो भवेद्दीङो, यप्यक्ङिति च प्रत्यये ॥
उपदायोपदाता चा-पदातुमुपदीयते ॥७॥

## मिग्मीगोऽखलचलि ॥४॥२॥८॥

भवेद् मिनोतिमीनात्योः, खलचल्वर्जितेऽक्ङिति ॥
यपि चादन्त आदेशः, प्रमायेशं सुखी भव ॥८॥

## लीङ्लिनोर्वा ॥४॥२॥९॥

लीयतेश्च लिनातेश्च, खलचल्वर्जितेऽक्ङिति ॥
यपि चादन्त आदेशो, विलास्यते विलेष्यते ॥९॥

## णौ क्रीजीङः ॥४॥२॥१०॥

क्रीजीङां णौ भवेदात्वं, क्रापयेज्जापयेत्तथा ॥
अध्यापयेदिति श्रुत्वा, क्रियां कुरु यथारुचि ॥१०॥

## सिध्यतेरज्ञाने ॥४॥२॥११॥

स्वरस्य सिध्यतेरात्व-मज्ञाने णौ विधीयते ॥
मन्त्रं साधयति प्राज्ञः, सेधयेत्तापसं तपः ॥११॥

## चिस्फुरोर्नवा ॥४॥२॥१२॥

चिनोतेः स्फुरतेश्चात्वं णौ स्वरस्य भवेन्नवा ॥
स्फारयेत् स्फोरयेच्चापि, चापयेच्चापि चाययेत् ॥१२॥

---

सानुबन्धनिर्देशाद् यङ्लुपि न भवति उपदेदेति ॥७॥ एवं निमा-य्येत्यादि । खलचल्वर्जनात् ईषन्निमय प्रभृतिः ॥८॥ एवं विलाय, विलीये-त्यादि । अखलचलीति-ईषद्विलय इत्यादि ॥९॥ सूत्रपञ्चकं स्पष्टभावम् ॥१०॥११॥१२॥१३॥१४॥

वियः प्रजने ॥४॥२॥१३॥

गर्भाधानार्थकस्य स्या-द्वियो णावाद्विभाषया ॥
प्रवापयेत् पुरो वातः, प्रायशो गाः प्रवाययेत् ॥१३॥

रुहः पः ॥४॥२॥१४॥

रुहः स्याद् णौ परे पो वा, रसालं रोपयेत् पथि ॥
वटं वा रोहयेद् कामं, नवै कण्टकिनं कुटम् ॥१४॥

लियो नोऽन्तः स्नेहद्रवे ॥४॥२॥१५॥

लियः स्नेहद्रवे गम्ये, णौ नोऽन्तो वा भवेद् घृतम् ॥
विलीनयति तापेन. विलाययति माक्षिकम् ॥१५॥

लो लः ॥४॥२॥१६॥

लोऽन्तः स्नेहद्रवे गम्ये, णौ लारूपस्य वा भवेत् ॥
तापो विलालयत्याज्यं, विलापयति वा मधु ॥१६॥

पातेः ॥४॥२॥१७॥

पातेर्णौ संभवेल्लोऽन्तः, सद्धर्मं पालयेन् सदा ॥
धर्मो हि पालितो लोके, दुर्गतः पाति दुर्गतम् ॥१७॥

धूग्--प्रीगोर्नः ॥४॥२॥१८॥

धूग्-प्रीगोर्णौ भवेन्नोऽन्तो, धूत्रयं प्रीद्वयं मतम् ॥
धूनयेत् प्रीणयेत् काम-मद्रुधुनःपिप्रिणात् ॥१८॥

---

स्नेहद्रव इति किम्? अया विलाययति ॥१५॥ स्नेहद्रव इत्येव जटा-भिरालापयते ॥१६॥ दुर्गतः-दुःखत इति ॥१७॥ धूगट्, धूगश्, धूगूण् इति धूत्रयम्। प्रीश्, प्रीगूण् इति प्रीद्वयम् ॥१८॥

## वो विधूनने जः ॥४॥२॥१९॥

वाधातोः संभवेज्जोऽन्तो, णावर्थे हि विधूनने ।
प्रवाजयति पुष्पाणि, केशानानावापयत्यसौ ॥१९॥

## पा-शा-छा-सा-वे-व्या-ह्वो यः ॥४॥२॥२०॥

सप्तानामपि धातूना,-मेषां योऽन्तो हि णौ परे ॥
वत्सं पाययति क्षीर-मृणं शाययतीश्वरम् ॥२०॥

## अर्ति-री-व्ली-ह्री-क्नूयि-क्ष्माय्यातां पुः ॥४॥२॥२१॥

एषाञ्चादन्तधातूनां, पुरन्तो णौ परे भवेत् ॥
अर्पयेद्रेपयेद् व्लेप-यति सत्यापयत्यमुम् ॥२१॥

## स्फाय् स्फाव् ॥४॥२॥२२॥

स्फायतेर्णौ परे स्फाव् स्या-दन्तादेश इतो नहि ॥
स्फावयन्ति सदा धर्मं, विचरन्तो मुनीश्वराः ॥२२॥

## शदिरगतौ शात् ॥४॥२॥२३॥

शीयतेरगतावर्थे, णौ परे शात् प्रजायते ॥
शातयेत् पवनः पुष्पं, गोपालो गाश्च शादयेत् ॥२३॥

## घटादेर्ह्रस्वो दीर्घस्तु वा ञिणम्परे ॥४॥२॥२४॥

णौ परे स्याद् घटादीनां, ह्रस्वो ञिणम्परे तु णौ ॥
दीर्घो वा घटयत्येव, घाटं घाटं घटं घटम् ॥२४॥

---

सप्तम् ॥१९॥ एवमवच्छाययति, अवसाययति, वाययति, व्याययति ह्वाययति ॥२०॥ एवं ह्रेपयति, क्नोपयति, क्ष्मापयति, दापयति ॥२१॥ अन्तादेशाधिकारनिवृत्त्यर्थममेदनिर्देशः । स्फावयन्ति-वर्धयन्तीत्यर्थः ॥२२॥ शादयेद्-गमयेदित्यर्थः ॥२३॥ एवमघाटि, अघटि ॥२४॥

## कगे--वनू--जनै--जॄष्--क्नसु्--रञ्जः ॥४॥२॥२५॥

षण्णामेषां भवेद् ह्रस्वो, णौ परे णौ ञिणम्परे ॥
दीर्घो वाऽजनि च्वाजानि, जानं जानं जनं जनम् ॥२५॥

## अमोऽकम्यमिचमः ॥४॥२॥२६॥

कम्यमिचमिवर्जस्या--मन्तस्य णौ परे भवेत् ॥
ह्रस्वो ञिणम्परे णौ वा, दीर्घश्चारम्यरामि तैः ॥२६॥

## पर्यपात् स्खदः ॥४॥२॥२७॥

पर्यपाभ्यां परस्यैव, स्खदेर्णौ ह्रस्वता भवेत् ॥
ञिणम्परे तु वा दीर्घोऽपस्खदयत्यपास्खदि ॥२७॥

## शमोऽदर्शने ॥४॥२॥२८॥

शमेरदर्शनेऽर्थे णौ, परे ह्रस्वो ञिणम्परे ॥
वा दीर्घः शमयेद्रोगं, घृतं वा भ्रमणं मधौ ॥२८॥

## यमोऽपरिवेषणे णिचि च ॥४॥२॥२९॥

णिच्यणिचि च णौ ह्रस्वो, यमेरपरिवेषणे ॥
ञिणम्परे तु णौ दीर्घो, वा स्याद्यम्ययामि च ॥२९॥

## मारणतोषणनिशाने ज्ञश्च ॥४॥२॥३०॥

एतेष्वर्थेषु जानाते--र्णिच्यणिचि च णौ भवेत् ॥

---

एवं जनयति, कगादीनामप्येवमेव ॥२५॥ कम्यादिवर्जनात्, कामयते, अकामि, कामं काममित्यादि ॥२६॥ एवमपास्खादि, अपास्खादमपास्खादम्, अपस्खदमपस्खदम् । परिपरतोऽप्येवमेव । पर्यपादितिकिम् ? प्रस्खादयति॥२७॥ एवमशामि, अशमि, शामं शामम्, शमंशमम् । अदर्शन इति निशामयति रूपम् ॥२८॥ अपरिवेषण इति यामयत्यतिथिम् ॥२९॥ स्पष्टम् ॥३०॥

ह्रस्वो ञिणम्परे दीर्घो, वा विज्ञपयनीश्वरम् ॥३०॥

## चहणः शाठ्ये ॥४॥२॥३१॥

चौरादिकचहेर्धातोः, शाठ्येऽर्थे णिचि णौ परे ॥
ह्रस्वो ञिणम्परे वा स्या-द्दीर्घश्चहयति द्विपः ॥३१॥

## ज्वल-ह्वल-ह्मल-ग्ला-स्ना-वनू-वम-नमोऽनुपसर्गस्य वा ॥४॥२॥३२॥

एषामनुपसर्गाणां, ह्रस्वः स्याण्णौ परे नवा ॥
नमयेन्नामयेद् धीर, आत्मानं न परं जनम् ॥३२॥

## छदेरिस्मन्त्रट्क्वौ ॥४॥२॥३३॥

छदेर्णौ जायते ह्रस्व, इस्-मन्-त्रट्-क्विप्परे ततः ॥
छद्मच्छत्रं छदिश्च्छत्री, धामच्छच्छात्र ? साधय ॥३३॥

## एकोपसर्गस्य च घे ॥४॥२॥३४॥

छदेरेकोप सर्गस्या-नुपसर्गस्य ह्रस्वता ॥
घे णौ परिच्छदः सस-च्छदो दन्तच्छदस्तथा ॥३४॥

## उपान्त्यस्यासमानलोपिशास्वृदितो ङे ॥४॥२॥३५॥

समानलोपिशास्वृक्र-दिद्वर्जितस्य ह्रस्वता ॥
स्यादुपान्त्यस्य धातोर्णौ, ङपरेऽपीपचत् फलम् ॥३५॥

---

शाठ्य इति-अचहि, अत्र शाठ्याभावाद् दीर्घाभावः ॥३१॥ एवं ज्वलयति, ज्वालयतीत्यादि । अनुपसर्गस्येति किम् ? प्रज्वलयति, प्रस्नापयतीत्यादि ॥३२॥ स्पष्टम् ॥३३॥ एकोपसर्गस्य चेति किम् ? समुपच्छादः ॥३४॥ असमानलोपिशास्वृदित इति किम् ? अत्यरराजत् , अशशासत् , मा भवान् ओणिणत् ॥३५॥

भ्राज–भास–भाष–दीप–पीड–जीव–मील–कण–रण–वण–भण–श्रण–ह्वे–हेठ–लुट–लुप–लपां नवा

॥४॥२॥३६॥

एषां सप्तदशानां स्या–दुपान्त्यस्य विभाषया ॥
ह्रस्वो णौ ङपरे जीव–मजिजीवदजीजिवत् ॥३६॥

ऋदृवर्णस्य ॥४॥२॥३७॥

धातोर्भवेदुपान्त्यस्य, ऋतो णौ ङपरे नवा ॥
ऋकारोऽदीदृशद् धर्म–मददर्शञ्जिना भुवि ॥३७॥

जिघ्रतेरिः ॥४॥२॥३८॥

स्याज्जिघ्रतेरुपान्त्यस्य, ङपरे णौ विभाषया ॥
इकारोऽजिघ्रिपत् कान्ता, कान्तेनाजिघ्रपत् सुमम् ॥३८॥

तिष्ठतेः ॥४॥२॥३९॥

इस्तिष्ठतेरुपान्त्यस्य, ङपरे णावतिष्ठिपत् ॥
पृथग्योगो हि नित्यार्थ–स्तिवृनिर्देशादतास्थपत् ॥३९॥

ऊद् दुषो णौ ॥४॥२॥४०॥

ऊत् स्याद् दुषेरुपान्त्यस्य, णौ परे सूत्रसूत्रितः ॥

---

एवमबिभ्रजत्, अबभ्राजदित्यादि ॥३६॥ वचनसामर्थ्यादर्दकीत्यादिशौ बाध्येते । उपान्त्यस्येत्येव अचीकरत् ॥३७॥ तिवृनिर्देशाद् यङ्लुपनिवृत्तिरिति अजाघ्रपत् । तिपा शपाऽनुबन्धेन, निर्दिष्टं यद् गणेन च ॥ यत्रैकाज्ग्रहणं चैव, पञ्चैतानि न यङ्लुपि ॥३८॥ स्पष्टम् ॥३९॥ णाविति किम् ?

दुष्यन्तं यः प्रयुङ्क्तेऽसौ, तं दूषयति सर्वथा ॥४०॥

## चित्ते वा ॥४॥२॥४१॥

उपान्त्यस्य दुषेश्चित्त-कर्तृकस्य विभाषया ॥
ऊद् भवेण्णौ मनो दूष-यति दोषयति स्मरः ॥४१॥

## गोहः स्वरे ॥४॥२॥४२॥

गुहेः कृतगुणस्य स्या-दुदुपान्त्यस्य प्रत्यये ॥
स्वरादौ दूषणं साधो-र्निगूहति निगूहकः ॥४२॥

## भुवो वः परोक्षाद्यतन्योः ॥४॥२॥४३॥

अद्यतन्यां परोक्षायां, वकारान्तभुवो भवेत् ॥
ऊदुपान्त्यस्य भूपोऽभूद् बभूवाद्यो नृपाङ्गनः ॥४३॥

## गम-हन-जन-खन-घसः स्वरेऽनङि क्ङिति लुक् ॥४॥२॥४४॥

गमादीनामुपान्त्यस्य, स्वरादावनङि क्ङिति ॥
लुग् जग्मुर्जग्मतुर्जज्ञे, जज्ञाते जज्ञिरेऽगमत् ॥४४॥

## नो व्यञ्जनस्यानुदितः ॥४॥२॥४५॥

धातोर्हि व्यञ्जनान्तस्या-नुदितो नस्य लुक् क्ङिति ॥
उपान्त्यस्य भवेत् स्रस्तः, स्रस्यते स्रस्तवाँस्तथा ॥४५॥

---

दोषो वर्तते ॥४०॥ चित्तग्रहणेन प्रज्ञाया अपि ग्रहणम् ॥४१॥ स्वर इति किम् ? निगोढा, निगोढुम् । गोह इति निजुगुहुः ॥४२॥ परोक्षाद्यतन्योरिति किम् ? भविष्यति । श्रीऋषभो जिनः ॥४३॥ एवं जघ्नुः, चख्नुः, जक्षुः । स्वर इति-गम्यते । क्ङिति परे इति गमनम् ॥४४॥ व्यञ्जनस्येति किम् ? नीयते । अनुदित इति किम् नानन्द्यते ॥४५॥

अञ्चोऽनर्चायाम् ॥४।२।४६॥

अनर्चायां स्थितस्याञ्चा-र्लुगुपान्त्यस्य नो भवेत् ॥
उदक्तमुदकं कूपा-दञ्चिता गुरवो जनैः ॥४६॥

लङ्गिकम्प्योरुपतापाङ्गविकृत्योः ॥४।२।४७॥

लङ्गिकम्प्योरुपान्त्यस्यो-पतापाङ्गविकारयोः ॥
नस्य क्ङिति क्रमाल्लुक् स्याद्, विलगितो विलङ्गितः ॥४७॥

भञ्जेर्णौ वा ॥४।२।४८॥

भञ्जेरुपान्त्यनस्य स्याद्, णौ परे लुग् विभाषया ॥
अभञ्ज्यभाजि वीरेण, मोहस्य कटकं महत् ॥४८॥

दंश-सञ्जः शवि ॥४।२।४९॥

दंश-सञ्जोरुपान्त्यस्य, नस्य लुक् शवि प्रत्यये ॥
दशति सजतीत्येवं, ब्रूयाल्लक्षणलक्षितम् ॥४९॥

अकट्घिनोश्च रञ्जेः ॥४।२।५०॥

रञ्जेरकटि चोपान्त्य-नो लुग् घिनणि शव्परे ॥
रजति रजको रागी, साधयेल्लक्षणादतः ॥५०॥

णौ मृगरमणे ॥४।२।५१॥

मृगाणां रमणे नो लुग्, णावुपान्त्यस्य रञ्जतेः ॥
रजयति मृगं व्याधो, रञ्जयेद्रजकोऽम्बरम् ॥५१॥

---

स्पष्टम् ॥४६॥ एवं विकपितः । विलङ्गितः, विकम्पितश्च प्रत्युदाहरणतयाऽवसेयौ ॥४७॥ सूत्रपञ्चकं व्यक्तार्थम् ॥४८॥४९॥५०॥५१॥५२॥

## घञि भावकरणे ॥४॥२॥५२॥

रञ्जेरुपान्त्यनो भाव-करणार्थे हि लुग् घञि ॥
वीतरागैर्हतो रागो, धर्मरङ्गं चिकीर्षुभिः ॥५२॥

## स्यदो जवे ॥४॥२॥५३॥

नलोपो वृद्ध्यभावश्च, स्यन्दोर्घञि निपात्यते ॥
वेगेऽर्थे गोस्यदस्तैल-स्यन्दो हस्तिस्यदः श्रुतः ॥५३॥

## दशनावोदैधौद्मप्रश्रथहिमश्रथम् ॥४॥२॥५४॥

नलुगादौ कृते षट् स्यु-रेते शब्दा निपातिताः ॥
दशनं प्रश्रथोऽवोद, एध ओद्मो हिमश्रथः ॥५४॥

## यमि-रमि-नमि-गमि-हनि-मनि-वनति-तनादेर्धुटि क्ङिति ॥४॥२॥५५॥

यम्यादिसप्तधातूनां, तनादीनाञ्च लुक् क्ङिति ॥
धुडादौ स्याद् यतो रत्वा, गतो हतस्ततः क्षतः ॥५५॥

## यपि ॥४॥२॥५६॥

यम्यादीनां यपि स्याल्लुक्, प्रहत्य च प्रमत्य च ॥
प्रवत्य च प्रतत्यस्यात्, प्रसत्यप्रभृतिर्वरम् ॥५६॥

---

तैलस्यन्द इति जवार्थाभावात् ॥५३॥ स्पष्टम् ॥५४॥ एवं नतिः, मतः, वतिः । धुटीति वम्यते ॥ क्ङितीति किम् ? यन्ता ॥५५॥ स्पष्टम् ॥५६॥

## वामः ॥४॥२॥५७॥

यम्यादिमान्तधातूनां, यपि वा लुग् भवेत्ततः ॥
प्रणत्य च प्रणम्याहूँ, आरम्यते सदाऽऽर्हतैः ॥५७॥

## गमां क्वौ ॥४॥२॥५८॥

यथादर्शनमेतेषां; गमादीनां भवेत् क्ङिति ॥
क्वौ लुक् ततो जनङ्गच, परीतच्च सुमत् सुवत् ॥५८॥

## न तिकि दीर्घश्च ॥४॥२॥५९॥

भवेतां नैव लुग्-दीर्घा-वेतेषां तिकि प्रत्यये ॥
यन्ती रन्तिस्तथा नन्ति-र्गन्तिर्हन्तिश्च साध्यताम् ॥५९॥

## आः खनि-सनि-जनः ॥४॥२॥६०॥

खनादीनां भवेदात्वं, धुडादौ क्ङिति प्रत्यये ॥
खातः सातश्च जातश्च, जातिः खातिश्च खातवान् ॥६०॥

## सनि ॥४॥२॥६१॥

आत्वमेषां खनादीनां, धुडादौ सनि जायते ॥
सिषासति सिषासेच्च. सिसनिषति बुध्यताम् ॥६१॥

---

एवं प्रयत्य, प्रयम्येत्यादि ॥५७॥ स्पष्टम् ॥५८॥ एवं मन्तिः, वन्तिः, तन्तिरित्यादि ॥५९॥ क्ङितीत्येव चङ्खन्ति । धुटीत्येव जनित्वा ॥६०॥ सिसनिषति धुटीत्यस्य फलम् ॥६१॥

## ये नवा ॥४॥२॥६२॥

आत्वमेषां खनादीनां, स्याद्ये क्ङिति विभाषया ॥
खायते खन्यते चाखा-यते प्रजाय जायते ॥६२॥

## तनः क्ये ॥४॥२॥६३॥

तनः क्ये वा भवेदात्वं, तायते तन्यतेऽथवा ॥
तन्तन्यतेमुखं साध-यितुं क्य इति सूत्रितम् ॥६३॥

## तौ सनस्तिकि ॥४॥२॥६४॥

सनस्तिकि लुगात्तौ वा, भवेतां लक्षणादतः ॥
सन्तिः सातिः सती रूप-त्रयमेवं निरूप्यते ॥६४॥

## वन्याङ् पञ्चमस्य ॥४॥२॥६५॥

धातोः पञ्चमवर्णस्य, वन्याकारो विधीयते ॥
अग्रेगावा दधिक्रावाऽ-बाब्रादयः सलक्षणाः ॥६५॥

## अपाच्चायश्चिः क्तौ ॥४॥२॥६६॥

अपपूर्वस्य चायश्चिः, क्तिप्रत्यये परे भवेत् ॥
अपचितिरतः सूत्रात्, साध्यते चेन्न बाध्यते ॥६६॥

## ह्रादो ह्रद् क्तयोश्च ॥४॥२॥६७॥

ह्रादः क्तक्तवतोः क्तौ च, ह्रदादेशो विधीयते ॥

---

क्ङितीत्येव सान्यम् जन्यम् ॥६२॥ सूत्रचतुष्कं स्पष्टम् ॥६३॥६४॥६५॥
॥६६॥ क्तयोश्चेति किम् ? ह्रादित्वा ॥६७॥

ह्लन्नश्च ह्लन्नवान् ह्लत्ति-रित्यादि सूत्रसम्मतम् ॥६७॥

ऋ-ल्वादेरेषां तो नोऽप्रः ॥४॥२॥६८॥

ऋदन्ताल्ल्वादितस्तो नः, पृवर्जात् क्तेः क्तयोर्भवेत् ॥
लूनिश्च लूनवान् लून-स्तीर्णिस्तीर्णश्च तीर्णवान् ॥६८॥

रदादमूर्च्छमदः क्तयोर्दस्य च ॥४॥२॥६९॥

धातू मूर्च्छिमदी त्यक्त्वा, रान्ताद् दान्तात् क्तयोर्भवेत् ॥
तो नो धातोश्च दो नत्वं, घटः पूर्णश्च पूर्णवान् ॥६९॥

सूयत्याद्योदितः ॥४॥२॥७०॥

सूयत्यादिनवभ्यः स्या-दोदिद्भ्यश्च परं क्तयोः ॥
तस्य नः सूनवान् सूनो, दूनवान् दून इत्यपि ॥७०॥

व्यञ्जनान्तस्थाऽऽतोऽख्याध्यः ॥४॥२॥७१॥

ख्याध्यावर्जस्य धातोर्यद्, व्यञ्जनं तत्परा भवेत् ॥
याऽन्तस्था तत आस्तस्मात्, क्तयोस्तो नो निद्राणवान् ॥७१॥

पू-दिव्यञ्चेर्नाशाद्यूतानपादाने ॥४॥२॥७२॥

नाशेऽद्यूतेऽनपादाने, पूदिव्यञ्चां क्रमात् क्तयोः ॥

---

अप्र इति किम् ? पूर्तिः पूर्तः, पूर्तवान् ॥६८॥ एवं भिन्नः, भिन्नवान् । अमूर्च्छमद इति किम् ? मूर्तः, मत्तः । रदात्तस्येति चरितम्, मुदितम् ॥६९॥ एवं लग्नः, लग्नवानित्यादि ॥७०॥ एवं स्त्यानः, स्त्यानवान् इत्यादि । व्यञ्जन इति यातः । अन्तस्था इति स्नातः । आत इति च्युतः । धातोर्व्यञ्जनेति किम् ? निर्यातः । अख्याध्य इति ख्यातः, ध्यातः । आतः परस्येति दरिद्रितः ॥७१॥ पूतं, द्यूतम्,

तस्य नः स्याच्चवाः पूना, आचूनश्च समक्नकः ॥७२॥

सेर्ग्रासे कर्मकर्तरि ॥४।२।७३॥

स्यात् सिनोनः सिनातेर्वा, ग्रासेऽर्थे कर्मकर्तरि ॥
क्तयोस्तो नो भवेद् ग्रासः, सिनः स्वयं सिनस्तया ॥७३॥

क्षेः क्षी चाऽध्यार्थे ॥४।२।७४॥

भावकर्मविभिन्नेऽर्थे, क्तयोस्तस्य भवेत् क्षियः ॥
नत्वं क्षीस्तस्य चादेशः प्रक्षीणः क्षीणवान् विभुः ॥७४॥

वाऽऽक्रोशदैन्ये ॥४।२।७५॥

अध्यार्थे क्षेः परस्य स्यात्, क्तयोराक्रोशदैन्ययोः ॥
नत्वं तस्य नवा धातोः, क्षीः क्षीणायुः क्षितायुषौ ॥७५॥

ऋ-ह्री-घ्रा-ध्रा-त्रोन्द-नुद-विन्तेर्वा ॥४।२।७६॥

धातुभ्योऽष्टाभ्य एभ्यः स्यात्, क्तयोस्तो नो विभाषया ॥
ऋणमृतं समुन्नश्च, समुत्तो ह्रीणवांस्तथा ॥७६॥

दु-गोरू च ॥४।२।७७॥

दु-गुभ्यां स्यात् क्तयोस्तो न-स्तद्योगे च दुगोश्च ऊः ॥
दूनश्च दूनवान् योऽसौ, गूनश्च गूनवान् स्वयम् ॥७७॥

---

उदक [illegible] ॥७२॥ [illegible] ॥७३॥ [illegible] इति [illegible] ! क्षि-
[illegible] ॥७४॥ एवं [illegible], [illegible] ॥७५॥ एवं [illegible], [illegible],
[illegible], [illegible], [illegible], [illegible], [illegible], [illegible], [illegible], [illegible], [illegible], [illegible]
॥७६॥ सूत्रत्रयं सम्पूर्णम् ॥७७॥७८॥७९॥

क्षै-शुषि-पचो म-क-वम् ॥४।२।७८॥

स्युः क्षै-शुषि-पचिभ्यस्तु, क्तयोस्तस्य यथाक्रमम् ॥
म-क-वा नित्यमादेशाः, क्षामः शुष्कश्च पक्ववान् ॥७८॥

निर्वाणमवाते ॥४।२।७९॥

स्यान्निर्पूर्वकवाधातो-रवाते कर्तरि ध्रुवम् ॥
क्तयोर्नस्तस्य निर्वाणोऽ-सौ निर्वातः समीरणः ॥७९॥

अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोतफुल्ल-संफुल्लाः ॥४।२।८०॥

क्तान्ता एते निपात्यन्तेऽ-नुपसर्गाः कृशास्तथा ॥
उल्लाघोत्फुल्लसंफुल्लाः, फुल्लाः क्षीबः स्वकर्मणा ॥८०॥

भित्तं शकलम् ॥४।२।८१॥

शकलेऽर्थे भिदेः क्तस्य, नत्वाभावो निपात्यते ॥
भित्तं शकलमित्यर्थे, भिन्नं भित्तं तदन्यथा ॥८१॥

वित्तं धनप्रतीतम् ॥४।२।८२॥

धनप्रतीतयोर्विन्दे-र्नत्वाभावो निपात्यते ॥
वित्तं धनं प्रतीतश्च, वित्तो विन्नं तदन्यथा ॥८२॥

हु-धुटो हेर्धिः ॥४।२।८३॥

होर्धुडन्ताच्च हेर्धिः स्यात्, प्रज्वलिते तपोऽनले ॥
कामं जुहुधि कर्मैधः, शिवं विद्धि भवं त्यज ॥८३॥

---

एवं परिकृशः ॥८०॥ स्पष्टं सूत्रत्रयम् ॥८१॥८२॥८३॥

## शासस्हनः शाध्येधिजहि ॥४॥२॥८४॥

ह्यन्तशासस्हनां ज्ञेयाः, शाध्येधिजहयः क्रमात् ॥
एधि समाधिमन् धीमन् !, मनः शाधि जहि क्रुधम् ॥८४॥

## अतः प्रत्ययाल्लुक् ॥४॥२॥८५॥

अदन्तः प्रत्ययो धातोस्ततः परस्य हेश्च लुक् ॥
'गच्छ तिष्ठ' धनी वक्ति, 'देहि देही'ति किङ्करः ॥८५॥

## असंयोगादोः ॥४॥२॥८६॥

असंयोगादुदन्तात् स्यात्, प्रत्ययाद् हे लुगाप्नुहि ॥
सद्धर्मं चिनु कल्याणं, क्रीणीहि पदमुत्तमम् ॥८६॥

## वम्यविति वा ॥४॥२॥८७॥

असंयोगादुकारो यः, प्रत्ययस्तस्य लुग् नवा ॥
वम्यविति वयं तन्म - स्तनुमो वा सतो गुणान् ॥८७॥

## कृगो यि च ॥४॥२॥८८॥

करोतेः स्यादुकारस्य, लुग् यादौ वमि चाविति ॥
कुर्युः कुर्वः सदा कुर्मः श्रेयसे हितमात्मनः ॥८८॥

## अतः शित्युत् ॥४॥२॥८९॥

शित्यविति य उस्तस्य, निमित्तस्य कृगोऽत उः ॥
कल्याणं कुरु कर्तव्यं, करोति हितमेव सन् ॥८९॥

---

ह्यन्तेति-हिप्रत्ययान्तानामिति ॥८४॥ प्रत्ययादिति किम् ? पापहि ॥८५॥ चिनु इति उदाहरणम्, आप्नुहि, क्रीणीहि तनोमि । असंयोगादित्येव तक्ष्णुवः ॥८७॥ सूत्रद्वयं स्पष्टम् ॥८८॥८९॥

## श्नाऽस्त्योर्लुक् ॥४॥२॥९०॥

अस्तेश्च श्नस्य लुक् कामं, शित्यविति भवेदतः ॥
आस्तां स तद्विनेयौ स्त-स्तयो रुन्धश्च तौ भवम् ॥९०॥

## वा द्विषाऽऽतोऽनः पुस् ॥४॥२॥९१॥

आदन्ताच्च द्विषोऽनः पुस्, विकल्पेन शितोऽवितः ॥
अद्विषुरद्विषन् धर्मं, ते दुर्गतिमयान् अयुः ॥९१॥

## सिज्विदोऽभुवः ॥४॥२॥९२॥

सिचाऽभुवः पराद् धातो-र्विदेश्चानः पुसामतः
अविदुः शमकार्षुश्च, सन्तोऽभूवन् भवेऽभवाः ॥९२॥

## द्व्युक्तजक्षपञ्चतः ॥४॥२॥९३॥

जक्षपञ्चकतोऽनः पुस्, स्याद् द्व्युक्ताच्च शितोऽवितः ॥
अजुहवुरजक्षुः स्या-दर्दरिद्रुरजागरुः ॥९३॥

## अन्तो नो लुक् ॥४॥२॥९४॥

नो लुक् शितोऽवितोऽन्तः स्याद्, द्व्युक्ताच्च जक्षपञ्चकात् ॥
दरिद्रति दरिद्रच्च, जुह्वज्जुह्वति जक्षति ॥९४॥

## शौ वा ॥४॥२॥९५॥

लुग् वा शिविषयेऽन्तो नः, स्याद् द्व्युक्तजक्षपञ्चकात् ॥

---

स;-प्रसिद्धः कश्चिद्, आस्ताम्, दूरे तिष्ठतु, तस्य विनेयौ द्वौ स्तः-समर्थौ तयोः सकाशात् तौ भवं-संसारं रुन्धः । आस्तामिति अत इत्यस्य फलम् ॥९०॥ स्पष्टम् ॥९१॥ अभूवन् इति भूवर्जनफलम् । भवेऽभवा इति अपुनर्जन्मानः ॥९२॥ एवम् अचकासुः, अशासुः ॥९३॥ स्पष्टे॥९४॥९५॥

दरिद्रति दरिद्रन्ति, ददन्ति ददतीत्यपि ॥९५॥

श्नश्नातः ॥४॥२॥९६॥

लुग् भवेत् शित्यवित्यातः, श्नो द्व्युक्तजक्षपञ्चतः ॥
भवन्तो धीमतां सत्यं, यशः क्रीणन्तु सत्कृतेः ॥९६॥

एषामीर्व्यञ्जनेऽदः ॥४॥२॥९७॥

श्नाद्व्युक्तजक्षपञ्चाना-मात ईर्व्यञ्जनादिके ॥
शित्यविति न दासंज्ञ-कस्य मिमीतयादयः ॥९७॥

इर्दरिद्रः ॥४॥२॥९८॥

आत इर्व्यञ्जनादौ स्याद्, दरिद्रोऽविति वै शिति ॥
दरिद्रितो दरिद्रौ हि, नादरिद्रा दरिद्रति ॥९८॥

भियो नवा ॥४॥२॥९९॥

जायते व्यञ्जनादाविः, शित्यविति भियो नवा ॥
बिभीतो बिभितो भीरू, पापाद् बिभ्यति सज्जनाः ॥९९॥

हाकः ॥४॥२॥१००॥

अविच्छिद्व्यञ्जनादौ स्या-ज्जहातेरात इर्नवा ॥
जहीतो जहितो युद्धे, शस्त्राणि पारमार्थिकौ ॥१००॥

आ च हौ ॥४॥२॥१०१॥

जहातेर्हौ भवेदात्व-मित्वञ्च वा जहीहि भोः ॥

एवं दरिद्रति । अवितीत्येव अजहाम्, अक्रीणाम् ॥९६॥ एवं लुनीतः । व्यञ्जन इति किम् ? मिमते । अद इति किम् ? दत्तः, धत्तः ॥९७॥ सूत्रत्रयं स्पष्टम् ॥९८॥९९॥१००॥

जहाहि जहिहि क्रोधं, कल्याणं यदि काङ्क्षसि ॥१०१॥

यि लुक् ॥४॥२॥१०२॥

हाक आलुग् भवेद् यादौ, प्रत्यये शिति सर्वदा ॥
जह्याद् मोहमहाजालं, भवचक्राद्यकारणम् ॥१०२॥

ओतः श्ये ॥४॥२॥१०३॥

धातोरोतो भवेद् लुक् श्ये, तमोऽवश्यति भास्करः ॥
जिना रागमवश्यन्ति, गोपो गवति गोत्रजे ॥१०३॥

जा ज्ञा-जनोऽत्यादौ ॥४॥२॥१०४॥

ज्ञाजनोः शिति जादेश-स्तिवादौ त्वनन्तरे ।
आत्मतत्त्वं स जानाति, जायते यो महामुनिः ॥१०४॥

प्वादेर्ह्रस्वः ॥४॥२॥१०५॥

प्वादेर्ह्रस्वो भवेत्त्यादि-वर्जिते शिति प्रत्यये ॥
पुनाति भुवनं विश्वं, लुनीते कल्मषं मुनिः ॥१०५॥

गमिषद्यमश्छः ॥४॥२॥१०६॥

अत्यादौ शिति छादेशो, जायते गमिषद्यमाम् ॥
आयच्छते च जङ्गन्ति, गच्छतीच्छति यच्छति ॥१०६॥

भोः इति सम्बोधनाभिव्यञ्जकम् ॥१०१॥ स्पष्टम् ॥१०२॥ गोरिवाचरतीति गवति श्य इत्यस्य फलम् ॥१०३॥ अत्यादाविति किम् ? जाज्ञाति, जञ्जन्ति ॥१०४॥ प्वादेरिति किम् ? श्रीणाति ॥१०५॥ स्पष्टम् ॥१०६॥

## वेगेसर्त्तेर्धाव् ॥४॥२॥१०७॥

वेगे गम्ये भवेत् सर्त्ते-रत्यादौ शिति धाविति ॥
वाजिधावति वेगेन, घर्मम्नुसरेत्तथा ॥१०७॥

## श्रौति-कृवु-धिवु-पा-घ्रा-ध्मा-स्था-म्ना-दाम्-दृश्यर्त्ति-शद-सदः शृ-कृ-धि-पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-र्च्छ-शीय-सीदम् ॥४॥२॥१०८॥

एषां त्रयोदशानां स्युः शित्यत्यादौ हि आदयः
शृणु कृणु च यच्छर्च्छ, पश्य तिष्ठ च शीयते ॥१०८॥

## क्रमो दीर्घः परस्मै ॥४॥२॥१०९॥

शित्यत्यादौ क्रमेर्दीर्घः, परस्मैपदहेतुके ॥
क्राम क्राम्यति विक्रान्तः, रविराक्रमते दिवि ॥१०९॥

## ष्ठिवू-क्लम्वाऽऽचमः ॥४॥२॥११०॥

ष्ठिवूक्लम्याचमां दीर्घः, शित्यत्यादौ परे भवेत् ॥
ष्ठीव क्लाम तथाचाम, चमेत्यादि प्रसाध्यताम् ॥११०॥

## शमसप्तकस्य श्ये ॥४॥२॥१११॥

श्ये सप्तानां शमादीनां, दीर्घो लक्षणलक्षितः ॥
शाम्य दाम्य तथा ताम्य, श्राम्य भ्राम्य तथा क्षमेत् ॥१११॥

---

घर्ममित्यादि वेगाभावोदाहरणम् ॥१०७॥ एते आदेशाः क्रमशो बोध्याः । एवं धिनु, पिब, जिघ्र, धम, मन, सीद ॥१०८॥ स्पष्ट ॥१०९॥ ॥११०॥ एवं क्षाम्य, माद्य ॥१११॥

## ष्ठिवू–सिवोऽनटि वा ॥४॥२॥११२॥

ष्ठिव्–सिवोर्वा भवेद् दीर्घो–ऽनट्प्रत्ययपरे ततः ॥
सीवनं सेवनं निष्ठी–वनं निष्ठेवनं तथा ॥११२॥

## मव्यस्याः ॥४॥२॥११३॥

धातोर्मादौ च वादौ चा–त आ दीर्घो भवेत्ततः ॥
पचामि च पचावश्च, पचामो भवितव्यताम् ॥११३॥

## अनतोऽन्तोऽदात्मने ॥४॥२॥११४॥

स्यादात्मनेपदस्थस्याऽ–न्तोऽदनतः परस्य वै ॥
चिन्वन्ति चिन्वते धर्मं, धार्मिका ननु सम्पदम् ॥११४॥

## शीङो रत् ॥४॥२॥११५॥

अन्तः शीङः परस्थस्य, रद् भवेदात्मनेपदे ॥
आत्मनि शेरते मूढाः, योगिनस्तत्र जाग्रति ॥११५॥

## वेत्तेर्नवा ॥४॥२॥११६॥

अन्तो वेत्तेः परस्थस्य, वा स्याद् रदात्मनेपदे ॥
संविद्रते गुणान् विज्ञाः, संविदतेऽगुणानपि ॥११६॥

## तिवां णवः परस्मै ॥४॥२॥११७॥

स्युः परस्मैपदानां वा, तिवादीनां णवादयः ॥
वेत्तेः परं यथासङ्ख्यं, णं वेद विदतुर्विदुः ॥११७॥

---

स्पष्टे ॥११२॥११३॥ अनत इति किम् ? पचन्ते ॥११४॥ स्पष्टे ॥११५॥११६॥ एवं वेत्थ, विदथुः, विद, वेद, विद्व, विद्म, पक्षे वेत्तीत्यादि ॥११७॥

### ब्रूगः पञ्चानां पञ्चाहश्च ॥४॥२॥११८॥

ब्रूगस्तिवादिपञ्चानां, क्रमात् पञ्च णवादयः ॥
वाऽहश्च ब्रूग आदेशः, साधुराह हितं वचः ॥११८॥

### आशिषि तुह्योस्तातङ् ॥४॥२॥११९॥

आशिष्यर्थे भवेत्तुह्योः, स्थाने तातङ् विभाषया ॥
त्वं जीव जीवतात् कामं, भवान् जीवतु जीवतात् ॥११९॥

### आतो णव औः ॥४॥२॥१२०॥

आतः परं णवः स्थाने, औरादेशः प्रजायते ॥
ज्ञानामृतं पपौ तस्थौ, कानने विजने मुनिः ॥१२०॥

### आतामातेआथामाथे आदिः ॥४॥२॥१२१॥

आत्परेषां भवेदेषा-मात इर्हैमलक्षणे ॥
पचेतां च पचेते च, पचेथामिति जायते ॥१२१॥

### यः सप्तम्याः ॥४॥२॥१२२॥

स्यादात्परस्य सप्तम्या, याशब्दस्येः पचेत् पचेः ॥
पठेत् पठे-र्वसेद् यद्वा, वसेः कामं चरेच्चरेः ॥१२२॥

### याम्युसोरियमियुसौ ॥४॥२॥१२३॥

स्यातामात्परयोर्याम् यु-सोरियमियुसौ क्रमात् ॥
पठेयमहमध्यात्मं, पठेयुस्तेऽपि तत्तथा ॥१२३॥

॥ इति द्वितीयः पादः समाप्तः ॥

---

एवम् आहतुः, आहुः, आत्थ, आहथुः, पक्षे ब्रवीतीत्यादि ॥११८॥ आशिषीति किम् ? जीवतु ॥११९॥ स्पष्टम् ॥१२०॥ एवं पचेथे । आदिति म् ? मिमाताम् ॥१२१॥ स्पष्टे ॥१२२॥१२३॥

द्वितीयः पाद समाप्तः ॥

## अथ तृतीयः पादः ॥

### नामिनो गुणोऽक्ङिति ॥४॥३॥१॥

नाम्यन्तस्य भवेद् धातोः, प्रत्यये क्ङितिवर्जिते ॥
आसन्नो गुणं आश्चर्यं, चेता नेतापि जायते ॥१॥

### उश्नोः ॥४॥३॥२॥

अक्ङिति जायते धातो-रुश्नोः प्रत्यययोर्गुणः ॥
सरः सुनोति सत् पद्मं, वातस्तनोति सौरभम् ॥२॥

### पुस्-पौ ॥४॥३॥३॥

पुसि पौ च परे धातो-र्नाम्यन्तस्य गुणो भवेत् ॥
राजानोऽबिभरुः पृथ्वी-र्र्पयन्त्यधुनापि शम् ॥३॥

### लघोरुपान्त्यस्य ॥४॥३॥४॥

धातोर्लघोरुपान्त्यस्य, नामिनः स्याद् गुणोऽक्ङिति ॥
भेत्ता भिनत्ति पूर्द्वारं, विजयं यः समीहते ॥४॥

### मिदः श्ये ॥४॥३॥५॥

उपान्त्यस्य मिदेर्धातोः, श्ये परे जायते गुणः ॥
मेद्यति बुद्धिमान् युक्त्याऽरावपि स्वार्थसाधने ॥५॥

### जागुः क्ङिति ॥४॥३॥६॥

प्रत्यये क्ङिति जागर्तेः सर्वदा जायते गुणः ॥
लोका जागरिता लोके, साधुभिर्ज्ञानदानतः ॥६॥

---

अक्ङितीति किम् ? युतः ॥१॥ सूत्रषट्कं स्पष्टम् ॥२॥३॥४॥५॥६॥७॥

ऋवर्ण-दृशोऽङि ॥४॥३॥७॥

स्याद् ऋवर्णान्तधातूनां, दृशेश्चाङि परे गुणः ॥
अदर्शद्जरच्चारद्, असरदतरत्तथा ॥७॥

स्कृच्छृतोऽकि परोक्षायाम् ॥४॥३॥८॥

स्कृच्छोर्ऋदन्तधातूनां, परोक्षायां गुणो भवेत् ॥
नामिनः क्वसुकानोर्न, तेरुः संचस्करुर्यथा ॥८॥

संयोगादृर्तेः ॥४॥३॥९॥

संयोगाद् ऋत् तदन्तस्या-र्तेश्च गुणो भवेदकि ॥
परोक्षायां स्वमर्यादां, सज्जना न विसस्मरुः ॥९॥

क्ययङाशीर्ये ॥४॥३॥१०॥

संयोगाद् ऋत् तदन्तस्या-र्तेश्च क्ये यङि प्रत्यये ॥
आशीर्ये च गुणः स्यात्तत्, स्मर्यते स्वर्यतेऽर्यते ॥१०॥

न वृद्धिश्चाविति क्ङिल्लोपे ॥४॥३॥११॥

अविति प्रत्यये लोपः, क्ङितो ङितश्च तत्परे ॥
गुणो वृद्धिश्च नैव स्यात्, चेक्यस्तथा परीमृजः ॥११॥

भवतः सिज्लुपि ॥४॥३॥१२॥

गुणः स्यान्नैव भूधातोः, सिज्लुपि प्राप्तपूर्वकः ॥
राजराजेश्वरो रामोऽ-भूच्च व्यस्त्यभविष्ट च ॥१२॥

---

एवमानर्च्छुः । अकीतिकिम् ? सञ्चस्कृवान् ॥८॥ एवं सस्वरुः, आरुः । संयोगादिति-चक्रुः ॥९॥ एवं सास्मर्यते, स्मर्यादित्यादि ॥ १० ॥ स्पष्टानि ॥११॥१२॥१३॥

### सूतेः पञ्चम्याम् ॥४॥३॥१३॥

पञ्चम्यां जायते नैव, सूतेर्गुणः कदाचन ॥
सुवै सुवावहै सोष-वाणि सुवामहै तथा ॥१३॥

### द्व्युक्तोपान्त्यस्य शिति स्वरे ॥४॥३॥१४॥

कृतद्वित्वस्य धातोः स्या-दुपान्त्यस्य नु नामिनः ॥
गुणः शिति स्वरादौ न, नेनिजानि निजं मनः ॥१४॥

### ह्विणोरप्विति व्यौ ॥४॥३॥१५॥

स्वरादौ नामिनः स्यातां, व्यौ क्रमाद् होरिणः शिति ॥
अपिति चाविति ज्ञाना-दयानि यन्तु जुह्वति ॥१५॥

### इको वा ॥४॥३॥१६॥

स्यादिक् स्मरण इत्यस्य, वा स्वरादावविच्छिति ॥
यकारो न्वधियन्त्येवा-धीयन्ति पण्डिता हितम् ॥१६॥

### कुटादेर्ङिद्वदञ्णित् ॥४॥३॥१७

ञ्णिद्वर्जप्रत्ययो ङिद्वत्, कुटादेः परतो भवेत् ॥
कुटिता कुटितुं कर्म, सर्वदा जायते जिनः ॥१७॥

### विजेरिट् ॥४॥३॥१८॥

विजेरिट् सम्भवेद् ङिद्व-च्चतुर्थाध्यायसत्रतः ॥
उद्विजिता जनो नैव, स्वार्थं साधयितुं क्षमः ॥१८॥

---

उपान्त्यस्येति किम् ? जुहवानि । शितीतिकिम् ? निनेज ॥१४॥
अप्वितीति किम् ? अजुहवुः ॥१५॥ स्मृष्टम् ॥१६॥ एवं गुता इत्यादि ।
अञ्णिदिति उच्चुकोट, ॥१७॥ इडिति किम् ? उद्वजनम् ॥१८॥

वोर्णोः ॥४।३।१९॥

ऊर्णोरिड्वा भवेद् ङिद्वत्, प्रोर्णविताऽपरे दले ॥
प्रोर्णुविता सुहृद्दोषं, विरलो भुवि मानवः ॥१९॥

शिदवित् ॥४।३।२०॥

धातोः शित्प्रत्ययो ङिद्वद्, विद्वर्जो जायते ततः ॥
इतो वित्तः सुतोऽधीते संविदानो विदन् हतः ॥२०॥

इन्ध्यसंयोगात् परोक्षा किद्वत् ॥४।३।२१॥

असंयोगान्ततश्चेन्धेः, परोक्षा विद्विवर्जिता ॥
किद्वद् भवेत् समीधाते, ऊचतुश्च जजागरुः ॥ २१ ॥

स्वञ्जेर्नवा ॥४।३।२२॥

स्वञ्जेः परा परोक्षा वा, भवेत् किद्वच्छकुन्तला ॥
प्रियंवदाऽनसूयाभ्यां, सस्वञ्जे परिषस्वजे ॥२२॥

जनशो न्युपान्त्ये तादिः क्त्वा ॥४।३।२३॥

जान्ताद् धातोर्नशेश्चापि, न्युपान्त्ये क्त्वा नवा भवेत् ॥
तादिः किद्वन्नरो भक्त्वा, कामं भङ्क्त्वा सुखी भवेत् ॥२३॥

ऋत्-तृष-मृष-कृष-वञ्च-लुञ्च-थ-फः सेट् ॥४।३।२४॥

न्युपान्त्ये सति वैभ्यः क्त्वा, सेट् किद्वज्जायते ततः ॥
ऋतित्वा स्यात्तथाऽर्तित्वा, तृषित्वाऽपि विकल्पतः ॥२४॥

---

स्पष्टम् ॥१९॥ अविदिति एति । शिदिति चेषीष्ट ॥२०॥ इन्ध्यसंयोगादितिकिम् ? सस्रंसे ॥२१॥ स्पष्टम् ॥२२॥ नितिकिम् ? भुक्त्वा । उपान्त्य इतिकिम् ? निक्त्वा । तादिरिति विभज्य ॥२३॥ एवं- तर्षित्वा, श्रन्थित्वा, गुफित्वा, गुम्फित्वेत्यादि । न्युपान्त्य इति कोथित्वा, रेफित्वा । सेडिति वंक्त्वा ॥२४॥

## वौ व्यञ्जनादेः सन् चाय्वः ॥४॥३॥२५॥

स्यातामुदित्युपान्त्ये वा, क्त्वा सन् च व्यञ्जनादितः ॥
सेटौ किद्वन्नतु य्वन्ता,-ल्लिखित्वा पठ शुद्धये ॥२५॥

## उति शवर्हाद्भ्यः क्तौ भावारम्भे ॥४॥३॥२६॥

शवर्हाद्भ्यः परौ भावा-रम्भयोः क्तौ विभाषया ॥
उदुपान्त्ये सति स्यातां, सेटौ किद्वत् प्रकोचित ः ॥२६॥

## न डीङ्-शीङ-पूङ्-धृषि-क्ष्विदि-स्विदि-मिदः॥४॥३॥२७॥

स्यातामेभ्यः परौ सेटौ, किद्वत् क्तक्तवतू नहि ॥
दिवा शयितवान् नक्तं, शयितो दर्शनावृतेः ॥२७॥

## मृषः क्षान्तौ ॥४॥३॥२८॥

क्षमार्थकान् मृषः सेटौ, किद्वत् क्तक्तवतू नवै ॥
मुनिर्मर्षितवान् दोषान्, दुष्टानामप्यनेकशः ॥२८॥

## क्त्वा ॥४॥३॥२९॥

धातोः क्त्वा सेड् न किद्वत् स्यात्, देवित्वादि ततो भवेत् ॥
इष्ट्वा कृत्वा च शान्त्वा च, सेडित्यस्य फलं मतम् ॥२९॥

## स्कन्द-स्यन्दः ॥४॥३॥३०॥

स्कन्दतेः स्यन्दतेश्चापि, क्त्वा किद्वन्न प्रजायते ॥

---

एवं लेखित्वा, लिलिखिषति, लिलेखिषतीत्यादि। वाविति-वर्तित्वा, व्यञ्जनादेरिति-उषित्वा, अय्व इति-देवित्वा ॥२५॥ एवं कुचितम्, कोचितमनेन; प्रकुचितः इत्यादि। उतीति किम्? श्वितितमनेन। शवर्हाद्भ्य इति किम्? प्रगुधितः। भावारम्भ इति किम्? रुचित ः ॥२६॥ एवं डयितः, डयितवानित्यादि। सेटावित्येव-डीनः, डीनवान् ॥२७॥ एवं मर्षितः। क्षान्ताविति-अपमृषितं वाक्यम् ॥२८॥ स्पष्टे ॥२९॥३०॥

स्कन्त्वा स्यन्त्वा च प्रस्कन्द्य, स्यन्दित्वा सेटि जायते॥३०॥

## क्षुध–क्लिश–कुष–गुध–मृड–मृद–वद–वसः ॥४॥३॥३१॥

एभ्योऽष्टाभ्यो नु धातुभ्यः, क्त्वा सेट् किद्वद् भवेत्ततः ॥
ज्ञानी जनः क्षुधित्वाऽपि, प्राप्तुमुत्सहते शिवम् ॥३१॥

## रुद–विद–मुष-ग्रह-स्वप-प्रच्छः सन् च ॥४॥३॥३२॥

एभ्यः षड्भ्योऽपि धातुभ्यः, किद्वत् स्यात् क्त्वा च सन् तथा॥
जिघृक्षति गृहीत्वाऽपि, सुप्त्वाऽपि स सुषुप्सति ॥३२॥

## नामिनोऽनिट् ॥४॥३॥३३॥

धातोर्नाम्यन्ततोऽनिट् सन्, किद्वद् भवेच्चिचीषति ॥
तुष्टूषति जनो मोहा–त्तितीर्षति चिकीर्षति ॥३३॥

## उपान्त्ये ॥४॥३॥३४॥

धातोर्नामिन्युपान्त्येऽनिट्, सन् किद्वज्जायते ततः ॥
र्बिभित्सन्ते बुभुत्सन्ते, विवृत्सति यियक्षति ॥३४॥

## सिजाशिषावात्मने ॥४॥३॥३५॥

धातोर्नामिन्युपान्त्ये स–स्यनिटावात्मनेपदे ॥
किद्वत् सिजाशिषौ स्याता–मभित्ताऽवुद्ध भेत्स्यते ॥३५॥

## ऋवर्णात् ॥४॥३॥३६॥

स्यातां धातोर्ऋवर्णान्ता–दनिटावात्मनेपदे ॥

---

एवं क्लिशित्वेत्यादि ॥३१॥ स्पष्टम् ॥३२॥ अनिडिति–शिशयिषते ॥३३॥ स्पष्टम् ॥३४॥ एवं भित्सीष्ट इत्यादि । आत्मन इति अलाक्षीत् ॥३५॥ एवं कृषीष्टेत्यादि ॥३६॥

क्ङिद्वत् सिजाशिषौ धन्योऽ-कृत सर्वं समीहितम् ॥३६॥

गमो वा ॥४॥३॥३७॥

सिजाशिषौ गमेः क्ङिद्वद्, वा स्यातामात्मनेपदे ॥
चैत्रः समगत प्रज्ञा-वान् समगँस्त मानवः ॥३७॥

हनः सिच् ॥४॥३॥३८॥

आत्मनेपदसम्बन्धी, सिच् क्ङिद्वज्जायते हनः ॥
सुधीराहत शत्रूँस्तान्, रिपुर्वै हन्ति नाहतः ॥३८॥

यमः सूचने ॥४॥३॥३९॥

यमेः सिच् सूचने क्ङिद्वत्, सम्भवेदात्मनेपदे ॥
उदायत महाक्रूरः, शकुनिः पाण्डवानहो ॥३९॥

वा स्वीकृतौ ॥४॥३॥४०॥

स्वीकारार्थाद् यमेर्धातोः, सिच् क्ङिद्वदात्मनेपदे ॥
दृष्ट्वाऽरातीन् महास्त्राणि, नोपायँस्त ह्युपायत ॥४०॥

इश्च स्थादः ॥४॥३॥४१॥

स्थश्च दासंज्ञकाच्च स्यात्, सिच् क्ङिद्वदात्मनेपदे ॥
स्यात् स्थादोरिश्च तद्योगे, व्यधितोपास्थितादित ॥४१॥

मृजोऽस्य वृद्धिः ॥४॥३॥४२॥

सति मृजेर्गुणे वृद्धि-रकारस्य भवेत्ततः ॥

---

एवं संगसीष्ट, संगंसीष्टेत्यादि ॥३७॥ स्पष्टम् ॥३८॥ सूचन इति किम् ? आयंस्त रज्जुम् ॥३९॥ स्वीकृताविति-आयंस्त पाणिम् ॥४०॥ स्पष्टम् ॥४१॥ अत इति किम् ? मृष्टः ॥४२॥

मार्ष्टि मार्ष्टा तथा मार्ष्टुं मार्जिता मार्जकः पुनः ॥४२॥

## ऋतः स्वरे वा ॥४॥३॥४३॥

ऋकारस्य मृजेर्वृद्धिः, स्वरादौ प्रत्यये नवा ॥
परिमार्जन्ति चेतः स्वं, परिमृजन्ति साधवः ॥४३॥

## सिचि परस्मै समानस्याऽङिति ॥४॥३॥४४॥

स्यात् परस्मैपदे वृद्धिः, समानान्तस्य नित्यशः ॥
सिच्यङिति परेऽचैषीत्, सद्धर्मं मुनिमण्डली ॥४४॥

## व्यञ्जनानामनिटि ॥४॥३॥४५॥

व्यनान्तस्य धातोः स्यात्, परस्मैपदकेऽनिटि ॥
सिचि वृद्धिः समानस्या-राङ्क्षीदित्यादि साध्यते ॥४५॥

## वोर्णुगः सेटि ॥४॥३॥४६॥

ऊर्णोः सेटि भवेद् वृद्धि-र्वा परस्मैपदे सिचि ॥
प्रौर्णावीत् प्रौर्णवीच्चापि, प्रौर्णुवीदपि जायते ॥४६॥

## व्यञ्जनादेर्वोपान्त्यस्यातः ॥४॥३॥४७॥

व्यञ्जनादेरुपान्त्यस्या-तः सेटि सिचि प्रत्यये ॥
वा परस्मैपदे वृद्धि-रकाणीदकणीत्तथा ॥४७॥

---

ऋत इति किम्? ममार्ज। स्वर इति किम्? मृज्वः ॥४३॥ परस्मैपदे इति अच्योष्ट। समानस्येति अगवीत्। अङितीति न्यनुवीत् ॥४४॥ समानस्येत्येव-उदवोढाम्। अनिटीति-अतक्षीत् ॥४५॥ स्पष्टम् ॥४६॥ व्यञ्जनादेरिति किम्? मा भवान् अटीत्। उपान्त्यस्येति अवधीत्। अत इति अदेवीत्। सेटीत्येव अधाक्षीत् ॥४७॥

## वद-व्रज-लः ॥४॥३॥४८॥

सेटि सिचि ह्युपान्त्यस्य, वदव्रजोर्ल-रन्तयो ॥
अस्य वृद्धिः परस्मै स्यात्, प्राव्राजीद्वदतो जनान् ॥४८॥

## न श्वि-जागृ-शस-क्षण-ह्म्येदितः॥४॥३॥४९॥

ह्म्यन्तानामेदितामेषां, श्व्यादीनां सिचि सेटि नो ॥
स्यात् परस्मैपदे वृद्धि-रक्षणीद्ग्रहीत्तथा ॥४९॥

## ञ्णिति ॥४॥३॥५०॥

धातोरत उपान्त्यस्य, वृद्धिर्ञिति णितीष्यते ॥
शास्त्रं सता यथाऽपाठि, तथैवावादि धीमता ॥५०॥

## नामिनोऽकलिहलेः ॥४॥३॥५१॥

नाम्यन्तस्य भवेद् धातो-र्नाम्नो वा ञ्णिति प्रत्यये ॥
वृद्धिः कलिहली त्यक्त्वा, चिकायाकारि कारकः ॥५१॥

## जागुर्ञिणवि ॥४॥३॥५२॥

णव्येव ञ्णिति जागर्ते-र्ञौ परे वृद्धिरिष्यते ॥
अजागारि जजागार, जागरः साधु जागरी ॥५२॥

## आत ऐः कृञ्ञौ ॥४॥३॥५३॥

आदन्तस्यैर्भवेद् धातो-र्ञ्णिति कृति च ञौ परे ॥
दायो धायः शतंदायी, गोदायो धायको ददौ ॥५३॥

---

एवम् अवादीत्, अज्वालीत्, अक्षारीदित्यादि ॥४८॥ एवम् अश्वयीत्, अजागरीत् अशसीत्, अवमीत्, अहयीत्, अकगीत्, इत्यादि ॥४९॥ स्पष्टम् ॥५०॥ कलिहलिवर्जनात्-अचकलत्। अजहलत् ॥५१॥ णिणवीति- जागरयति ॥५२॥ स्पष्टे ॥५३॥५४॥

## न जनवधः ॥४।३।५४॥

वृद्धिर्न जनिवध्योः स्याद्, ञौ कृति ञ्णिति प्रत्यये ॥
प्रजनो जनको वध्यो, प्रजन्यो वधकोऽवधि ॥५४॥

## मोऽकमि-यमि-रमि-नमि-गमि-वमा-ऽऽचमः ॥४।३।५५॥

कम्यादिभिन्नमन्तस्य, ञ्णिति कृत्प्रत्यये परे ॥
ञौ च वृद्धिर्भवेन्नैव, शमको दमकोऽशमि ॥५५॥

## विश्रमेर्वा ॥४।३।५६॥

वा वृद्धिर्विश्रमेर्धातो-र्ञ्णिति कृति च ञौ भवेत् ॥
विश्रामो विश्रमो विश्वे, श्रान्तानां दीयते हितम् ॥५६॥

## उद्यमोपरमौ ॥४।३।५७॥

उद्यमोपरमौ साधू, घञि स्तो वृद्ध्यभावतः ॥
सदुद्यमस्तथा कार्य्यः, स्यात् पापोपरमो यथा ॥५७॥

## णिद्वाऽन्त्यो णव् ॥४।३।५८॥

परोक्षाया भवेदन्त्यो, णव् णिद्वाऽहं चिचाय यद् ॥
चिचयाहं चुकोटाहं, चुकुटाहं पपाच सः ॥५८॥

## उत और्विति व्यञ्जनेऽद्वेः ॥४।३।५९॥

और्विति व्यञ्जनादौ स्या-दुदन्तस्य विरौति ना ॥
द्व्युक्तस्य नो जुहोतीति, स्यात् सुनोति स्तवानि च ॥५९॥

---

कम्यादिवर्जनात्, कामः, कामुकः, अकामि, यामः रामः, नामः, अगामि, वामः, आचामकः इत्यादि ॥५५॥ एवं विश्रामकः विश्रमकः व्यश्रामि, व्यश्रमि इत्यादि ॥५६॥ स्पष्टे ॥५७॥५८॥ वितीति किम् रुतः ॥५९॥

वोर्णोः ॥४॥३॥६०॥

स्यादयुक्तस्य वोर्णोरौ–र्व्यञ्जनादौ विति स्वयम् ॥
सदा प्रोर्णौति प्रोर्णोति, प्रोर्णोनोति द्विरुक्तितः ॥६०॥

न दिस्योः ॥४॥३॥६१॥

न दिस्योः परयोरौः स्या–दुर्णोतेर्हैमलक्षणे ॥
ह्यस्तन्याः सिर्ग्रहीतव्यः प्रौर्णोत् प्रौर्णोः प्रमीयताम् ॥६१॥

तृहः श्नादीत् ॥४॥३॥६२॥

तृहः श्नाद् व्यञ्जनादावीत्, प्रत्यये विति जायते ॥
दयस्व सर्वभूतेषु. तृणेढु नैव कञ्चन ॥६२॥

ब्रूतः परादिः ॥४॥३॥६३॥

ब्रूतेरूतः परो व्यञ्ज–नादावीद् विति प्रत्यये ॥
स परावयवः साधु–र्ब्रवीति शर्म्मदं वचः ॥६३॥

यङ्–तु–रु–स्तोर्बहुलम् ॥४॥३॥६४॥

यङ्लुबन्तात्तुरुस्तुभ्यो, व्यञ्जनादौ परे विति ॥
ईद् बहुलं परादिः स्याद्, नर्नर्त्ति बोभवीति च ॥६४॥

सः सिजस्तेर्दिस्योः ॥४॥३॥६५॥

सिच्प्रत्ययान्ततो धातो–रस्तेश्च सन्ततो भवेत् ॥
दिस्योः परादिरीन्नित्य–मासीरासीदभूददात् ॥६५॥

---

सूत्रत्रयं स्पष्टम् ॥६०॥६१॥६२॥ ऊत इति किम् ? आत्थ ॥६३॥ बहुलमिति क्वचिद्वा क्वचिन्न तेन नर्नृतीति, नर्नर्ति, बोभवीति, बोभोति, चर्वर्त्ति, तवीतीत्यादि । अद्वेरित्येव–तुतोथ, तुष्टोथ ॥६४॥ स्पष्टम् ॥६५॥

## पिबैति–दा–भू–स्थः सिचो लुप् परस्मै न चेट् ॥४॥३॥६६॥

एभ्यः परं सिचो लुप् स्यात्, परस्मैपदके परे ॥
लुब्योगे च भवेदिड् नो, दुग्धमपान्नरोऽध्यगात् ॥६६॥

## ट्धे-घ्रा-शा-च्छा-सो वा ॥४॥३॥६७॥

एभ्यः परं सिचो वा स्या–ल्लुप् परस्मैपदे परे ॥
लुब्योगे चेड् न वालोऽसौ, पयोऽधासीदधात्तथा ॥६७॥

## तन्भ्यो वा त-थासि न्णोश्च ॥४॥३॥६८॥

तनादिभ्यः सिचस्ते च थासि लुब् वा भवेत्तथा ॥
तद्योगे न्णोश्च लुप् चेड् नो, अतनिष्टाततातथाः ॥६८॥

## सनस्तत्राऽऽवा ॥४॥३॥६९॥

लुपि सत्यां सनोतेः स्या–दन्त्यस्यात्वं विभाषया ॥
असातासत चासाथा, असथा इति साधयेत् ॥६९॥

## धुड्ह्रस्वाल्लुगनिटस्तथोः ॥४॥३॥७०॥

ह्रस्वान्तात् स्याद् धुडन्ताच्च, तादौ थादौ परेऽनिटः ॥
सिचो लुग् स्यादभित्ताथो, अभित्था अकृताकृथाः ॥७०॥

---

एवम् अगात्, अदात्, अधात्, अभूत्, अस्थादित्यादि । परस्मै इति अपासत पयांसि तैः ॥६६॥ एवम् अघ्रात, अघ्रासीदित्यादि ॥६७॥ विकल्पपक्षे अतनिष्ठाः ॥६८॥ तत्रेति किम् ? असनिष्ट ॥६९॥ अनिट इति किम् ? व्यद्योतिष्ट ॥७०॥

## इट ईति ॥४॥३॥७१॥

सिच इटः परस्य स्या-दीति लुग् नित्यशो भवेत् ॥
अलावीत् संशयं विद्वान्, निश्चयेन प्रमात्मना ॥७१॥

## सो धि वा ॥४॥३॥७२॥

धातोर्भवेद् धकारादौ, प्रत्यये सस्य लुग् नवा ॥
चकाधि ज्ञानदीपेना-शाध्वं मोक्षपदं लघु ॥७२॥

## अस्तेः सि हस्त्वेति ॥४॥३॥७३॥

अस्तेः सः प्रत्यये सादौ, लुक् स्यादेति तु सस्य हः ॥
त्वमसि व्यतिसे भाव-यामाहे व्यतिहे तथा ॥७३॥

## दुह-दिह-लिह-गुहो दन्त्यात्मने वा सकः ॥४॥३॥७४॥

एभ्यः सक्प्रत्ययस्य स्याद्, दन्त्यादावात्मनेपदे ॥
लुग् नवाऽधुक्षतादुग्धा-दिग्धाधिक्षत रूप्यताम् ॥७४॥

## स्वरेऽतः ॥४॥३॥७५॥

सकोऽकारस्य लुक् कार्य्यः, स्वरादौ प्रत्यये परे ॥
अधुक्षातामधुक्षाथा मधिक्षातामधिक्षत ॥७५॥

## दरिद्रोऽद्यतन्यां वा ॥४॥३॥७६॥

अद्यतन्यां दरिद्राते-र्विषयेऽन्तस्य लुग् नवा ॥

---

इट इति-अकार्पीत् । ईतीति-अभणिषम् ॥७१॥ विकल्पपक्षे चकाद्धि, आशाद्ध्वम् ॥७२॥ स्राष्टम् ॥७३॥ एवम् अलीढाः, अलिक्षथाः, न्यगुह्वहि, न्यघुक्षावहि । दन्त्य इति किम्-अधुक्षामहि ॥७४॥ सन्टे ॥७५॥७६॥

पापेन सोऽदरिद्रासी–ददरिद्रीत् पुनः पुनः ॥७६॥

## अशित्यस्सन्–णकज्–णकाऽनटि ॥४॥३॥७७॥

सादिसन्नादिवर्जे लु–गशिति विषये भवेत् ॥
दरिद्रो दुर्दरिद्रं ना, दरिद्राति दुरात्मना ॥७७॥

## व्यञ्जनाद् देः सश्च दः ॥४॥३॥७८॥

स्याद् धातोर्व्यञ्जनान्ताद् दे–र्लुक् सो दश्च यथायथम् ॥
अचकादबिभोऽजागः साध्वन्वशादयात्तथा ॥७८॥

## सेः स्–द्–धां च रुर्वा ॥४॥३॥७९॥

स्याद् धातोर्व्यञ्जनान्तात् से–र्लुक् सदधां च रुर्नवा ॥
यथायोगमजर्घास्त्व–मजागस्त्वं त्वमन्वशाः ॥७९॥

## योऽशिति ॥४॥३॥८०॥

स्याद् धातोर्व्यञ्जनान्ताल्लुग्, यकारस्य परेऽशिति ॥
जङ्गमिता तथा बेभि–द्यते सोसूच्यतेर्ष्यिता ॥८०॥

## क्यो वा ॥४॥३॥८१॥

स्याद् धातोर्व्यञ्जनात् क्यस्य, वा लुगशिति प्रत्यये ॥
समिधिष्यति प्रारम्भे, योगी च दृषदिष्यते ॥८१॥

---

सन्नादिवर्जनात्, दिदरिद्रासति, दरिद्रायको याति, दरिद्रायकः, दरिद्राणम् ॥७७॥ स्वप्स्यम् ॥७८॥ पक्षे अजर्घात्त्वम्, अन्वशात्त्वम् इत्यादि ॥७९॥ व्यञ्जनादित्येव–लोलूयिता ॥८०॥ पक्षे समिध्यिष्यति, दृषदिष्यते ॥८१॥

अतः ॥४॥३॥८२॥

धातोरदन्ततो लुक् स्या–द्विहितेऽशिति प्रत्यये ॥
धातोरतस्ततः स्वीयां, कथां कथयतीश्वरः ॥८२॥

णेरनिटि ॥४॥३॥८३॥

लुग् भवेद् णेरतः स्रवा–दनिट्यशिति प्रत्यये ॥
आटिटदाशिशन्माता, बालकं वाल्यकालकम् ॥८३॥

सेट्क्तयोः ॥४॥३॥८४॥

क्तक्तवत्वोर्भवेत् सेटो–र्णो लुग् गणितवाँस्तथा ॥
कारितवान् नृपः स्वर्ण–चैत्यमष्टापदे महत् ॥८४॥

आमन्ताऽऽल्वाऽऽय्येत्नावय् ॥४॥३॥८५॥

सम्भवेण्णेरयादेश, आमादिकेषु पञ्चसु ॥
स्तनयित्नुर्महय्याय्यः, स्पृहयालुः प्रसाधयेत् ॥८५॥

लघोर्यपि ॥४॥३॥८६॥

लघोः परस्य णेर्ज्ञेयोऽ–यादेशो यपि प्रत्यये ॥
प्रशमय्य रिपुं धीरा, जयन्ति जगतीतले ॥८६॥

वाऽऽप्नोः ॥४॥३॥८७॥

आप्नोतेर्यपि णेः स्याद्वाऽ–यादेशः प्राप्य मङ्गलम् ॥
प्रापय्य मनुजान् सर्व–ज्ञाता मोक्षपदं गतः ॥८७॥

---

विहितविशेषणं किम् ? गतः ॥८२॥ अनिटीति किम् ? कारयिता ॥८३॥ एवं कारित इत्यपि ॥८४॥ एवं कारयाञ्चकार, गण्डयन्तः इत्यादि ॥८५॥ लघोरिति किम् ? प्रतिपाद्य ॥८६॥ आप्नोरिति किम् ? अध्याप्य ॥८७॥

## मेङो वा मित् ॥४॥३॥८८॥

मेङो यपि भवेद् णिद्वा, शाब्दलक्षणलक्षितः ॥
अपमित्यापमाय्यात्म–सुखं साधयितुं चरेत् ॥८८॥

## क्षेः क्षीः ॥४॥३॥८९॥

क्षीरादेशो यपि क्षेः स्यात्, सानुबन्धस्य नो भवेत् ॥
निरनुबन्धनिर्देशात्, कर्म प्रक्षीय शं वृणु ॥८९॥

## क्षय्य-जय्यौ शक्तौ ॥४॥३॥९०॥

क्षि–ज्योरन्तस्य गम्यायां, शक्तावय् ये निपात्यते ॥
व्याधिः क्षय्यो भवेत् शत्रु–र्जय्यः काम स्वशक्तितः ॥९०॥

## क्रय्यः क्रयार्थे ॥४॥३॥९१॥

निपात्यते क्रियोऽन्तस्याय्, ये परे चेत् प्रसारितः ॥
क्रयायार्थो वृषो क्रय्यः, क्रेयः शाकटिको बली ॥९१॥

## सस्तः सि ॥४॥३॥९२॥

धातोः सन्तस्य सादौ स्या–त्तोऽशिति प्रत्यये परे ॥
वत्स्यति व्यतिवत्सीष्ट, विवत्सति जिघत्सति ॥९२॥

## दीय् दीङः क्ङिति स्वरे ॥४॥३॥९३॥

दीङः क्ङिति स्वरे दीय् स्या–दशिति प्रत्यये परे ॥
तत उपादिदीयाते, उपदेदीयतेऽस्वरे ॥९३॥

---

स्पष्टे ॥८८॥८९॥ शक्ताविति किम् ? क्षेयं पापम्, जेयं मनः ॥९०॥ स्पष्टम् ॥९१॥ स इति यक्षीष्ट । सीति किम्? वसिषीष्ट ॥९२॥ क्ङितीति किम् ? उपादानम् ॥९३॥

इडेत्--पुसि चातो लुक् ॥४॥३॥९४॥

इटयेति पुसि चातो लु–गादन्तस्य स्वरेऽशिति ॥
क्ङिति पपुरत्तुश्चापि, पपिथ व्यतिरेऽदधत् ॥९४॥

संयोगाऽऽदेर्वाऽऽशिष्ये: ॥४॥३॥९५॥

आदन्तस्य भवेद् धातोः, संयोगादेर्विभाषया ॥
क्ङित्याशिष्येत्वमन्तस्य, ग्लेयाद् ग्लायादसंयमी ॥९५॥

गा--पा -स्था--सा--दा--मा- हाकः ॥४॥३॥९६॥

क्ङित्याशिषि भवेदेत्व–मेषामन्त्यस्य नित्यशः ॥
गेयात् पेयात् सदा स्थेयाद्, देयाद् धेयाद्धितं हितम्॥९६॥

ईर्व्यञ्जनेऽयपि ॥४॥३॥९७॥

गादेः स्याद् व्यञ्जनादावी–र्यब्वर्जे त्वशिति क्ङिति ॥
गीयते पीयते स्थीय–ते दीयतेऽवसीयते ॥९७॥

घ्रा--ध्मोर्यङि ॥४॥३॥९८॥

घ्राध्मोर्यङि भवेदीत्वं, जेघ्रीयते मधुव्रतः ॥
सुमं देध्मीयते शङ्खं, वासुदेवो रणोद्यतः ॥९८॥

हनो घ्नीर्वधे ॥४॥३॥९९॥

वधार्थस्य भवेद् हन्ते–र्घ्नीरादेशः परे यङि ॥

---

स्पष्टम् ॥ ९४॥ संयोगादेरिति किम्? यायात्। क्ङितीत्येव ग्लासीष्ट ॥९५॥ एवम् अवसेयात्, मेयात्, हेयात्, ॥९६॥ एवं जेगीयते, धीयते, मीयते, हीनः। व्यञ्जन इति किम्? तस्थुः। अयपीति प्रगाय ॥ ९७॥ सूत्रसप्तकं स्पष्टम् ॥९८॥९९॥—

जेघ्नीयते खलो जीवान्, जङ्घन्यते गतिं हताम् ॥९९॥

**ञ्णिति घात् ॥४॥३॥१००॥**

ञिति णिति परे हन्ते–र्घादादेशो विधीयते ॥
घातंघातं महामोहं, घातयेत् कर्म सज्जनः ॥१००॥

**ञि-णवि घन् ॥४॥३॥१०१॥**

ञौ णवि च परे हन्ते–र्घनादेशो निरूपितः ॥
जघानाघानि पापात्मा, स्वसुखं पापकर्मणा ॥१०१॥

**नशेर्नेश् वाऽङि ॥४॥३॥१०२॥**

नेशादेशो विकल्पेन, नशेः स्यादङि प्रत्यये ॥
अनशदथवाऽनेश–न्नीशो निजसाध्यतः ॥१०२॥

**श्वयत्यसू-वच-पतः श्वाऽऽस्थवोचपप्तम् ४॥३॥१०३॥**

श्वयत्यादिचतुर्णां स्युः, श्वादयोऽङि परे क्रमात् ॥
अश्वदास्थत्तथाऽवोच–दपप्तत् साध्यतामतः ॥१०३॥

**शीङ एः शिति ॥४॥३॥१०४॥**

शीङः शित्येर्भवेन्मूर्खः, शेते सुखं दिवानिशम् ॥
शयाते शेरते योग–निद्रया योगिनो जनाः ॥१०४॥

**क्ङिति यि शय् ॥४॥३॥१०५॥**

धातोः शीङः शयादेशः, क्ङिति यादौ परे भवेत् ॥
शाशय्यते जनो रोगी, सुधीभिः शय्यते मितम् ॥१०५॥

---

,—॥१००॥१०१॥१०२॥१०३॥१०४॥ क्ङितीति किम् ? शेयम् ॥१०५॥

**उपसर्गादूहो ह्रस्वः ॥४॥३॥१०६॥**

सोपसर्गोहतेरूतो, ह्रस्वः स्याद् यादिके क्ङिति ॥
समुह्यते समूहेन, सदूह्यते समूहितम् ॥१०६॥

**आशिषीणः ॥४॥३॥१०७॥**

उपसर्गात् परस्येण, ईत आशिषि यादिके ॥
क्ङिति ह्रस्वो भवेद् भव्य, उदियादुत्तरोत्तरम् ॥१०७॥

**दीर्घश्च्वियङ् यक्क्येषु च ॥४॥३॥१०८॥**

यादावाशिषि चैषु स्या-दन्त्यस्वरस्य दीर्घता ॥
शुचीकरोति तोष्टूय-ते स्तूयते भृशायते ॥१०८॥

**ऋतोरी ॥४॥३॥१०९॥**

च्व्यादौ परे ऋदन्तस्य-तः स्थाने रीर्भवेदिति ॥
चेक्रीयते च पित्रीस्याद्, मात्रीयते पित्रीयते ॥१०९॥

**रिः शक्याशीर्ये ॥४॥३॥११०॥**

ऋदन्तस्य रिदादेश, आशीर्ये क्ये तथाच शे ॥
ऋतः स्थाने क्रियादेवं, क्रियते ह्रियते ह्रियात् ॥११०॥

**ईश्च्वावर्णस्यानव्ययस्य ॥४॥३॥१११॥**

च्वावीरनव्ययस्याव-र्णान्तस्य स्याद् क्विकः क्विचित् ॥

---

ऊ ऊह इति प्रश्लेष : किम् ? आ उह्यते ओह्यते-समोह्यते ॥१०६ ई इण इति प्रश्लेषः किम् ? आ ईयात् एयात्, समेयात् ॥१०७॥ एवं मन्तूयति, दधीयति, लोहितायते, ईयादित्यादि ॥ १०८ ॥ ऋत इति किम् ? चेकीयंते ॥१०९॥ स्पष्टानि ॥११०॥१११॥—

शुक्लीभवेद् दीवाभूता, रात्रिर्मालीभवेदहिः ॥१११॥

## क्यनि ॥४॥३॥११२॥

अवर्णान्तस्य हीत्वं क्यन्-प्रत्यये जायते यतः ॥
पुत्रीयति जनो मालीयति शालीयति स्वयम् ॥११२॥

## क्षुत्--तृड्--गर्द्धेऽशनायोदन्यधनायम् ।४॥३।११३।

एष्वर्थेषु यथासङ्ख्य-मशनायादयस्त्रयः ॥
क्यन्नन्ता हि निपात्यन्ते, उदन्यति धनायति ॥११३॥

## वृषाऽश्वान् मैथुने स्सोऽन्तः ॥४॥३॥११४॥

आभ्यां स्यान्मैथुनार्थाभ्यां, क्यनि स्सोऽन्तः स्मराविला ॥
गौः वृषस्यति कालेन, वडवाऽश्वस्यति क्रमात् ॥११४॥

## अस् च लौल्ये ॥४॥३॥११५॥

लौल्ये क्यनि परे नाम्नः, स्सोऽस् चान्तः स्याद् स्वभावतः ॥
दध्यस्यन्ति दधिस्यन्ति, मध्वस्यन्ति च बालकाः ॥११५॥

॥ इति तृतीयः पादः ॥

---

—॥११२॥ एवम् अशनायति । क्षुदादाविति किम् अशनीयति, उदकीयति, धनीयति दातुम् ॥ ११३ ॥ मैथुन इति किम् ? वृषीयति, अश्वीयति ब्राह्मणी ॥११४॥ लौल्य इति किम् क्षीरीयति दातुम् ॥११५॥

॥ इति तृतीयः पादः ॥

## अस्ति-ब्रुवोर्भूवचावशिति ॥४।४॥१॥

अस्तिब्रुवोर्यथासङ्ख्यं, भूवचौ भवतोऽशिति ॥
बभूव भविता भूयाद्, वक्षीष्टावोचदुच्यते ॥१॥

## अघञ्क्यबलच्यजेर्वीँ ॥४॥४॥२॥

अघञादावजेर्वीँ स्या-दशिति विषये ततः ॥
प्रवेयं च समाजश्च, समज्याऽजः पशुर्मतः ॥२॥

## त्रने वा ॥४॥४॥३॥

त्रनयोः स्यादजेर्वीँ वा, विषयभूतयोस्ततः ॥
प्रवयणः प्रवेता च प्राजिना प्राजनस्तथा ॥३॥

## चक्षो वाचि क्शांग्-ख्यांग् ॥४॥४॥४॥

अशिति विषये चक्षो, वागर्थस्य समार्थकौ ॥
क्शांग्-ख्यांगौ स्तो नरः वक्शाता, ख्याताऽऽचष्टे विच-
क्षणः ॥४॥

## नवा परोक्षायाम् ॥४॥४॥५॥

चक्षो वाचि परोक्षायां, क्शांग्-ख्यांगौ स्तो विभाषया ॥
आचक्शौ नर आचख्या-वाचचक्षे हितं वचः ॥५॥

## भृज्जो भर्ज् ॥४॥४॥६॥

भृज्जतेर्भर्ज् विकल्पेन, ह्यशिति विषये भवेत् ॥
भर्ष्टा भ्रष्टा तथाऽभार्क्षीद्, भर्जनं भ्रज्जनं तथा ॥६॥

---

अशितीति-स्यात्, ब्रूते ॥१॥ सूत्रषट्कं स्पष्टम् ॥२॥३॥४॥५॥६॥७॥

## प्राद् दागस्त आरम्भे क्ते ॥४॥४॥७॥

आरम्भार्थस्य दागः क्ते, प्रपूर्वस्य भवेन्नवा ॥
त्तः प्रत्तश्च प्रदत्तश्च, परीत्तमिति जायते ॥७॥

## निविस्वन्ववात् ॥४॥४॥८॥

एभ्यः परस्य दागः क्ते, परे त्तो जायते नवा ॥
नीत्तं वीत्तं निदत्तश्च, विदत्तं सूत्तमुत्तमम् ॥

## स्वरादुपसर्गाद् दस्ति कित्यधः ॥४॥४॥९॥

स्वरान्तादुपसर्गाद् दा-संज्ञस्य किति तादिके ॥
स्याद् धावर्जस्य नित्यं त्तो, दत्तं प्रत्तं परीत्तिमम् ॥९॥

## दत् ॥४॥४॥१०॥

भवेद् दासंज्ञकस्याधो, दत् तादौ किति प्रत्यये ॥
दत्तो दत्तिस्तथाधीतः, साध्यतां लक्षणादतः ॥१०॥

## दोसोमास्थ इः ॥४॥४॥११॥

दोसोमास्थामिकारः स्यात्, तादिके किति प्रत्यये ॥
तेन संस्थितवाँश्चापि, मितिः सित्वा च निर्दितः ॥११॥

## छाशोर्वा ॥४॥४॥१२॥

'छोशो' इत्येतयोर्धात्वो-रिः स्याद्वा किति तादिके ॥

---

एवं सुदत्तम्, अनूतम्, अनुदत्तम्, अवत्तम्, अवदत्तम् ॥८॥ स्वरादिति निर्दत्तम् । द इति–प्रदाता व्रीहयः । तीति किम् ? प्रदाय । अध इति निधीतः ॥९॥ स्पष्टे ॥१०॥११॥ एवमवच्छातवान्, अवच्छितवान्, निशितवान्, निशातवान् ॥१२॥

निशितश्च निशातः स्या-दवच्छातस्त्ववच्छितः ॥१२॥

## शो व्रते ॥४।४॥१३॥

श्यतेः क्तप्रत्यये नित्य-मिर्व्रतविषये भवेत् ॥
स संशितव्रतो ज्ञेयो, व्रतं येन च संशितम् ॥१३॥

## हाको हिः क्त्वि ॥४॥४॥१४॥

हाकस्तादौ क्किति त्त्वायां, हिर्भवेद् हैमलक्षणे ॥
हीनोऽपि हीनतां हित्वा, पापं प्रहीय सन् भवेत् ॥१४॥

## धागः ॥४॥४॥१५॥

धातोर्धागस्तकारादौ, क्किति हिर्जायते यतः ॥
हित्वा विहितवान् धीतः, प्रधाय धीतवान् हितिः॥१५॥

## यपि चादो जग्ध् ॥४॥४॥१६॥

तादौ क्किति यपि चादे-र्जग्धादेशो विधीयते ॥
जग्धि प्रजग्ध्य जग्ध्वा च, पीयूषं मरणं जयेत् ॥१६॥

## घस्लृ सनद्यतनी घञचलि ॥४॥४॥१७॥

एषु सनादिषु घस्ल-रदेरादिश्यते ततः ॥
प्रात्तीति प्रघसो घासो, घसोऽघसज्जिघत्सति ॥१७॥

---

संशितम्—असिधारातीक्ष्णमित्यर्थः । व्रतविषयाभावे तु निशातः ॥ १३ ॥ स्पष्टम् ॥१ ॥ धीत', धीतवानिति ट्धे पाने इत्यस्य । प्रधाय इति ताद्यभावात् ॥१५॥ यपि चेति अदनम् , तीत्येव अद्यात् , कितीत्येव अत्तव्यम् ॥१६॥ घस्लृ अदने इत्यनेनैव सिद्धेऽदेः सन्नादिषु रूपान्तरनिवृत्त्यर्थं वचनम् ॥१७॥

## परोक्षायां नवा ॥४॥४॥१८॥

परोक्षायामदेर्घस्लृ-र्विकल्पेन विधीयते ॥
जघास जक्षतुर्जक्षु-रादतुराद्वराद च ॥१८॥

## वेर्वय् ॥४॥४॥१९॥

वेगो धातोः परोक्षायां, वयादेशो भवेन्नवा ॥
ऊयुर्वबुः पुरा वस्त्रं, कुविन्दा लक्षमूल्यकम् ॥१९॥

## ऋः शृदॄप्रः ॥४॥४॥२०॥

एषां भवेत् परोक्षाया-मृन्तो वा विशश्रतुः ॥
विशशृवान् विशिशीर्वान्, विदद्रतुर्निपप्रतुः ॥२०॥

## हनो वध आशिष्यञौ ॥४॥४॥२१॥

स्यादाशीर्विषये हन्ते-र्वधो नो ञिटि प्रत्यये ॥
वध्यात् सदाऽऽन्तरान् शत्रून्, घानिषीष्टेत्यजावितिं ॥२१॥

## अद्यतन्यां वाऽऽत्मने ॥४॥४॥२२॥

अद्यतन्यां हनो नित्यं, वधो वा स्यात्मनेपदे ॥
राक्षसानवधीद् राम आवधिष्टाहताहवे ॥२२॥

## इणिकोर्गाः ॥४॥४॥२३॥

गादेश इणिकोर्धात्वो-रद्यतन्यां विधीयते ॥
अगात् कश्चिद् हिताद् दूरं, हितं च कश्चिदध्यगात् ॥२३॥

---

स्पष्टे ॥१८॥१९॥ पक्षे विशशरतुः, विददरतुः, निपपरतुः ॥२०॥
स्पष्टं सूत्र-त्रयम् ॥२१॥२२॥२३॥

## णावज्ञाने गमुः ॥४॥४॥२४॥

अज्ञानार्थकयोर्धात्वो-रिणिकोर्णौ गमुर्भवेत् ॥
सद्धर्मो गमयेत् स्वर्गं, तथाऽधिगमयेच्छिवम् ॥२४॥

## सनीङश्च ॥४॥४॥२५॥

सनीङो गमुरज्ञाना-र्थकयोरिणिकोस्तथा ॥
अधिजिगांसते ग्रामं, जिगमिषति सत्वरम् ॥२५॥

## गाः परोक्षायाम् ॥४॥४॥२६॥

परोक्षाविषये गाः स्या-दिङो धातोः सनातनः ॥
अधिजगे जगत्तत्त्वं, तत्त्ववित्तत्त्वलिप्सया ॥२६॥

## णौ सन्ङे वा ॥४॥४॥२७॥

इङो धातोः परे सन्ङे, णौ गादेशो विभाषया ॥
शिष्यमध्यापिपच्छास्त्र-मुपाध्यायोऽध्यजीगपत् ॥२७॥

## वाऽद्यतनीक्रियातिपत्योर्गीङ् ॥४॥४॥२८॥

इङः क्रियातिपत्तौ चा-द्यतन्यां गीङ् विभाषया ॥
अध्यगीष्ट तथाऽध्यैष्ट, चाध्यैष्यता-ध्यगीष्यत ॥२८॥

## अड् धातोरादिर्ह्यस्तन्यां चामाङा ॥४॥४॥२९॥

ह्यस्तन्यामद्यतन्याश्च, क्रियातिपत्तिके तथा ॥

---

अज्ञान इति किम् ? अर्थान् प्रत्याययति ॥२४॥ एवं मातुरधिजिगमिषतीत्यादि ॥२५॥ स्पष्टम् ॥२६॥ एव मधिजिगापयिषति, अध्यापिपयिषति । णाविति अधिजिगांसते । सन्ङ इति अध्यापयति ॥२७॥ स्पष्टम् ॥२८॥ एवम् अयासीत् । अमाङेति मा स्म कार्षीत् । धातोरिति प्रायाः ॥२९॥

धातोरादिर्भवेदड् माङ्-योगे नोऽयाद्ग्यास्यद्दाः ? ॥२९॥

## एत्यस्तेर्वृद्धिः ॥४॥४॥३०॥

ह्यस्तन्यां विषये वृद्धिः, स्यादस्तेरिणिकोस्तथा ॥
आदेर्न माङ्समायोगेऽ-ध्यायन्नास्तां तथाऽऽयन्नाः ? ॥३०॥

## स्वरादेस्तासु ॥४॥४॥३१॥

ह्यस्तन्यामद्यतन्याश्च, वृद्धिः क्रियातिपत्तिके ॥
स्वरादिर्नच माङ्योगे, आटीदैषिष्यदौञ्झदाः ? ॥३१॥

## स्ताद्यशिताऽत्रोणादेरिट् ॥४॥४॥३२॥

धातोः परस्य सादेश्च, तादेश्चाशित आदिरिट् ॥
त्रोणाद्योर्नतु सम्भूया - ल्लविता च लविष्यति ॥३२॥

## तेर्ग्रहादिभ्यः ॥४॥४॥३३॥

ग्रहादिभ्यः परस्य स्ता - द्यशितस्तेरिडादिकः ॥
भणिती रणितिः शान्ति - रन्दोलितिश्च कम्पितिः ॥३३॥

## गृह्णोऽपरोक्षायां दीर्घः ॥४॥४॥३४॥

ग्रहेर्यो विहितस्तस्ये - टो दीर्घः स्याद्भवेन्न च ॥
परोक्षायां ग्रहीताऽस्त्रं, ग्रहीष्यति तथाऽग्रहीत् ॥३४॥

---

अमाङ्स्त्येव मा स्म ते यन् ॥३०॥ अमाङ्स्त्येव मा सोऽटीत् ॥३१॥ २९-३०-३१ इति सूत्रत्रये आः इति उद्धारसूचकं श्लोकान्तेऽवसेयम् ॥ स्तादीति किम् ? भूयात् । अशित इति आस्से । अत्रोणादेरिति किम् ? शस्त्रम्, वत्सः, हस्तः ॥३२॥ सष्टम् ॥३३॥ अपरोक्षायामिति किम् ? जगृहिव ॥३४॥

वृतो नवाऽनाशीः सिच्परस्मै च ॥४॥४॥३५॥

वृगो वृङ ऋदन्ताच्च, दीर्घो वेटो न चाऽऽशिषि ॥
सिच्परस्मैपरोक्षायां, वरीता वरिता तथा ॥३५॥

इट् सिजाशिषोरात्मने ॥४॥४॥३६॥

सिजाशिषोरिडादिर्वा, वृतः स्यादात्मनेपदे ॥
अवरीष्टावृतास्तीर्ष्टा – स्तरिष्ट प्रावृषीष्ट च ॥३६॥

संयोगादृ ऋतः ॥४॥४॥३७॥

संयोगादृ ऋतदन्तात् स्यात्, सिजाशीरात्मनेपदे ॥
आदिरिड् वाऽस्मृषाताश्चा – स्मरिषातां स्मृषीष्ट च ॥३७॥

धूगौदितः ॥४॥४॥३८॥

स्ताद्यशित इडादिर्वा, धूगौदिद्भ्यो भवेद्यथा ॥
धविता तर्पिता धोता, त्रप्ता तर्प्ता च गोपिता ॥३८॥

निष्कुषः ॥४॥४॥३९॥

इट् स्ताद्यशित आदिर्वा, कुषो निष्पूर्वकात् परम् ॥
निष्कोषिता च निष्कोष्टा, कोषिता च प्रकोषिता ॥३९॥

क्तयोः ४॥४॥४०॥

निष्कुष आदिरिड् नित्यं, स्यात् क्तयोः परयोस्ततः ॥

---

एवं प्रावरीता, प्रावरिता, तितरीषति, ततरिषति। परोक्षादिवर्जनात्– ववरिथ, तेरिथ, प्रावरिषीष्ट, आस्तरिषीष्ट, प्रावारिषुः, आस्तारिषुः ॥३५॥ एवं प्रावरिषीष्ट। आत्मन इति प्रासारीत् ॥३६॥ एवं स्मरिषीष्ट। संयोगादिति अकृत ॥३७॥ एवं गोप्ता ॥३८॥ सूत्रचतुष्कं व्यक्तार्थम् ॥३९॥४०॥४१॥४२॥

निष्कुषितस्तथा निष्कु-षितवान् मतिकर्कशः ॥४०॥

जॄव्रश्चः क्त्वः ॥४।४।४१॥

जॄव्रश्चिभ्यां परस्य क्त्वा-प्रत्ययस्यादिरिड् भवेत् ॥
जरित्वा च जरीत्वाऽपि, व्रश्चित्वा हितमाचरेत् ॥४१॥

ऊदितो वा ॥४।४।४२॥

ऊदितः परतो वा क्त्वा-प्रत्ययस्यादिरिड् भवेत् ॥
दान्त्वा शान्त्वा दमित्वा च, शमित्वाप्रमुखं ततः ॥४२॥

क्षुधवसस्तेषाम् ॥४।४।४३॥

आभ्यां क्तक्तवतुक्त्वामा-दिरिट् स्यात् स उपोषितः ॥
क्षुधितः क्षुधितवांश्चापि, क्षुधित्वोषितवांस्तथा ॥४३॥

लुभ्यञ्चेर्विमोहार्चे ॥४।४।४४॥

आभ्यां क्तक्तवतुक्त्वामा-दिरिड् भवेद् यथाक्रमम् ॥
विमोहनार्थपूजार्था-भ्यां लुभित्वा समञ्चितः ॥४४॥

पूङ्क्लिशिभ्यो नवा ॥४।४।४५॥

पूङ्क्लिशिभ्यः परेषां क्त-क्तवतुक्त्वां नवादिरिट् ॥
पवितश्च पवित्वा च, पूनः पूत्वा च पूतवान् ॥४५॥

---

एवम् उषित्वा ॥४३॥ एवं विलुभितः, विलुभितवान्, अञ्चितवान्, अञ्चित्वा। विमोहार्चे इति लुब्धो जाल्मः, उदक्तं जलम् ॥४४॥ एवं पवितवान्, क्लिष्टः, क्लिशितः, क्लिष्टवान्, क्लिशितवान्, क्लिष्ट्वा, क्लिशित्वा ॥४५॥

सहलुभेच्छरुषरिषस्तादेः ॥४॥४॥४६॥

एभ्यः पञ्चभ्य आदेरिट्, तादेः स्वाद्यशितो नवा ॥
सोढा च सहिता लोब्धा, लोभितैष्टा तथैषिता ॥४६॥

इवृध-भ्रस्ज-दम्भ-श्रि-यूर्णु-भर-ज्ञपि-सनि-
तनि-पति-वृद्-दरिद्रः सनः ॥४॥४॥४७॥

इवन्तेभ्य ऋधादिभ्यो, दरिद्रातेऋदन्ततः ॥
सन आदिर्भवेदिड् वा, कोऽप्यर्दिधिषतीर्त्सति ॥४७॥

ऋ-स्मि-पूङञ्जशौ-कॄ-गॄ-दृ-धृ-प्रच्छः
॥४॥४॥४८॥

ऋस्मिपूङञ्जशौकॄगॄ-दृधृप्रच्छिभ्य आदिरिट् ॥
सनश्चिकरिषत्येव, चिकरोषति को हितम् ॥४८॥

हनृतः स्यस्य ॥४॥४॥४९॥

हन्तेऋदन्तधातोश्च, परस्य स्यस्य चादिरिट् ॥
हनिष्यति रिपून् योऽसौ, करिष्यति सदासुखम् ॥४९॥

---

एवं रोढा, रोषिता, रेष्टुम्, रेषितुम् ॥४६॥ एवं दुद्यूषति, दिदेविषतीत्यादि ॥४७॥ एवम् अरिरिषति, सिस्मयिषते, पिपविषते, अञ्जिजिषति, अशिशिषते, जिगरीषति, आदिदरिषते, आदिधरिषते, पिपृच्छिषति ॥४८॥ स्पष्टम् ॥४९॥

## कृत–चृत–नृत–च्छृद–तृदोऽसिचः सादेर्वा ॥४॥४॥५०॥

एभ्योऽसिचः सकारादेः, स्ताद्यशितो नवादिरिट् ॥
कर्तिष्यन्ति च कर्त्स्यन्ति, नर्तिष्यति च नर्त्स्यति ॥५०॥

## गमोऽनात्मने ॥४॥४॥५१॥

गमः सादेर्भवेदिट् स्ता – द्यशितोऽनात्मनेपदे ॥
शं गमिष्यति शास्त्रस्या – धिजिगमिषिता स्वयम् ॥५१॥

## स्नोः ॥४॥४॥५२॥

स्नोः परस्यादिरिट् स्यात् स्ता – द्यशितोऽनात्मनेपदे ॥
प्रस्नविष्यति प्रास्नोष्ट, कर्मणि कुशलो जनः ॥५२॥

## क्रमः ॥४॥४॥५३॥

अनात्मनेपदे स्ताद्य – शितः स्यात् क्रम आदिरिट् ॥
प्रक्रंस्यते पराकर्तुं, प्रक्रमितुं क्रमिष्यति ॥५३॥

## तुः ॥४॥४॥५४॥

तुस्ताद्यशित आदिः स्या – दिट् क्रमोऽनात्मनेपदे ॥
क्रमिताऽऽक्रमिता वीरः, प्रक्रन्ता स्वपराक्रमात् ॥५४॥

---

एवम् चिचृत्सति, चिचर्तिषति, अच्छर्त्स्यत्, अच्छर्दिष्यत्, तितृत्सति, तितर्दिषति । असिच इति अकर्तीत् ॥ ५० ॥ अनात्मन इति संगंसीष्ट ॥५१॥ स्पष्टानि ॥५२॥५३॥५४॥

न वृद्भ्यः ॥४॥४॥५५॥

स्ताद्यशित इडादिर्नो, भवेद् वृदादिपञ्चकात् ॥
चेदात्मनेपदे नासौ, वत्स्यंति च विवृत्सति ॥५५॥

एकस्वरादनुस्वारेतः ॥४॥४॥५६॥

धातोरेकस्वराच्चानु - स्वारेत आदिरिड् नवै ॥
स्ताद्यशितो भवेत् पाताऽ - ऽधीत् पृथक् पृथग् जनः ॥५६॥

ऋवर्ण--श्र्यूर्णुगः कितः ॥४॥४॥५७॥

ऋवर्णान्ताच्च श्रेरूर्णो - श्चैकस्वरत आदिरिट् ॥
कितो न स्याद् वृतस्तीर्त्वो-र्णुत्वाश्रितः समाश्रितः॥५७॥

उवर्णात् ॥४॥४॥५८॥

एकस्वरादुवर्णान्ताद्, न भवेत् कित आदिरिट् ॥
युतो लूनो विलूनश्च, यविता लविता तथा ॥५८॥

ग्रह-गुहश्च सनः ॥४॥४॥५९॥

उवर्णान्तात्तथा चाभ्यां, न भवेत् सन आदिरिट् ॥
रुरूषति महारोषा - ज्जिघृक्षति जुघुक्षति ॥५९॥

स्वार्थे ॥४॥४॥६०॥

स्वार्थार्थस्य सनो नैव, स्यादादिरिट् जुगुप्सते ॥
तितिक्षते तथा दीदां - सते मीमांसते तथा ॥६०॥

---

एवं स्यन्त्स्यति, सिस्यन्त्सतीत्यादि ॥५५॥ स्पष्टम् ॥५६॥ एकस्वरादित्येव जागरितः । कित इति किम् ? वरिता ॥५७॥ स्पष्टानि ॥५८॥५९॥६०॥

डीय-श्व्यैदितः क्तयोः ॥४।४।६१॥

आदिरिट् क्तक्तवत्वोर्न, श्वैरैदिद्भ्यश्च डीयतेः ॥
डीनश्च डीनवान् शूनः, शूनवाँस्त्रस्तवाँस्तथा ॥६१॥

वेटोऽपतः ॥४।४।६२॥

विकल्पेटोऽपतो धातो - रेकस्वरात् क्तयोर्नवै ॥
आदिरिड् जायते रद्धो रद्धवान् पतितस्तथा ॥६२॥

सं-नि-वेरर्दः ॥४।४।६३॥

सं - नि - विभ्यः परादर्दे - र्नादिरिट् परयोः क्तयोः ॥
समर्णवान् समर्णश्च, न्यर्णो न्यर्णस्तथार्दितः ॥६३॥

अविदूरेऽभेः ॥४।४।६४॥

आदिरिडविदूरेऽर्थे, नाभेरर्दः क्तयोर्भवेत् ॥
अभ्यर्णवाँस्तथाऽभ्यर्णोऽ-भ्यर्दितः शीततोऽधनः ॥६४॥

वर्तेर्वृत्तं ग्रन्थे ॥४।४।६५॥

वृतेर्ण्यन्तात् परे क्ते स्याद् , वृत्तं ग्रन्थे निपातितः ॥
गुणश्च्छात्रेण वृत्तोऽपि, कुङ्कुमं वर्तितं चितम् ॥६५॥

धृष-शसः प्रगल्भे ॥४।४।६६॥

आभ्यां प्रगल्भ एवार्थे, क्तयोरादिर्नचेट् भवेत् ॥
विशस्तोऽपि भवेद् धृष्टो, विशसितश्च धर्षितः ॥६६॥

---

एवं त्रस्तः ॥ ६१ ॥ स्पष्टम् ॥ ६२ ॥ एवं व्यर्णवान् , ॥ ६३ ॥
स्पष्टं सूत्रत्रयम् ॥६४॥६५॥६६॥

## कृषः कृच्छ्र-गहने ॥४॥४॥६७॥

इड् न भवेत् क्तयोरादि – रनयोरर्थयोः कषेः ॥
गहनं काननं कष्टं, कष्टं कषितकाञ्चनम् ॥६७॥

## घुषेरविशब्दे ॥४॥४॥६८॥

आदिरिड् अविशब्दार्थाद्, घुषेर्न परयोः क्तयोः ॥
घुष्टा रज्जुश्च सम्बद्धा – वयवा घुष्टवाँस्तथा ॥६८॥

## बलिस्थूले दृढः ॥४॥४॥६९॥

क्तान्तस्य बलिनि स्थूले, चार्थे दृहेश्च दृंहतेः ॥
निपात्यते दृढः स्थूलो, बली दृहितदृंहिते ॥६९॥

## क्षुब्ध-विरिब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-फाण्ट-बाढ परिवृढं मन्थ-स्वर-मनस्-तमस्-सक्ता-स्पष्टा-नायास--भृश--प्रभौ ॥४॥४॥७०॥

क्षुब्धाद्या नव मन्थादि – ष्वर्थेषु क्रमशो यथा ॥
निपात्यन्तेऽनिटः क्तान्ताः, क्षुब्धं स्वान्तं विरिब्धतः ॥७०॥

## आदितः ॥४॥४॥७१॥

आदिरिड् न भवेद् धातो–रादितः परयोः क्तयोः ॥
मिन्नश्च मिन्नवाँश्चापि, स्विन्नश्च स्विन्नवाँस्तथा ॥७१॥

---

कष्टं दुःखम्, कष्टं दुरवगाहमिति ॥६७॥ अविशब्द इति किम्? अवघुषितं वाक्यम् ॥६८॥ दृढ इति उभयान्वयि ॥६९॥ विरिब्धतः स्वरात् स्वान्तं मनः क्षुब्धम्, एवं ध्वान्तं तमः, लग्नं सक्तम्, म्लिष्टमस्पष्टम्, फाण्टमनायाससाध्यम्, बाढं भृशम्, परिवृढः प्रभुः ॥७०॥ स्पष्टम् ॥७१॥

## नवा भावारम्भे ॥४।४।७२॥

भावारम्भे भवेद् धातो – रादित आदिरिड् नवा ॥
क्तयोर्हि भेदितं भिन्नं, प्रभिन्नश्च प्रभेदितः ॥७२॥

## शकः कर्मणि ॥४।४।७३॥

शकेः कर्मणि वा न स्या–दादिरिट् परयोः क्तयोः ॥
शक्तः किं शकितः कर्तुं, कुलालैः कलशोऽलसैः ॥७३॥

## णौ दान्त--शान्त--पूर्ण--दस्त--स्पष्ट--च्छन्न--ज्ञप्तम् ॥४॥४॥७४॥

क्तान्तानां वा दमादीनां सप्तैते णौ निपातिताः ॥
दान्तश्च दमितः शान्तः, शमितः पूर्णपूरितः ॥७४॥

## श्वस -जप- वम--रुष--त्वर--संघुषाऽऽस्वनामः ॥४॥४॥७५॥

अष्टभ्य एभ्य आदिरिट्, स्यान्नवा परयोः क्तयोः ॥
श्वस्तश्च श्वसितस्तूर्ण – स्त्वरितोऽभ्यमितस्तथा ॥७५॥

---

एवं प्रभिन्नवान्, प्रभेदितवान् ॥७२॥ सप्टम् ॥७३॥ एवं दस्तः दासितः, स्पष्टः स्पाशितः, छन्नः छादितः ज्ञप्तः ज्ञापितः ॥७४॥ एवं विश्वस्तवान्, विश्वसितवान् जप्तः जप्तवान्, जपितः जपितवान्, वान्तः वान्तवान्, वमितः वमितवान्, रुष्टः रुष्टवान्, रुषितः रुषितवात्, तूर्णवान्, त्वरितवान्, संघुष्टौ संघुपितौ हस्यौ, संघुष्टवान्, संघुपितवान्, आस्वान्तः आस्वनितः, आस्वान्तवान् आस्वनितवान्, अभ्यान्तः, अभ्यान्तवान्, अभ्यमितवान् ॥७५॥

**हृषेः केश--लोम--विस्मय--प्रतिघाते ॥४॥४॥७६॥**

केशाद्यर्थेषु हृष्धातो – रादिरिट् स्यान्नवा क्तयोः ॥
हृष्टाश्च हृषिताः केशा, दन्ता हृष्टश्च लोमभिः ॥७६॥

**अपचितः ॥४॥४॥७७॥**

अपात् चायेरिटोऽभावः, क्तान्तस्य जायते तथा ॥
चिश्च निपात्यते वाऽसा – वपचितोऽपचायितः ॥७७॥

**सृजि--दृशि--स्कृ--स्वराऽत्वतस्तृज्नित्यानिटस्थवः ॥४॥४॥७८॥**

थव आदिर्न वेट् सृज्दृशू – भ्यां स्कृगः स्वरतोऽत्वतः ॥
तृजि नित्यानिटः कुर्यात्, सस्रष्ठ च ससर्जिथ ॥७८॥

**ऋतः ॥४॥४॥७९॥**

ऋदन्तात् तृजि नित्यानिट्–रूपस्य थव आदिरिट् ॥
न स्याज्जहर्थ सस्मर्थ, सस्वरिथ बिभेदिथ ॥७९॥

**ऋ--वृ--व्ये--ऽद इट ॥४॥४॥८०॥**

उक्तधातुचतुष्केभ्यः, परस्य थव आदिरिट् ॥
ववरिथारिथ ब्रूयात्, संविव्ययिथ चादिथ ॥८०॥

---

एवं हृष्टो हृषितश्चैत्रः, लोमभिः हृषितमित्यपि ॥७६॥ स्पष्टम् ॥७७॥
अस्यार्थः–सृजिदृशिभ्यां स्कृगः स्वरान्तादत्वतश्च तृचि नित्यानिटो विहितस्य थव आदि रिट् वा न स्यादिति । एवं दद्रष्ठ, ददर्शिथ, सञ्चस्कर्थ, सञ्चस्करिथ, ययाथ, ययिथ, पपक्थ, पेचिथ. । तृज्नित्यानिट इति किम् ? ररन्धिथ, शिश्रयिथ । विहितविशेषणं किम् ? चकर्षिथ ॥७८॥ स्पष्टे ॥७९॥८०॥

स्क्रसृ-वृ-भृ-स्तु-द्रु-श्रु-स्त्रोर्व्यञ्जनादेः परोक्षायाः ॥४।४।८१॥

व्यञ्जनादेः परोक्षाया, आदिरिट् धातुमात्रतः ॥
स्यात् स्त्रादिसप्तकं त्यक्त्वा, स्क्रगश्च ददिवादयः ॥८१॥

घसेकस्वरातः क्वसोः ॥४।४।८२॥

घसेरेकस्वरादाद–न्ताच्च धातोः परं क्वसोः ॥
परोक्षाया इडादिः स्या–ज्जक्षिवान्नादिवाँस्तथा ॥८२॥

गम–हन–विदॢ–विश–दृशो वा ॥४।४।८३॥

परोक्षायाः क्वसोरादि–रिट् वा गमादिपञ्चकात् ॥
जग्मिवाँश्च जगन्वाँश्च, जघन्वान् जघ्निवाँस्तथा ॥८३॥

सिचोऽञ्जेः ॥४।४।८४॥

अञ्जेः परस्य जायेत, नित्यशः सिच आदिरिट् ॥
आञ्जीदाञ्जिषुराञ्जिष्टा–मसिच्यङ्क्ता तथाञ्जिता ॥८४॥

धूग्–सु–स्तोः परस्मै ॥४।४।८५॥

स्यात् परस्मैपदे धूग्सु–स्तुभ्यस्तु सिच आदिरिट् ॥
अधावीच्च तथाऽसावीत्, अस्तावीदप्यधोष्ट च ॥८५॥

---

एवं संचस्करिव, चिच्यियवहे । स्क्रिति किम् ? चकृव । स्त्रादिवर्जनात् सस्रुव, ववृव, ववृवहे, बभर्थ, तुष्टोथ, दुद्रोथ, शुश्रोथ, सुस्रोथ ॥८१॥ एवं ययिवान् । परोक्षाया इत्येव विद्वान् ॥८२॥ एवं विविदिवान्, विविद्वान्, विविशिवान्, विविश्वान्, ददृशिवान्, ददृश्वान् ॥८३॥ स्पष्टे ॥८४॥८५॥

यमि-रमि-नम्यातः सोऽन्तश्च ॥४।४।८६॥

आदन्तेभ्यस्तथाचैभ्य, इट् परस्मैपदे सिचः ॥
आदिः सोऽन्तश्च स्यादेषां, व्यरंसीद् रजनी खलु ॥८६॥

ईशीडः सेध्वेस्वध्वमोः ॥४।४।८७॥

ईशीड्भ्यां वर्तमानायाः, सेध्वयोः पञ्चमीद्वयोः ॥
स्वध्वमोश्चादिरिट् स्यात् त-दीशिष्वेडिध्वमीशिषे ॥८७॥

रुत्पञ्चकाच्छिदयः ॥४।४।८८॥

रुदादेः पञ्चतो व्यञ्ज-नादेः शितोऽय आदिरिट् ॥
रोदिति स्वपिति प्राणी-ति श्वसिति च जक्षिति ॥८८॥

दिस्योरीट् ॥४।४।८९॥

रुदादिपञ्चकाद् दिस्योः, स्याच्छितोरादिरीट् ततः ॥
अरोदीदस्वपीत् प्राणी-दरोदीरस्वपीस्तथा ॥८९॥

अदश्चाट् ॥४।४।९०॥

अत्ते रुत्पञ्चकाद् दिस्योः, स्याच्छितोरादिरट् ततः ॥
आददादस्तथाऽरोद-दरोदोऽस्वपदस्वपः ॥९०॥

संपरेः कृगः स्सट् ॥४।४।९१॥

संपरिभ्यां परस्य स्सट्. कृग आदिर्विधीयते ॥

---

एवम् अयंसीत्, अनंसीत्, अयासिष्टाम् ॥८६॥ एवम् ईशिध्वे, ईशिष्वम्, ईडिषे, ईडिध्वे, ईडिष्व ॥८७॥ अयिति किम् ? रुद्यात्, शित इति किम्? रोत्स्यति, स्वप्स्यति ॥८८॥ सूत्रत्रयं व्यक्तार्थम् ॥८९॥९०॥९१॥

संस्करोति कन्यां स्नेहात्, परिष्करोति संस्कृतम् ॥९१॥

## उपाद् भूषासमवायप्रतियत्नविकारवाक्याध्याहारे ॥४।४।९२॥

उपात् परस्य भूषादि-ष्वर्थेष्वादिः कृगो भवेत् ॥
स्सट् स उपस्कृतं भुङ्क्ते, कन्यामुपस्करोति सः ॥९२॥

## किरो लवने ॥४।४।९३॥

उपात् स्यात् किरतेरादिः, स्सट् स चेल्लवनार्थकः ॥
ते मद्रका उपस्कीर्य, लुनन्ति विभवार्थिनः ॥९३॥

## प्रतेश्च वधे ॥४।४।९४॥

प्रतेरुपाच्च हिंसायां, स्सडादिः किरतेर्भवेत् ॥
प्रतिस्कीर्णमुपस्कीर्णं, वा ह ते वृषलाऽस्तु वै ॥९४॥

## अपाच्चतुष्पात्-पक्षि-शुनि हृष्टान्नाश्रयार्थे ॥४।४।९५॥

उक्तकर्तरि चोक्तार्थे स्सडादिः किरतेरपात् ॥
हृष्टोऽपस्किरते गौर्वा, भक्ष्यार्थी कुक्कुटस्तथा ॥९५॥

## वौ विष्किरो वा ॥४।४।९६॥

विकिरतेः स्सडादिर्वा, पक्षिण्यर्थे निपात्यते ॥
विष्किरो विकिरः पक्षी, विकिरतीति विष्करः ॥९६॥

---

एवं तत्र न उपस्कृतम्, एधोदकमुपस्कुरुते, सोपस्कारं सूत्रम् ॥९२॥ लवन इति किम्? उपकिरति पुष्पम् ॥९३॥ एवं प्रतिचस्करे नखैः, वध इति किम्? प्रतिकीर्णं बीजम् ॥९४॥ एवम् आश्रयार्थी श्वाऽपस्किरते ॥९५॥ स्पष्टम् सूत्रत्रयम् ॥९६॥—

## प्रात् तुम्पतेर्गवि ॥४॥४॥९७॥

प्रात् तुम्पतेः स्सडादिः स्याद्, गवि कर्तरि नित्यशः ॥
प्रस्तुम्पति बलीवर्द-स्तरुस्तारं प्रतुम्पति ॥९७॥

## उदितः स्वरान्नोऽन्तः ॥४॥४॥९८॥

स्वरात् परो भवेन्नोऽन्तो, धातोः सदोदितस्ततः ॥
नन्दितो निन्दितः कश्चित्, कश्चिन्नन्दति निन्दति ॥९८॥

## मुचादितृफदृफगुफशुभोभः शे ॥४॥४॥९९॥

एषां स्वराद् भवेन्नोऽन्तः, शे परे मुञ्चति क्रुधा ॥
तुम्फति दृम्फतीदानीं, गुम्फत्युम्भति शुम्भति ॥९९॥

## जभः स्वरे ॥४॥४॥१००॥

जभेः स्वरात् परो नोऽन्तः, स्वरादौ प्रत्यये परे ॥
जम्भंजम्भं भवेज्जम्भो, जम्भयति च जम्भकः ॥१००॥

## रध इटि तु परोक्षायामेव ॥४॥४॥१०१॥

रधः स्वरात् परो नोऽन्तः, स्वरादौ प्रत्यये परे ॥
परोक्षायामिडादौ वै, रन्धयन्ति ररन्धिम ॥१०१॥

## रभोऽपरोक्षाशवि॥४॥४॥१०२॥

रभेः स्वरात् परो नोऽन्तः, स्वरादौ प्रत्यये परे ॥
परोक्षां च शवं त्यक्त्वा, सन्नारम्भयति श्रुतम् ॥१०२॥

---

-॥९७॥९८॥ एवं पिंशतीत्यादि ॥९९॥ स्पष्टम् ॥१००॥ परोक्षाया-मेवेति किम्? रधिता ॥ १०१ ॥ अपरोक्षाशवीति किम्? आरेभे, आरभते ॥१०२॥

## लभः ॥४॥४॥१०३॥

लभः स्वरात् परो नोऽन्तः, स्वरादौ प्रत्यये परे ॥
परोक्षां च शवं त्यक्त्वा, स लम्भयति लम्भकः ॥१०३॥

## आङो यि ॥४॥४॥१०४॥

आङो लभः स्वराद् यादौ, परे नोऽन्तो भवेत्ततः ॥
आलम्भ्याः गौस्तथाऽऽलम्भ्या, वडवा लभ्य ईश्वरः ॥१०४॥

## उपात् स्तुतौ ॥४॥४॥१०५॥

उपाल्लभः स्वराद् यादौ, परे नोऽन्तः स्तुतौ भवेत् ॥
विद्या सदोपलम्भ्या स्या-दुपलभ्या कथा तथा ॥१०५॥

## ञिख्णमोर्वा ॥४॥४॥१०६॥

लभः स्वरात् परो नोऽन्तो, ञौ ख्णमि च भवेन्नवा ॥
लम्भं लम्भं तथाऽलाभि, लाभं लाभमलम्भि च ॥१०६॥

## उपसर्गात् खल्घञोश्च ॥४॥४॥१०७॥

उपसर्गाल्लभो नोऽन्तः खल्घञोर्ञिख्णमोः स्वरात् ॥
दुष्प्रलम्भं प्रलम्भश्च, प्रालम्भि लाभलम्भकैः ॥१०७॥

## सुदुर्भ्यः ॥४॥४॥१०८॥

समस्तव्यस्तसुदुर्भ्यां, लभः स्वरान्नु खल्घञोः ॥
स्यान्नोऽन्तोऽतिसुलम्भं य-दतिदुर्लम्भमाभवेत् ॥१०८॥

---

सूत्रचतुष्कं स्पष्टम् -॥१०३॥१०४॥१०५॥१०६॥ एवं प्रलम्भं प्रलम्भम् ॥१०६॥ एषमतिसुदुर्लम्भम् । उपसर्गादित्येव सुलभम् ॥ १०८ ॥

## नशो धुटि ॥४॥४॥१०९॥

नशेः स्वरात् परो नोऽन्तो, धुडादौ प्रत्यये भवेत् ॥
नंष्टा च नशिता नंष्टुं, नङ्क्ष्यति च निनङ्क्षति ॥१०९॥

## मस्जेः सः ॥४॥४॥११०॥

मस्जेः स्वरात् सकारस्य, भवेन्नोऽन्तो धुडादिके ॥
मङ्क्ता मङ्क्तुं तथाऽमाङ्क्षीत्, मग्नो मक्त्वा च मज्जनम्

## अः सृजिदृशोऽकिति ॥४॥४॥१११॥

अनयोः स्वरतोऽदन्तो, धुडादौ प्रत्ययेऽकिति ॥
स्रष्टा द्रष्टुं च स्रष्टव्यं, द्रष्टा सर्जनदर्शने ॥१११॥

## स्पृशादिसृपो वा ॥४॥४॥११२॥

स्पृश्-मृश्-कृषां तृपश्चैव, दृपः सृपः स्वरात् परः ॥
धुडादावकिति स्याद्वा-ऽदन्तः स्प्रष्टादि साधयेत् ॥११२॥

## ह्रस्वस्य तः पित्कृति ॥४॥४॥११३॥

ह्रस्वान्तस्य भवेत्तोऽन्तो, धातोः पित्कृति प्रत्यये ॥
पुण्यकृत् स समागत्य, जगज्जेताऽभवत् स्तुतः ॥११३॥

## अतो म आने ॥४॥११४॥

धातोर्हि विहिते आने, मोऽन्तो भवेदतः परः ॥

---

स्पष्टे ॥१०९॥११०॥ अकितीति किम् ? सृष्टः, दृष्टः, सिसृक्षति, दिदृक्षति ॥१११॥ आदिपदात् स्पर्ष्टा, म्रष्टा, मर्ष्टा, कर्ष्टा, क्रष्टा, त्रप्ता, तर्प्ता, द्रप्ता, दर्प्ता, स्रप्ता सर्प्ता ॥११२॥ ह्रस्वस्येति किम् ? ग्रामणीः, कृतीति किम् अजुहवुः ॥११३॥ स्पष्टम् ॥११४॥

पचमानश्शयानश्चेद्, नैकं कार्यं प्रसाधयेत् ॥११४॥

## आसीनः ॥४॥४॥११५॥

आस्तेर्धातोः परस्यान-स्यादेरीवँ निपात्यते ॥
आसीनो यद्युदासीन, उपासीनः कथं भवेत् ॥११५॥

## ॠतां क्ङितीर् ॥४॥४॥११६॥

ॠकारान्तस्य धातोः स्या-दॄत इर् क्ङिति प्रत्यये ॥
तीर्णं दीर्णं तथाऽऽस्तीर्णं, किरति च चिकीर्षति ॥११६॥

## ओष्ठ्यादुर् ॥४॥४॥११७॥

धातोरोष्ठ्यात् परस्य स्या-दॄतः क्ङित्युर् बुभूर्षति ॥
पूर्तः पुरौ पुरः पूश्च मुमूर्षति बुबूर्षते ॥११७॥

## इसासः शासोऽङ्-व्यञ्जने ॥४॥४॥११८॥

शास्तेरवयवस्यासो-ऽङि क्ङिति व्यञ्जनादिके ॥
इस् भवेदशिषच्छिष्टः, शास्ता शास्त्रं प्रशास्ति सन् ॥११८॥

## क्वौ ॥४॥४॥११९॥

शास्तेरवयवस्यासः, स्थाने क्वौ प्रत्यये परे ॥
इसादेशो विधातव्य, आर्यशी श्चैव मित्रशीः ॥११९॥

---

एवमप्यासीनः ॥११५॥ क्ङितीति किम् ? तरति ॥ ११६ ॥ स्पष्टम् ॥११७॥ अङ्व्यञ्जन इति शासति ॥११८॥ सूत्रद्वयं स्पष्टम् ॥ ११९॥

## आङः ॥४॥४॥१२०॥

आङः परस्य शासासः, स्थाने क्वावेव कार्य इस् ॥
सदाशीः सन् सदाशास्ते, आशीर्वादो हि सिध्यति ॥१२०॥

## य्वोः प्वय्व्यञ्जने लुक् ॥४॥४॥१२१॥

पौ य्वर्जव्यञ्जनादौ च, परे य्वोर्लुक् भवेत्ततः ॥
क्नोपयोति तथा क्ष्मातं, कण्डूर्लोलूश्च सेव्यते ॥१२१॥

## कृतः कीर्तिः ॥४॥४॥१२२॥

स्यात् कीर्त् इत्ययमादेशः, कृतणित्यस्य नित्यशः ॥
कीर्तयन्ति शुभां कीर्तिं, सन्तः परोपकारिणः ॥१२२॥

इति चतुर्थः पादः ॥

चतुर्थोऽध्यायः परिपूर्णतामितः ॥

---

—॥१२०॥ एवं—क्ष्मापयति इत्यादि ॥१२१॥ सूत्रे कीर्तिरिति इकारान्त निर्देशो मङ्गलार्थः ॥ १२२ ॥

॥ इति चतुर्थः पादः ॥

इति चतुर्थोऽध्यायः समाप्तः ॥

# अथ पञ्चमोऽध्यायः : ॥

## आतुमोऽत्यादिः कृत् ॥५॥१॥१॥

धातोर्विधीयमानः स्याद्, वक्ष्यमाणो नु प्रत्ययः ॥
आतुमस्त्यादिवर्जः 'कृत्', घनघात्योऽपि वुध्यते ॥१॥

## वहुलम् ॥५॥१॥२॥

अर्थाद् यथोक्तनिर्दिष्टा-दन्यत्रापि च कृद् भवेत् ॥
वहुलं मोहनीयं तद्, येनात्मा मुह्यति भ्रमात् ॥२॥

## कर्तरि ॥५॥१॥३॥

अर्थविशेषनिर्देशं, विना कर्तरि कृद् भवेत् ॥
कारकः पाचकः कर्ता, वुधः पन्त्रश्च नन्दनः ॥३॥

## व्याप्ये घुरकेलिमकृष्टपच्यम् ॥५॥१॥४॥

स्युः शब्दः कृष्टपच्यश्च, प्रत्ययौ घुरकेलिमौ ॥
व्याप्ये कर्तरि संसारो, भङ्गुरश्च पचेलिमः ॥४।

## सङ्गतेऽजर्यम् ॥५॥१॥५॥

कर्तरि सङ्गतेऽजर्यं, नञ्पूर्वाज्जीर्यतेश्च ये ॥
निपात्यतेऽजरं वस्त्र-मजर्य्यमार्य्यसङ्गतम् ॥५॥

## रुच्याव्यथ्यवास्तव्यम् ॥५॥१॥६॥

रुच्यान्यथ्यवास्तव्य-त्रयमेतन्निपात्यते ॥

---

अत्यादिरिति किम् ? प्राणिस्ते ॥१॥ एवं पादहारकः, सम्प्रदानमित्यादि ॥२॥ सष्टम् ॥ ३॥ एवं कृष्टपच्याः शालयः ॥४॥ स्पष्टे ॥५॥६॥

कर्तरि रुच्यमव्यथ्यं, वास्तव्येनाप्यते क्वचित् ॥६॥

भव्य-गेय-जन्य-रम्या-ऽऽपात्या-ऽऽप्लाव्यं नवा ॥५॥१॥७॥

भव्याद्याः षड् निपात्यन्ते, कर्तरि वा स भव्यहृत् ॥
भव्यं गेयं करोत्येव, गेयो रम्यः सुखाकरः ॥७॥

प्रवचनीयादयः ॥५॥१॥८॥

अनीयप्रत्ययान्ता वा, कर्तर्येते निपातिताः ॥
सता प्रवचनीयः प्र-वचनीयः स आत्मनः ॥८॥

श्लिष-शीङ्-स्था-ऽऽस-वस-जन-रुह-ज-भजेः क्तः ॥५॥१॥९॥

एभ्यः क्तः प्रत्ययो ज्ञेयो, विकल्पेनैव कर्तरि ॥
आश्लिष्टो रमणीं चैत्रः, साऽऽश्लिष्टा तेन कामिनी ॥९॥

आरम्भे ॥५॥१॥१०॥

आरम्भार्थकधातोः क्तो, विहितो वा स कर्तरि ॥
भवेत्तत् प्रकृतास्ते तं, कटं स प्रकृतश्च तैः ॥१०॥

गत्यर्थाकर्मकपिबभुजेः ॥५॥१॥११॥

गत्यर्थाकर्मकेभ्यश्च, पिबतेर्भुंजितस्तथा ॥

---

एवं जन्यः, रम्यः, आपात्यः, आप्लाव्यः, पक्षे जन्यम्, रम्यम्, आपात्यम्, आप्लाव्यम् ॥७॥ सत्पुरुषेण आत्मा प्रवचनीयः, स सत्पुरुषः आत्मनः प्रवचनीय इति, एवम् उपस्थानीयः शिष्यो गुरोः, उपस्थानीयः शिष्येण गुरुरित्यादि॥८॥एवं शीङ्प्रभृतेरवसेयम् ॥९॥ स्पष्टम् ॥१०॥ एवम्-

जायते कर्तरि क्तो वा, गताः शिष्या उपाश्रयम् ॥११॥

## अद्यर्थाच्चाधारे ॥५॥१॥१२॥

गत्यार्थादिस्तथाऽद्यर्था–द्धातोः क्तोः जायते नवा ॥
आधारे जग्धमस्येदं, जग्धं तेनेदमित्यपि ॥१२॥

## क्त्वा–तुमं भावे ॥५॥१॥१३॥

क्त्वातुमम इत्येते, भावे धात्वर्थमात्रतः ॥
स्युः कृत्वा कर्तुमुच्चात्मा, कारंकारं प्रयाति शम् ॥१३॥

## भीमादयोऽपादाने ॥५॥१॥१४॥

साधवः स्युरपादाने, शब्दा भीमादयः समे ॥
बिभेत्यस्मात् परो युद्धे, बली भीमो भयानकः ॥१४॥

## सम्प्रदानाच्चान्यत्रोणादयः ॥५॥१॥१५॥

सम्प्रदानादपादाना–च्चान्यत्र स्युरुणादयः ॥
साधनीया यथासाध्यं, कारुर्वायुः कषिस्तनु ॥१५॥

## असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः ॥५॥१॥१६॥

स्यादुत्सर्गोऽसरूपो वा–ऽपवादे प्राक् क्तिप्रत्ययात् ॥
ज्ञो ज्ञाता ज्ञायको गोदो, रक्षितं रक्षणं कृतिः ॥१६॥

---

आसितोऽसौ, आसितं तैः, पीताः पयः, पीतं पयः, भुक्तास्ते, इदं तैर्भुक्तम् ॥११॥ एवम् इदं तेषां यातम्, तैर्यातम् इत्यादि ॥१२॥ सूत्रत्रयं व्यक्तार्थम् ॥१३॥१४॥१५॥ अस्यायमर्थः, इतः सूत्रादारभ्य ‘ स्त्रियां क्तिः ’ ।५।३।९१। इत्यतः प्राग् योऽपवादस्तद्विषयेऽपवादेनासमानरूपः औत्सर्गिकः प्रत्ययो वा स्यात् ॥१६॥

## ऋवर्ण-व्यञ्जनाद् घ्यण् ॥५॥१॥१७॥

व्यञ्जनान्तादृवर्णान्ता-द्धातोर्घ्यण् प्रत्ययो भवेत् ॥
कार्य्यं हार्य्यं तथा धार्य्यं, पाक्यं वाक्यं वचस्विनः ॥१७॥

## पाणि-समवाभ्यां सृजः ॥५॥१॥१८॥

पाणेः समवपूर्वाच्च, सृजेर्घ्यण् प्रत्ययो भवेत् ॥
रज्जुः समवसर्ग्याऽपि, पाणिसर्ग्या न किं भवेत् ? ॥१८॥

## उवर्णादावश्यके ॥५॥१॥१९॥

द्योत्य आवश्यके धातो-र्घ्यणुवर्णान्ततो भवेत् ॥
सताऽन्तःकरणं पाव्यं, लाव्यः पापभरः परः ॥१९॥

## आसु-यु-वपि-रपि-त्रपि-डिपि-दभि-चम्यानमः ॥५॥१॥२०॥

सुग्-नम्भ्यामाङ्युताभ्यां घ्यण्, यौत्याद्यष्टकतस्तथा ॥
आसाव्यं याव्यमाचाम्य-मानाम्यं स्युस्तथाऽपरे ॥२०॥

## वाऽऽधारेऽमावास्या ॥५॥१॥२१॥

वसतेर्घ्यणमापूर्वाद्, ह्रस्वश्च स्याद्विभाषया ॥
आधारेऽर्थे त्वमावस्याऽऽ-मावास्या तिमिरप्रिया ॥२१॥

## संचाय्य-कुण्डपाय्य-राजसूयं क्रतौ ॥५॥१॥२२॥

एते त्रयः क्रतावर्थे घ्यणन्ताः स्युर्निपातिताः ॥

---

स्पष्टे ॥१७।१८॥ एवमवश्यपाव्यम् ॥१९॥ एवं वाप्यम्, राप्यम्, लाप्यम्, अपत्राप्यम्, डेप्यम् दाभ्यम् ॥२०॥ सूत्रत्रयं व्यक्तम् ॥२१॥२२॥--

संचाय्यः कुण्डपाय्यश्च, राजसूयं क्रतुर्मतः ॥२२॥

प्रणाय्यो निष्कामासम्मते ॥५।१।२३॥

निष्कामेऽसम्मते चार्थे, ध्यणायौ स्तो नु णान्वियः ॥
सन् प्रणाय्यो भवेच्छिष्यो-ऽसन् प्रणाय्यो भवेत् खलः ॥२३॥

धाय्या-पाय्य-सान्नाय्य-निकाय्यमृङ्-मान-हवि-
र्निवासे ॥५।१।२४॥

धाय्यादयश्चतुश्शब्दा, ऋगाद्यर्थे यथाक्रमम् ॥
ध्यणन्ता हि निपात्यन्ते, धाय्या ऋगिति बुध्यताम् ॥२४॥

परिचाय्योपचाय्यानाय्यसमूह्यचित्यमग्नौ ॥५।१।२५॥

एते पञ्च निपात्यन्ते-ऽग्न्यावर्थे त्वत्रसम्मताः ॥
परिचाय्योपचाय्याना-य्यसमूह्याश्च चित्यकः ॥२५॥

याज्या दानर्चि ॥५।१।२६॥

ध्यण् दानर्च्यभिधेयायां, यजतेः करणे भवेत् ॥
गत्वाभावोऽन्यतो याज्या, दानऋक् कथ्यते बुधैः ॥२६॥

तव्यानीयौ ॥५।१।२७॥

तव्यानीयौ भवेतां द्वौ, प्रत्ययौ धातुतः परौ ॥
कर्तव्यः करणीयश्च, संयमः सुखमिच्छता ॥२७॥

य एचातः ॥५।१।२८॥

स्वरान्ताद्धातुतो यः स्या-दन्त्याकारस्य चेद् भवेद् ॥

---

—॥२३॥ एवं पाय्यं मानम् , सान्नाय्यं हविः, निकाय्यो निवासः ॥२४॥
—सूत्रचतुष्कं स्पष्टम् ॥२५॥२६॥२७॥२८॥

दित्स्यं धित्स्यं तथा चेयं, नव्यं देयं यथायथम् ॥२८॥

## शकि-तकि-चति-यति-शसि-सहि-यजि-भजि-पवर्गात् ॥५॥१॥२९॥

शक्यादितः पवर्गान्त-धातुतश्चापि यो भवेत् ॥
शक्यं निरोद्धुमभ्यास-वैराग्याभ्यां मनश्चलम् ॥२९॥

## यमि-मदि-गदोऽनुपसर्गात् ॥५॥१॥३०॥

स्यादेभ्योऽनुपसर्गेभ्यो, धातुभ्यो नु यप्रत्ययः ॥
यम्यं मद्यं तथा गद्य-मायाम्यमुपसर्गतः ॥३०॥

## चरेराङस्त्वगुरौ ॥५॥१॥३१॥

नोपसर्गाच्चरेर्यः स्या-दाङ्पूर्वाच्चगुरौ भवेत् ॥
आचार्यादिशतो देश, अचार्यं चर्यमुत्तमैः ॥३१॥

## वर्योपसर्यावद्यपण्यमुपेयर्तुमतीगर्ह्यविक्रेय ।५।१।३२।

वर्यादयश्चतुश्शब्दा, उपेयाद्यर्थकाः क्रमात् ॥
यान्ता निपातिता वर्या, कन्या पण्या पयस्विनी ॥३२॥

## स्वामि-वैश्येऽर्यः ॥५॥१॥३३॥

अर्तेः स्वामिनि वैश्ये च, वाच्ये यः प्रत्ययो भवेत् ॥
अर्यः स्वामी तथा वैश्य, आर्यः सदा सदाचरन् ॥३३॥

---

एवं तक्यम्, चत्यम्, यत्यम्, शस्यम्, सह्यम्, यज्यम् भज्यम्, तप्यम्, गम्यम् ॥२९॥ स्पष्टे ॥३०॥३१॥ एवम् उपसर्या गौः, अवद्यं गर्ह्यम् ॥३२॥ सूत्रत्रयं स्पष्टम् ॥३३॥—

## वह्यं करणे ॥५।१।३४॥

करणे वहतेर्धातोः, प्रत्ययो यो भवेत्ततः ॥
जना वहन्त्यनेनेति, वह्यं शकटमुच्यते ॥३४॥

## नाम्नो वदः क्यप् च ॥५।१।३५॥

वदः क्यप् प्रत्ययो यश्च, नामतो नोपसर्गतः ॥
ब्रह्मोद्यं ब्रह्मवद्यञ्च, मवाद्यं वाद्यमन्यथा ॥३५॥

## हत्याभूयं भावे ॥५।१।३६॥

हत्याभूयौ परौ नाम्नो-ऽनुपसर्गात् क्यबन्तकौ ॥
भावे साधू गतो देव-भूयं स ब्रह्महत्यका ॥३६॥

## अग्निचित्या ॥५।१।३७॥

स्त्रीभावेऽग्नेः पराच्चेः स्यात् प्रत्ययः क्यप् सदर्थकः ॥
अग्नेश्चयनमर्थज्ञै-रग्निचित्या निगद्यते ॥३७॥

## खेय-मृषोद्ये ॥५।१।३८॥

साधू खेय-मृषोद्यौ द्वौ, क्यबन्तौ भवतस्ततः ॥
मृषोद्यते मृषोद्यं त-दुत्खेयं खन्यते तथा ॥३८॥

## कुप्य-भिद्योध्य-सिध्य-तिष्य-पुष्य-युग्या-ज्य-सूर्यं नाम्नि ॥५।१।३९॥

एते नव निपात्यन्ते, क्यबन्ता नाम्नि नित्यशः ॥

---

–॥३४॥३५॥भाव इति किम्? श्वघात्या सा ॥३६॥ स्पष्टे॥३७॥३८॥ भिद्य उध्यश्च नदः, सिध्यः तिष्यः पुष्यः नक्षत्रम्, युग्यं वाहनं गजाश्वादि, आज्यं

कुप्यं गोपायितुं योग्यं, धनं गोपाय्यमन्यथा ॥३९॥

दृ-वृग्-स्तु-जुषेति-शासः ॥५॥१॥४०॥

एभ्यः षड्भ्योऽपि धातुभ्यः, क्यप् संजायेत प्रत्ययः ॥
प्रावृत्यः स्तुत्य आदृत्यो, जुष्य शिष्यस्तथेत्यकः ॥४०॥

ऋदुपान्त्यादकृपिचृदृचः ॥५॥१॥४१॥

ऋकारोपान्त्यधातोः क्यप्, कृप्यादित्रितयान्यतः ॥
वृत्यं वृध्यं तथा कल्प्यं, चर्च्यमर्च्यं सलक्षणम् ॥४१॥

कृ-वृषि-मृजि-शंसि-गुहि-दुहि-जपो वा ॥५॥१॥४२॥

स्यादेभ्यः सप्तधातुभ्यः, क्यप्प्रत्ययो विभाषया ॥
कृत्यं कार्यं सदा वृष्यं, वचनममृतोपमम् ॥४२॥

जि-विपू-न्यो हलि-मुञ्ज-कल्के ॥५॥१॥४३॥

जेः पूनीभ्यां विपूर्वाभ्यां, संभवेत् कर्मसु क्रमात् ॥
क्यप् हलिमुञ्जकल्केषु, जित्यो हलिर्बली बलात् ॥४३॥

पदास्वैरिबाह्यपक्ष्ये ग्रहः ॥५॥१॥४४॥

पदाद्यर्थचतुष्के स्यात्, क्यप्प्रत्ययो ग्रहेस्ततः ॥
प्रगृह्यं पदमुन्मत्ता, जना गृह्या न स्वैरिणः ॥४४॥

---

घृतम्, सूर्य आदित्यः ॥३९॥ स्पष्टं ॥४०॥४१॥ एवं वर्ध्यम्, मृज्यम्, मार्ग्यम्, शस्यम्, शंस्यम्, गुह्यम्, गोह्यम्, दुह्यम्, दोह्यम्, जप्यम्, जाप्यम् ॥४२॥ एवं विपूयो मुञ्ज, विनीयः कल्कः। हलि-मुञ्ज-कल्क इति किम्? जेयम्, विपव्यम्, विनेयम् ॥४३॥ एवं ग्रामगृह्या बाह्येत्यर्थः। गुणगृह्या पक्ष्याः ॥ ४४ ॥

## भृगोऽसंज्ञायाम् ॥५॥१॥४५॥

भृगा धातोरसंज्ञायां, क्यप् प्रत्ययो भवेत्ततः ॥
अन्नवस्त्रादिना पोष्यो, भृत्यो भार्या परिग्रहः ॥४५॥

## समो वा ॥५॥१॥४६॥

संपूर्वात् स्याद् भृगो धातोः, क्यप् प्रत्ययो विभाषया ॥
यः सम्भृत्यः स सम्भार्य-स्तुल्यार्थत्वेन सम्मतः॥४६॥

## ते कृत्याः ॥५॥१॥४७॥

प्रोक्ताः कृत्संज्ञका एते, घ्यण्-तव्या-नीय-य-क्यपः ॥
कार्यं कर्तव्यमानेय-मास्तिक्यं जिनदैवते ॥ ४७ ॥

## णक-तृचौ ॥५॥१॥४८॥

धातोर्णकतृचौ स्यातां, प्रत्ययौ कर्तरि ध्रुवम् ॥
पाचकः पाठकः पक्ता, भविता शासिता तथा ॥४८॥

## अच् ॥५॥१॥४९॥

धातोरच् प्रत्ययः कामं, कर्तरि जायते ततः ॥
करः पचो हरो गङ्गा-धरो राजा महीधरः ॥४९॥

## लिहादिभ्यः ॥५॥१॥५०॥

लिहादिगणसंस्थेभ्यो, धातुभ्योऽच् प्रत्ययो भवेत् ॥
लेहः शेषस्तथा देवो, नदी देवी तरी दरी ॥५०॥

---

सूत्रनवकमतिरोहितार्थम् ॥४५॥४६॥४७॥४८॥४९॥५०॥-

## ब्रुवः ॥५॥१॥५१॥

ब्रूगो धातोर्भवेन्नित्यं, ब्रुव इत्यचि प्रत्यये ॥
आत्मानं ब्राह्मणं ब्रूते, जनः स ब्राह्मणब्रुवः ॥५१॥

## नन्द्यादिभ्योऽनः॥५॥१॥५२॥

नन्द्यादिगणवर्तिभ्यो, धातुभ्यः स्यादनस्ततः ॥
नन्दनो मदनः सर्व-दमनश्च जनार्दनः ॥ ५२ ॥

## ग्रहादिभ्यो णिन् ॥५॥१॥५३॥

एभ्यो णिन् स्याद् ग्रहादिभ्यः, प्रत्ययः शुद्धप्रत्ययः ॥
ग्राही बलात् परस्वस्य, स्थायी न स्याज्जगत्त्रये ॥५३॥

## नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः॥५॥१॥५४॥

प्रीमुखेभ्यस्तथा नाम्यु-पान्त्येभ्यः स्यात् कप्रत्ययः ॥
ककारः कित्त्वकार्य्याय, ज्ञो जनो विबुधप्रियः ॥५४॥

## गेहे ग्रहः ॥ ५॥१॥५५॥

गेहेऽर्थे स्याद् ग्रहेर्धातोः प्रत्ययः कः ? कप्रत्ययः ॥
न गृहं गृहमित्याहु-र्गृहिणी गृहमुच्यते ॥५५॥

## उपसर्गादातो डोऽश्यः ॥५॥१॥५६॥

उपसर्गात् पराच्छ्यैडो, वर्जादादन्तधातुतः ॥
डः प्रत्ययो भवेदाह्वः, मह्वः प्रस्थः सुरस्तथा ॥५६॥

---

-॥५१॥५२॥५३॥ एवं विक्षिपः, किरः, गिरः ॥५४॥ स्पष्टम् ॥५५॥
उपसर्गादिति किम् ? दायः । अश्य इति किम् ? अवश्यायः ॥५६॥

## व्याघ्राघ्रे प्राणि-नसोः ॥५॥१॥५७॥

आणिनि नासिकायाञ्च, व्याघ्राघ्रे जिघ्रतेः क्रमात् ॥
डे प्रत्यये निपात्येते, व्याघ्रस्याघ्राऽपि भीषणा ॥५७॥

## घ्रा-ध्मा-पा-ट्धे-दृशः शः ॥५॥१॥५८॥

घ्रादिभ्यः पञ्चधातुभ्यः, प्रत्ययः शो विधीयते ॥
जिघ्र उद्धम उत्पश्यः, पिब उद्धय आमतः ॥५८॥

## साहि-सति-वेद्युदेजि-धारि-पारि-चेतेरनुपसर्गात् ॥५॥१॥५९॥

साह्यादि-सप्तधातुभ्यो, ण्यन्तकेभ्यः शप्रत्ययः ॥
अनुपसर्गकेभ्यः स्यात्, साहयश्चाथ सातयः ॥५९॥

## लिम्प-विन्दः ॥५॥१॥६०॥

आभ्यामनुपसर्गाभ्यां, शप्रत्ययो विधीयते ॥
लिम्पतीति भवेल्लिम्पः, प्रलिपः सोपसर्गतः ॥६०॥

## नि-गवादेर्नाम्नि ॥५॥१॥६१॥

निपूर्वाल्लिम्पतेर्नाम्नि, विन्तेर्गवादिपूर्वकात् ॥
शः स्यात् सुरा निलिम्पाश्च, गोविन्दो गरुडध्वजः ॥६१॥

---

— स्रष्टे ॥५७॥५८॥ एवं वेदयः, उदेजयः, धारयः, पारयः, चेतयः। अनुपसर्गादिति किम् ? प्रसाहयिता ॥५९॥ एवं विन्दः ॥६०॥ एवं कुविन्दः, नाम्नीति किम् ? निलिपः ॥६१॥

वा ज्वलादि-दु-नी-भू-ग्रहास्रोर्णः ॥५॥१॥६२॥

स्याज्ज्वलादेर्दुनीमुख्या–दाङ्पूर्वात् स्रवतेस्तथा ॥
अनुपसर्गतो णो वा, ज्वालश्चालो ज्वलश्चलः ॥६२॥

अवह्--सा-संस्रोः ॥५॥१॥६३॥

अवपूर्वह्साभ्यां णः, संपूर्वात् स्रवतेस्तथा ॥
अवहारोऽवसायश्च, संस्रावश्चापि संस्रवः ॥६३॥

तन्व्यधीण्श्वसातः ॥५॥१॥६४॥

एभ्य आदन्तकेभ्यश्च, धातुभ्यः स्याद् णप्रत्ययः ॥
तानो व्याधश्च प्रत्यायः, श्वासोऽवश्याय इत्यलम् ॥६४॥

नृत्-खन्-रञ्जः शिल्पिन्यकट् ॥५॥१॥६५॥

स्याद् नृतिखनिरञ्जिभ्यो, न्वकट् शिल्पिनि कर्तरि ॥
नर्तकी खनकश्चाथ, रजको नर्तिकाऽन्यथा ॥६५॥

गस्थकः ॥५॥१॥६६॥

शिल्पिनि गायतेर्धातोः, कर्तरि प्रत्ययस्थकः ॥
दक्षिणो गाथको लोके, वावदूकोऽपि मन्यते ॥६६॥

टनण् ॥५॥१॥६७॥

गायतेः शिल्पिनि ज्ञेयः, कर्तरि प्रत्ययष्टनण् ॥
उत्तरार्थः पृथग्योगो, गायनो गायनी तथा ॥६७॥

---

एवं दवः, दावः, नयः, नायः, भवः, भावः, ग्राहो मकरादिः, ग्रहः सूर्यादिः, आस्रवः, आस्रावः । अनुपसर्गादिति किम् ? प्रज्वलः ॥६२॥ सूत्रषट्कं स्पष्टम् ॥६३॥६४॥६५॥६६॥६७॥६८॥

## हः काल-व्रीह्योः ॥५।१।६८॥

हाको हाङोऽथवा काल-व्रीह्योः कर्त्तर्यप्टनण् भवेत् ॥
हायना व्रीहयो ह्राता, संवत्सरस्तु ह्रायनः ॥६८॥

## प्रु-सृ-ल्वोऽकः साधौ ॥५।१।६९॥

प्रु-सृ-लूभ्यस्त्रिधातुभ्यः, साध्वर्थेभ्यो भवेदकः ॥
साधु प्रवत इत्यर्थे, प्रवकः प्रावकोऽन्यथा ॥६९॥

## आशिष्यकन् ॥५।१।७०॥

धातोराशिषि गम्यायां, स्यादकन् प्रत्ययः परः ॥
जीवको नन्दको लोको, जीविका नन्दिकाऽन्यथा ॥७०॥

## तिक्-कृतौ नाम्नि ॥५।१।७१॥

धातोराशिषि गम्यायां, संज्ञायां प्रत्ययाः समे ॥
तिक्कृतश्च भवेयुस्तत्, तन्तिः शान्तिश्च वीरभूः ॥७१॥

## कर्मणोऽण् ॥५।१।७२॥

धातोरण् प्रत्ययो वाच्य-स्त्रिविधादपि कर्मणः ॥
कुम्भकारो मसीकारः, काण्डलावादयस्तथा ॥७२॥

## शीलि-कामि-भक्ष्याचरीक्षिक्षमो णः ॥५।१।७३॥

शील्यादिभ्यो भवेत् कर्म-परेभ्यो णो नु प्रत्ययः ॥
धर्मशीला च कल्याणा-चारा बहुक्षमा क्षमा ॥७३॥

---

एवं सरकः, लवकः ॥६९॥ सूत्रत्रयं स्पष्टम् ॥७०॥७१॥७२॥ एवं धर्मकामा, वायुभक्षा, सुखप्रतीक्षा ॥७३॥

## गायोऽनुपसर्गाट्टक् ॥५॥१॥७४॥

प्रत्ययोऽनुपसर्गाट्टक्, गायतेः कर्मणः परात् ॥
वक्रगो वक्रगी वक्र-सङ्गाय उपसर्गतः ॥७४॥

## सुरा-सीधोः पिबः ॥५॥१॥७५॥

नोपसर्गात् परादाभ्यां, कर्मभ्यां पिबतेर्नु टक् ॥
सुरापश्च सुरापी च, सीधुपः सीधुपी तथा ॥७५॥

## आतो डोऽह्वा-वा-मः ॥५॥१॥७६॥

कर्मणो नोपसर्गाद् ह्वा-वामावर्जितधातुतः ॥
आदन्ताड्डो भवेद् गोदः, स्वर्गह्वाय्यादयोऽपि च ॥७६॥

## समः ख्यः ॥५॥१॥७७॥

ख्याधातोः प्रत्ययो डःस्यात्, सम्पूर्वात् कर्मणः परात् ॥
गोसङ्ख्यः पशुसङ्ख्यश्च, नित्यं सङ्ख्याति गोपशून् ॥७७॥

## दश्चाङः ॥५॥१॥७८॥

आङो दागस्तथाख्यश्च, भवेद् डः कर्मणः परात् ॥
दायादो दायमादत्ते, स्त्र्याख्यः ख्याति स्त्रियं प्रियाम् ॥७८॥

## प्राज्ज्ञश्च ॥५॥१॥७९॥

प्रपूर्वाज्ज्ञस्तथा दश्च, डो भवेत् कर्मणः परात् ॥
ज्ञेयं दश्चेति दारूपात्, पथिप्रज्ञः प्रपाप्रदः ॥७९॥

---

स्पष्टे ॥७४॥७५॥ एवं तन्तुवायः धान्यमायः ॥७६॥ सूत्रसप्तकं स्पष्टार्थम् ॥७७॥७८॥७९॥-

## आशिषि हनः ॥५॥१॥८०॥

आशिषि गम्यमानायां, हन्तेर्डः कर्मणः परात् ॥
शत्रुहो भव भव्यात्मन् ? पापहो दुःखहस्तथा ॥८०॥

## क्लेशादिभ्योऽपात् ॥५॥१॥८१॥

क्लेशादिकर्मणो हन्ते-रपपूर्वाद् डप्रत्ययः ॥
जिनः क्लेशापहः सद्यो, यथा सूर्यस्तमोपहः ॥८१॥

## कुमारशीर्षाण्णिन् ॥५॥१॥८२॥

कुमारशीर्षकर्मभ्यां, हन्तेर्णिन् प्रत्ययो भवेत् ॥
खलः कुमारघातीव, शीर्षघाती न किं भवेत् ? ॥८२॥

## अचित्ते टक् ॥५॥१॥८३॥

हन्तेष्टक् प्रत्ययोऽचित्ते, कर्तरि कर्मणः परात् ॥
वातघ्नं तैलमाधिघ्नं, पापघात्तव्रतिव्रतम् ॥८३॥

## जायापतेश्चिह्नवति ॥५॥१॥८४॥

कर्मभ्यां टक् भवेज्जाया-पतिभ्यां हन्तिधातुतः ॥
चिह्नवत्कर्तरि ज्ञेयो, जायाघ्नस्तिलकालकः ॥८४॥

## ब्रह्मादिभ्यः ॥५॥१॥८५॥

ब्रह्मादिभ्यः पराद् हन्ते-ष्टक् प्रत्ययो विधीयते ॥
धर्माद् दृढप्रहारीव, ब्रह्मघ्नो गोघ्नोऽपि सन् ॥८५॥

## हस्ति-बाहु-कपाटाच्छक्तौ ॥५॥१॥८६॥

हस्ति-बाहु-कपाटेभ्यो, हन्तेः शक्तौ तु टक् भवेत् ॥

---

॥८०॥८१॥८२॥८३॥ एवं पतिघ्नी कन्या ॥८४॥ स्पष्टम् ॥८५॥ शक्काविति किम् ? हस्तिघातो विषदः ॥८६॥ स्पष्टे ॥ ८७ ॥

हस्तिघ्नोऽपि च बाहुघ्नः, कपाटघ्नो न किं भवेत् ॥८६॥

**नगरादगजे ॥५॥१॥८७॥**

नगरात् कर्मणो हन्तेः, कर्तरि गजवर्जिते ॥
टक् व्याघ्रो नगरघ्नः स्या–न्नेभो नगरघातकः ॥८७॥

**राजघः ॥५॥१॥८८॥**

हन्तेष्टक् कर्मणो राज्ञो, घादेशश्च निपात्यते ॥
छद्मना राजघः कश्चिद्, भवेद् विनयरत्नवत् ॥८८॥

**पाणिघ–ताडघौ शिल्पिनि ॥५॥१॥८९॥**

कर्मभ्यां पाणिताडाभ्यां, हन्तेः शिल्पिनि कर्तरि ॥
टक्-घादेशौ निपात्येते, शिल्पी पाणिघताडघः ॥८९॥

**कुक्ष्यात्मोदराद् भृगः खिः ॥५॥१॥९०॥**

कुक्ष्यात्मोदरकर्मभ्यो, भृगः खिः प्रत्ययो भवेत् ॥
कुक्षिमेव बिभर्तीति, नीचः कुक्षिम्भरिः स्मृतः ॥९०॥

**अर्होऽच् ॥५॥१॥९१॥**

अच् प्रत्ययो भवेद् धातो–रर्हतेः कर्मणः परात् ॥
पूजामर्हति पूजार्हः, पूजार्हा प्रतिमा तथा ॥९१॥

**धनुर्दण्डत्सरुलाङ्गलाङ्कुशर्ष्टियष्टिशक्तितोमरघटाद् ग्रहः ॥५॥१॥९२॥**

स्यादेभ्यो दशकर्मभ्यो, ग्रहेरच् प्रत्ययो भवेत् ॥

---

शिल्पिनीति किम् ? पाणिघातः, ताडघातः ॥८९॥ एवमात्मम्भरिः, उदरम्भरिः ॥९०॥ स्पष्टम् ॥९१॥ एवं त्सरुग्रहः, अङ्कुशग्रहः, ऋष्टिग्रहः,

धनुर्ग्रहस्तथा दण्ड–ग्रहश्च लाङ्गलग्रहः ॥९२॥

## सूत्राद् धारणे ॥५॥१॥९३॥

अच् सूत्रकर्मणोऽर्थे चेत्, ग्रहणपूर्वधारणे ॥
ग्रहेः सूत्रग्रहः सूत्र–धारः प्राज्ञोऽथवा मतः ॥९३॥

## आयुधादिभ्यो धृगोऽदण्डादेः ॥५॥१॥९४॥

धृगोऽच् दण्डादिवर्जादा–युधाद्येः कर्मणः परात् ॥
भूधरो दण्डधारश्च, कुण्डधारो धनुर्धरः ॥९४॥

## हृगो वयोऽनुद्यमे ॥५॥१॥९५॥

कर्मणो हरतेर्धातो–र्गम्ये वयस्यनुद्यमे ॥
अच् स्यान्मनोहरा माला, कस्य नो हरते मनः ॥९५॥

## आङः शीले ॥५॥१॥९६॥

आङ् पूर्वाद् हरतेः शीले, प्रत्ययोऽच् कर्मणः परात् ॥
पुष्पाण्याहरतीत्येवं–शीलः पुष्पहरः शिशुः ॥९६॥

## दृति–नाथात् पशाविः ॥५॥१॥९७॥

कर्मभ्यां दृतिनाथाभ्या–मिः कर्तरि पशौ हृगः ॥
सिंहो नाथहरिः सार–मेयो दृतिहरिस्तथा ॥९७॥

---

यष्टिग्रहः, शक्तिग्रहः, तोमरग्रहः, घटग्रहः ॥९२॥ धारण इति किम् ? सूत्रग्राहः ॥९३॥ स्पष्टम् ॥ उद्यमः–उत्क्षेपणमाकाशे धारणं वा तदभावे, वयोऽनुद्यम इति किम् ? भारहारः ॥९५॥ शील इति किम् ? पुष्पाहारः ॥९६॥ स्पष्टम् ॥ ९७ ॥

रजःफलेमलाद् ग्रहः ॥५॥१॥९८॥

रजःफलेमलेभ्यस्तु, कर्मभ्य इर्ग्रहेर्भवेत् ॥
वृक्षः फलेग्रहिः प्रायः, कञ्चुकश्च रजोग्रहिः ॥९८॥

देववातादापः ॥५॥१॥९९॥

कर्मभ्यां देववाताभ्या-मापेरिः प्रत्ययो भवेत् ॥
देवानाप्नोति देवापि-र्वातापी राक्षसः श्रुतः ॥९९॥

शकृत्-स्तम्बाद् वत्सव्रीहौ कृगः ॥५॥१॥१००॥

इः कर्मभ्यां क्रमादाभ्यां, वत्से व्रीहौ च कर्तरि ॥
कृगः शकृत्करिर्वत्सो, व्रीहिः स्तम्बकरिस्तथा ॥१००॥

किंयत्तद्बहोरः ॥५॥१॥१०१॥

एभ्यः कर्मचतुष्केभ्यः, कृगो धातोरप्रत्ययः ॥
किङ्करा यत्कराश्चाथ, बहुकराश्च तत्कराः ॥१०१॥

सङ्ख्या-ऽह-र्दिवा विभा-निशा-प्रभा-भा-श्चित्र-कर्त्रा-द्य-न्ता-नन्त-कार-बाहु-रु-र्धनु-र्नान्दी-लिपि-लिबि-भक्ति-क्षेत्र-जङ्घा-क्षपा-क्षणदा-रजनि-दोषा-दिन-दिवसाट्टः ॥५॥१॥१०२॥

एभ्य एकोनत्रिंशद्भ्यः, कर्मभ्यष्टः कृगो भवेत् ॥

---

एवं मलग्रहिः ॥९८॥ स्पष्टं सूत्रत्रयम् ॥९९॥१००॥१०१॥ सङ्ख्येत्यर्थप्रधानमपि, तेन द्विकर इत्याद्यपि। एवं संख्याकरः, अहस्करः, विभाकरः, प्रभाकरः, भास्करः, चित्रकरः, कर्तृकरः, आदिकरः, अन्तकरः,

एकयोक्त्या पुष्पवन्तौ, दिवाकर–निशाकरौ ॥१०२॥

## हेतु-तच्छीलानुकूलेऽशब्दश्लोककलहगाथावैर-चाटुसूत्रमन्त्रपदात् ॥५॥१॥१०३॥

एषु कर्तृषु शब्दादि–वर्जकर्मपरात् कृगः ॥
स्याट्टटः श्राद्धकरः श्राद्धो, विद्याऽऽर्हती यशस्करी ॥१०३॥

## भृतौ कर्मणः ॥५॥१॥१०४॥

कृगः कर्मपरात् कर्म–शब्दाद्भृतौ टप्रत्ययः ॥
भृत्यः कर्मकरः कर्म–करी दासी स्वभाग्यतः ॥१०४॥

## क्षेमप्रियमद्रभद्रात् खाण् ॥५॥१॥१०५॥

क्षेमादिभ्यश्चतुर्भ्यस्तु, खाणौ स्तः प्रत्ययौ कृगः ॥
क्षेमङ्करः क्षेमकारः, प्रियकारः प्रियङ्करः ॥१०५॥

## मेघर्तिभयाभयात् खः ॥५॥१॥१०६॥

एभ्यः कर्मचतुष्केभ्यः, स्यात् करोतेः खप्रत्ययः ॥
आत्माऽभयङ्करः शुद्धः, श्मशानञ्च भयङ्करम् ॥१०६॥

## प्रियवशाद् वदः ॥५॥१॥१०७॥

स्यात् प्रियवशकर्मभ्यां, परात् खः प्रत्ययो वदेः ॥
प्रियंवदः प्रियो न स्याद्, यदि न स्याद् वशंवदः ॥१०७॥

---

अनन्तकरः, कारकरः, बाहुकरः अरुष्करः, धनुष्करः नान्दीकरः, लिपिकरः, लिविकरः, बलिकरः, भक्तिकरः, क्षेत्रकरः, जङ्घाकरः, क्षपाकरः, क्षणदाकरः, रजनिकरः, दोषाकरः, दिनकरः, दिवसकरः ॥१०२॥ शब्दादिनिषेधनात् शब्दकार इत्यादि ॥१०३॥ स्पष्टम् ॥१०४॥ एवं मद्रङ्करः, मद्रकारः भद्रङ्करः, भद्रकारः ॥१०५॥ एवं मेघङ्करः, ऋतिङ्करः ॥१०६॥ सूत्रमयं स्पष्टम् ॥१०७॥

द्विषन्तपपरन्तपौ ॥५॥१॥१०८॥

तपेर्द्विषत्पराभ्यां खो, ण्यन्ततो ह्रस्वता च मः
द्विषत्तस्य निपात्यन्ते द्विषन्तपः परन्तपः ॥१०८॥

परिमाणार्थमितनखात् पचः ॥५॥१॥१०९॥

मित-नख-प्रमाणार्थ–कर्मभ्यः परतः पचेः ॥
खः स्यात् प्रस्थम्पचा स्थाली, मितम्पचः, नखम्पचः॥१०९॥

कूलाभ्रकरीषात् कषः ॥५॥१॥११०॥

खः कूलाभ्रकरीषेभ्यः, कर्मभ्यः परत कषेः ॥
नदी कूलङ्कषा मेघो-ऽभ्रङ्कषो विद्युताऽन्वितः ॥११०।

सर्वात् सहश्च ॥५॥१॥१११॥

सहतेः कषतेः खः स्यात् , सर्वतः कर्मतः परात् ॥
मुनिः सर्वंसहो ज्ञानी, सर्वङ्कषः खलो जनः ॥१११॥

भृ-वृ-जि-तृ-तप-दमेश्च नाम्नि ॥५॥१॥११२॥

कर्मतो भ्रादिधातुभ्यः, सहेश्च नाम्नि खो भवेत् ॥
धरा विश्वम्भरा तत्र, शत्रुञ्जयो महागिरिः ॥११२॥

धारेर्धर्च्च ॥५॥१॥११३॥

नाम्नि धारयतेर्धातो–र्भवेत् खः कर्मणः परात् ॥
धरादेशश्च भूर्गौश्च, वसुन्धरा धुरन्धरः ॥११३॥

---

॥ १०८ ॥ १०९ ॥ एवं करीषङ्कषा ॥ ११० ॥ स्पष्टम् ॥ ॥१११॥ एवं–'कन्या पतिंवरा राजा, शत्रुन्तपः शत्रुंसहः । कृष्णो बलिन्दमः साम, रथन्तरं प्रगीयते ॥' ॥११२॥ एवं सीमन्धर–युगन्धरौ जिनौ ॥ ११३॥

## पुरन्दर-भगन्दरौ ॥५॥१॥११४॥

खान्तौ नाम्नि निपात्येते, पुरन्दर-भगन्दरौ ॥
पुरन्दरः सुराधीशो, महाव्याधिर्भगन्दरः ॥११४॥

## वाचंयमो व्रते ॥५॥१॥११५॥

खः स्याद् गम्ये व्रते वाचः, कर्मणः परतो यमेः ॥
वाचश्चासन्तता वाच्या, मुनिर्वाचंयमो व्रती ॥११५॥

## मन्याण्णिन् ॥५॥१॥११६॥

धातोर्णिन् प्रत्ययो ज्ञेयो, मन्यतेः कर्मणः परात् ॥
शत्रोः पण्डितमानी ना, जायते भुवि कश्चन ॥११६॥

## कर्तुः खश् ॥५॥१॥११७॥

खश् प्रत्ययार्थतः कर्तु-र्मन्यतेः कर्मणः परात् ॥
आत्मानं मन्यते सुज्ञं, सुज्ञम्मन्यः स आत्मनः ॥११७॥

## एजः ॥५॥१॥११८॥

धातोरेजयतेः खश् स्यात् , प्रत्ययः कर्मणः परात् ॥
स्याज्जनमेजयः सम्यक्, समन्तादरिमेजयः ॥११८॥

## शुनी-स्तन-मुञ्ज-कुला-स्य-पुष्पाद् ट्धेः ॥५॥१॥११९॥

ट्धेधातोः पञ्चभ्य एभ्यः स्यात्, कर्मभ्यः परतो नु खश् ॥
पुष्पन्धयो द्विरेफः स्यात्. नार्हन्तः स्युः स्तनन्धयाः ॥११९॥

---

सूत्रत्रयं स्पष्टम् ॥११०॥११५॥११६॥ कर्तुरिति किम् ? पटुमानी चैत्रस्य ॥११७॥ स्पष्टम् ॥११७॥ एवं शुनन्धयः, मुञ्जन्धयः, कूलन्धयः, आस्यन्धयः ॥११९॥

नाडीघटीखरीमुष्टिनासिकावाताद् ध्मश्च॥५॥१॥१२०॥

नाड्यादिकर्मषट्कात् स्यात्, धमतेष्ट्धेश्च खश् ततः ॥
नाडिन्धमो धमेन्नाडीं, घटिन्धमो घटिन्धयः ॥१२०।

पाणिकरात् ॥५॥१॥१२१॥

स्यात् पाणिकरकर्मभ्यां, परात् खश् धमतेस्ततः ॥
पाणिन्धमो धमेत् पाणिं, करन्धमः करं धमेत् ॥१२१॥

कूलादुद्रुजोद्वहः ॥५॥१॥१२२॥

स्यात् कूलान् कर्मणो धातो-रुद्रुजेरुद्वहेश्च खश् ॥
स्यात् कूलमुद्रुजो हस्ती, नदी स्यात् कूलमुद्वहा ॥१२२॥

वहाभ्राल्लिहः ॥५॥१॥१२३॥

भवेद्वहाभ्रकर्मभ्यां, लिहः खश् प्रत्ययः परः ॥
प्रासादोऽभ्रंलिहो राज्ञो, वहं लेढि वहंलिहः ॥१२३॥

बहुविध्वरुस्तिलात् तुदः ॥५॥१॥१२४॥

अस्मात् कर्मचतुष्कात् स्यात्, परात् खश् प्रत्ययस्तुदेः ॥
राहुर्विधुन्तुदः काक- स्तिलन्तुदो बहुन्तुदम् ॥१२४॥

ललाटवातशर्द्धात् तपाजहाकः ॥५॥१॥१२५॥

ललाटवातशर्द्धात् स्यात्, खश् प्रत्ययो यथाक्रमम् ॥

---

एवं नाडिन्धयः, खरिन्धमः, खरिन्धयः, मुष्टिन्धमः, मुष्टिन्धयः, नासिकन्धमः, नासिकन्धयः, वातन्धमः, वातन्धयः ॥१२०॥ सूत्रत्रयं स्पष्टम् ॥१२१॥१२२॥१२३॥ एवम् अरुन्तुदः पीडाकरः, बहुन्तुदं युगम् ॥१२४॥

धातोस्तपाजहाकस्तद्, ललाटन्तप आतपः ॥१२५॥

## असूर्य्योग्राद् दृशः ॥५॥१॥१२६॥

स्यादसूर्य्योग्रकर्मभ्यां, दृशेः खश् प्रत्ययः परः ॥
राजपत्नी मताऽसूर्य्य—म्पश्योग्रम्पश्यभूपतेः ॥१२६॥

## इरम्मदः ॥५॥१॥१२७॥

माद्यतेः खश् इरापूर्वात्, श्याभावश्च निपात्यते ॥
इरा सुरा तया माद्येद्, मेघज्योतिरिरम्मदः ॥१२७॥

## नग्न-पलित-प्रिया-ऽन्ध-स्थूल-सुभगा-ऽऽढ्य-तदन्ता-ऽच्व्यर्थेऽच्वेर्भुवः खिष्णुखुकञौ ॥५॥१॥१२८॥

नग्नादिभ्यस्तदन्तेभ्यो—ऽच्व्यन्तेभ्यो भवतेः परौ ॥
स्तः खिष्णुखुकञौ च्व्यर्थे नग्नम्भविष्णुरुन्मनाः ॥१२८॥

## कृगः खनट् करणे ॥५॥१॥१२९॥

च्व्यर्थेऽच्व्यन्तनग्नादेः, करोतेः करणे खनट् ॥
सुभगङ्करणं रूपं, तथाऽन्धङ्करणः स्मरः ॥१२९॥

---

एवं वातमजाः मृगाः, शर्द्धञ्जहाः माषाः ॥१२५॥ स्पष्टे ॥१२६॥१२७॥
एवं नग्नम्भावुकः, पलितम्भविष्णुः, पलितम्भावुकः, प्रियम्भविष्णुः, प्रियम्भावुकः, अन्धम्भविष्णुः, अन्धम्भावुकः, स्थूलम्भविष्णुः, स्थूलम्भावुकः, सुभगम्भविष्णुः, सुभगम्भावुकः, आढ्यम्भविष्णुः, आढ्यम्भावुकः, तदन्तः सुनग्नम्भविष्णुः, सुनग्नम्भावुकः, इत्यादि । अच्वेरिति किम् ? आढ्यो भविता ॥१२८॥ एवं नग्नङ्करणं द्यूतम्, पलितङ्करणम्, पियङ्करणम् स्थूलङ्करणम्, आढ्यङ्करणम्, सुनग्नङ्करणम्; च्व्यर्थ इति किम् ? नग्नं करोति द्यूतेन ॥१२९॥

भावे चाशिताद् भुवः खः ॥५॥१॥१३०॥

खो भावे करणे चार्थे, भवतेराशिताद्भवेत् ॥
सदाशितम्भवस्ते य-च्चाशितम्भव ओदनः ॥१३०॥

नाम्नो गमः खड्डौ च विहायसस्तु विहः ॥५॥१॥१३१॥

खड्डखाः स्युर्गमेर्नाम्नो, विहायसो विहस्तथा ॥
विहङ्गो विहगः पक्षी, पतत्री च विहङ्गमः ॥१३१॥

सुगदुर्गमाधारे ॥५॥१॥१३२॥

सुदुर्भ्यां गच्छतेर्धातो-राधारे डो निपात्यते ॥
गूर्जरेऽध्वा सुगो दुर्गो, दक्षिणे बहुकर्कशः ॥१३२॥

निर्गो देशे ॥५॥१॥१३३॥

निस्पूर्वाद् गच्छतेर्देशे, आधारे डो निपात्यते ॥
अस्मिन् निर्गम्यते देशे, निर्गो निर्गमनोऽन्यथा ॥१३३॥

शमो नाम्न्यः ॥५॥१॥१३४॥

शमो नाम्नः पराद्धातोः, संज्ञायामो भवेत् परः ॥
शम्भवशङ्करी दीक्षा, राकायाँ मार्गशीर्षके ॥१३४॥

पार्श्वादिभ्यः शीङः ॥५॥१॥१३५॥

पार्श्वादिनामतः शीङो, धातोरः प्रत्ययो भवेत् ॥
दिग्धसहशयः पार्श्व-शयः पृष्ठशयस्तथा ॥१३५॥

---

स्पष्टम् ॥१३०॥ एवं तुरगः, तुरङ्गः, तुरङ्गमः, इत्यादि ॥१३१॥ स्पष्टे ॥१३२॥१३३॥ शम्भवाख्यस्यार्हतः शङ्करी श्रेयस्करी दीक्षा मार्गशीर्षपूर्णिमायां जातेति यावत् ॥१३४॥ सूत्रद्वये बहुवचनं यथोचितप्रयोगानुसरणाय ॥ १३५॥

## ऊर्ध्वादिभ्यः कर्तुः ॥५॥१॥१३६॥

कर्तृवाचिभ्य एभ्यः शीङ्-धातोरः प्रत्ययो भवेत् ॥
स्युरुत्तानशया डिम्भा, ऊर्ध्वशयश्च गोत्रजः ॥१३६॥

## आधारात् ॥५॥१॥१३७॥

आधारान्नामतः शीङो, धातोरः प्रत्ययो भवेत् ॥
खशयो हृच्छयो गर्त-शयः कुशाशयोऽपि च ॥१३७॥

## चरेष्टः ॥५॥१॥१३८॥

आधारवाचिनो नाम्न-श्चरेष्टः प्रत्ययो भवेत् ॥
भिल्लो वनेचरः क्रूरो, यातुधानो निशाचरः ॥१३८॥

## भिक्षासेनाऽऽदायात् ॥५॥१॥१३९॥

भिक्षादिभ्यस्त्रिशब्देभ्यो, धातोरश्चरतेर्भवेत् ॥
तापसव्यञ्जनः सेना-चरो भिक्षाचरो व्रती ॥१३९॥

## पुरोऽग्रतोऽग्रे सर्त्तेः ॥५॥१॥१४०॥

सर्त्तेर्धातोर्विधातव्य, एभ्यः पराट्प्रत्ययः ॥
अग्रेसरः स्वयूथ्यानां, पुरस्सरोऽग्रतःसरः ॥१४०॥

## पूर्वात् कर्तुः ॥५॥१॥१४१॥

स्यात् कर्तृवाचिनः पूर्वात्, परात् सर्त्तेष्टप्रत्ययः ॥
पूर्वसरः सरेत् पूर्वः, पूर्वो भूत्वाऽपि संसरेत् ॥१४१॥

---

॥१३६॥ स्पष्टं ॥१३७॥ १३८॥ एवमादायचरः ॥१३९॥ स्पष्टम् ॥ १४०॥ कर्तुरिति किम् ? पूर्वसारः ॥ १४१ ॥

### स्थापास्नात्रः कः ॥५॥१॥१४२॥

नाम्नः परेभ्य एभ्यः कः, प्रत्ययः स्यात् ? कप्रत्ययः ॥
धर्मत्रमातपत्रश्चा—श्वस्थो द्विपो नदीष्णकः ॥१४२॥

### शोकापनुद—तुन्दपरिमृज-स्तम्बेरम-कर्णेजपं प्रियालस—हस्ति—सूचके ॥५॥१॥१४३॥

कान्ता एते निपात्यन्ते, यथासङ्ख्यं प्रियादिषु ॥
न शोकापनुदः कर्णे—जपः स्तम्बेरमो द्विपः ॥१४३॥

### मूलविभुजादयः ॥५॥१॥१४४॥

यथादर्शं निपात्यन्ते, कान्ता एते सदर्थकाः ॥
कुमुदं कैरवं ज्ञेयं, स्यान्मूलविभुजो रथः ॥ १४४ ॥

### दुहेर्डुघः ॥५॥१॥१४५॥

नाम्नः पराद् दुहेर्धातो—र्जायते डुघप्रत्ययः ॥
विद्या कामदुधा नित्यं, भवेद् धर्मदुघाऽपि सा ॥१४५॥

### भजो विण् ॥५॥१॥१४६॥

धातोर्विण् प्रत्ययो ज्ञेयो, भजतेर्नामतः परात् ॥
पादभागर्द्धभागर्द्धं, भजते च प्रभाग् विभाक् ॥१४६॥

### मन्-वन्-क्वनिप्-विच् क्वचित् ॥५॥१॥१४७॥

नाम्नो लक्ष्यानुसारेण, धातोर्मन्—वन्—क्वनिप्—विचः ॥

---

स्पष्टम् ॥१४२॥ शोकापनुदः प्रियः, कर्णेजपोऽतिखलः, तुन्दपरिमृजोऽलसः, एष्विति किम् ? शोकोपनोदो धर्माचार्यः ॥१४३॥ सूत्रपञ्चकं स्पष्टार्थम् ॥१४४॥ ४५॥१४६॥१४७॥......

इन्द्रशर्मा विजावा च, सुधीवा पाप्मरेट् तथा ॥१४७॥

## क्विप् ॥५॥१॥१४८॥

नाम्नः पराद्भवेद्धातोः, प्रत्ययः क्विप् क्वचित् क्वचित् ॥
मित्रभूः प्रतिभूः वाः पाः, उखास्रत् शानस्रः प्रम्नः ॥१४८॥

## स्पृशोऽनुदकात् ॥५॥१॥१४९॥

उदकवर्जितान्नाम्नः, स्पृशेः क्विप् प्रत्ययो भवेत् ॥
मर्म स्पृशति साधूनां, मर्मस्पृग् दुर्जनो जनः ॥१४९॥

## अदोऽनन्नात् ॥५॥१॥१५०॥

स्यादन्नवर्जितान्नाम्नः, प्रत्ययः क्विप् परादृदः ॥
आमात् सस्यात् फलात्तत्-द्भोक्ताऽन्नादो यथायथम् ॥

## क्रव्यात्-क्रव्यादावामपक्वादौ ॥५॥१॥१५१॥

क्रव्यात्-क्रव्यादशब्दौ क्विन्-णन्तौ साधू यथाक्रमम् ॥
आमपक्वार्थकौ क्रव्यात् , क्रव्यादो नरकङ्गमी ॥१५१॥

## त्यदाद्यन्यसमानादुपमानाद् व्याप्ये दृशः टक्-सकौ च ॥५॥१॥१५२॥

त्यदादेरन्यशब्दाच्च, समानाच्चोपमानतः ॥
दृशेर्व्याप्ये सकः टक् क्विप् , सदृक्षः सदृशः सदृक् ॥

---

-॥१४८॥ अनुदकादिति किम् ? उदकस्पर्शः ॥१४९॥ सन्नम् ॥ १५० ॥ क्रव्यात्-आममांसभक्षः, क्रव्यादः-पक्वमांसभक्षः ॥१५१॥ एवं त्यादृशः, त्यादृक्षः त्यादृक् , अन्यादृशः, अन्यादृक्षः, अन्यादृक् , व्याप्य इति किम् ? तेनैव दृश्यते ॥१५२॥

## कर्तुर्णिन् ॥५॥१॥१५३॥

कर्तृवाच्युपमानेभ्यो, धातोर्णिन् प्रत्ययो भवेत् ॥
उष्ट्रक्रोशी तथा सिंह-नर्दिनः स्वरनादिनः ॥१५३॥

## अजातेः शीले ॥५॥१॥१५४॥

जात्यर्थभिन्ननाम्नो णिन्, शीलार्थाद् धातुतो भवेत् ॥
उष्णभोजी भवेत् कश्चि-च्छीतभोजी तथाऽपरः ॥१५४॥

## साधौ ॥५॥१॥१५५॥

नाम्नः साध्वर्थकाद् धातोः, प्रत्ययो णिन् विधीयते ॥
साधुकारी तथा साधु-दायी क्वापि न दुःखितः ॥१५५॥

## ब्रह्मणो वदः ॥५॥१॥१५६॥

ब्रह्मन्शब्दात् पराद् धातो-र्वदेर्णिन् प्रत्ययो भवेत् ॥
वदन्ति ब्रह्म ब्रह्माणं, नरास्ते ब्रह्मवादिनः ॥१५६॥

## व्रताभीक्ष्ण्ये ॥५॥१॥१५७॥

पौनःपुन्ये व्रते चापि, धातोर्णिन् नामतः परात् ॥
साधुः स्यात् स्थण्डिलस्थायी, सौराष्ट्रास्तक्रपायिनः ॥१५७

## करणाद् यजो भूते ॥५॥१॥१५८॥

करणवाचिनो नाम्नो, भूतार्थाद् णिन् भवेद् यजेः ॥
भूदेवा इव भूदेव्यः, किमग्निष्टोमयाजिनः ? ॥१५८॥

---

स्पष्टम् ॥ १५३ ॥ एवं प्रस्थायी । अजातेरिति किम् ? शालीन् भोक्ता शील इति किम् ? उष्णभोजो मन्दः ॥१५४॥ स्पष्टे ॥१५५॥१५६॥ एवं स्थण्डिलवर्ती, क्षीरपायिण उशीनरा इत्यादि ॥ १५७ ॥स्पष्टम् ॥ १५८ ॥

## निन्द्ये व्याप्यादिन् विक्रियः ॥५॥१॥१५९॥

व्याप्यान्नाम्नो भवेद् भूते-ऽर्थे क्रीणातेर्विपूर्वकात् ॥
कुत्सिते कर्तरीन् सोम-विक्रयी तैलविक्रयी ॥१५९॥

## हनो णिन् ॥५॥१॥१६०॥

हन्तेर्भूतार्थकात् व्याप्या-न्निन्द्ये कर्तरि णिन् भवेत् ॥
पितृव्यघातिनः केचि-ल्लोभान्मातुलघातिनः ॥१६०॥

## ब्रह्म-भ्रूण-वृत्रात् क्विप् ॥५॥१॥१६१॥

भूतार्थात् क्विप् भवेद् हन्ते-र्ब्रह्मादिकर्मणः परात् ।
ब्रह्महा भ्रूणहा पापो, वृत्रहा निर्जराधिपः ॥ १६१ ॥

## कृगः सु-पुण्य-पाप-कर्म-मन्त्र-पदात् ॥५॥१॥१६२॥

भूतार्थतः कृगः क्विप् सोः, पुण्यादिकर्मपञ्चकात् ॥
सुकृत् स्यात् पुण्यकृन् कश्चित्, कर्मकृत् पापकृत् परः॥१६२॥

## सोमात् सुगः ॥५॥१॥१६३॥

सोमाद् व्याप्यात् परात् क्विप् स्यात्, भूतार्थाद्धातुतः सुगः॥
सोमसुत् सुतवान् सोमं, सुरासावस्तु मद्यपः ॥१६३॥

## अग्नेश्चेः ॥५॥१॥१६४॥

अग्नेर्व्याप्यात् परात् क्विप् स्यात्, भूतार्थतश्चिधातुतः ॥
अग्निचिच्चितवानग्निं, कुड्यचायस्ततोऽन्यतः ॥१६४॥

---

निन्द्य इति किम्? धान्यविक्रायः ॥१५९॥ स्पष्टे ॥१६०॥१६१॥ एवं मन्त्रकृत्, पदकृत्, ॥ १६२ ॥ स्पष्टार्थं सूत्रचतुष्कम् ॥ १६३ ॥१६४॥......

## कर्मण्यग्न्यर्थे ॥५॥१॥१६५॥

चिनोतेः कर्मणि क्विप् स्या-दग्न्यर्थे कर्मणः परात् ॥
भूतेऽर्थे श्येनचिद् वह्निः, कङ्कचिद्रथचक्रचित् ॥१६५॥

## दृशः क्वनिप् ॥५॥१॥१६६॥

कर्मणः पश्यतेर्धातो-र्भूतेऽर्थे प्रत्ययः क्वनिप् ॥
पारदृश्वा सुविद्यानां, हेमचन्द्रो मुनीश्वरः ॥ १६६ ॥

## सहराजभ्यां कृग्युधेः ॥५॥१॥१६७॥

स्यात् क्वनिप् सहराजभ्यां, करोतेर्युध्यतेस्तथा ॥
भूतेऽर्थे सहकृत्वा स, राजकृत्वा महारथः ॥१६७॥

## अनोर्जनेर्डः ॥५॥१॥१६८॥

भूतार्थादनुपूर्वात् स्या-ज्जनेर्डः कर्मणः परात् ॥
पुमांसमनुजातो यः, पुमनुजः स गीयते ॥ १६८ ॥

## सप्तम्याः ॥५॥१॥१६९॥

भूतार्थाद् डो जनेर्धातोः, स्यात् सप्तम्यन्तनामतः ॥
अप्सु जातं भवेदब्ज-मप्सुजं पङ्कजन्तथा ॥ १६९ ॥

## अजातेः पञ्चम्याः ॥५॥१॥१७०॥

पञ्चम्यन्तादजात्यर्थाद् , भूतार्थाद् डो जनेर्भवेत् ॥
सुखं सन्तोषजं दुःखं, लोभजं सङ्गजो गुणः ॥ १७० ॥

---

-॥१६५॥१६६॥ एवं सहयुध्वा, राजयुध्वा ॥१६७॥ स्पष्टे ॥१६८॥ ॥१६९॥ अजातेरिति किम् ? गजात् जातः ॥१७०॥

## क्वचित् ॥५।१।१७१॥

अन्यत्रापि भवेदुक्तात्, क्वचिल्लक्ष्यानुसारतः ॥
डप्रत्ययो द्विजो द्वाभ्यां, जातः किञ्जोऽधिजोऽनुजः ॥१७१॥

## सुयजोर्ङ्वनिप् ॥५।१।१७२॥

सुनोतेर्यजतेश्चापि, भूतेऽर्थे प्रत्ययो ङ्वनिप् ॥
इष्टवानिति यज्वा ना, सुत्वा ना सुतवानिति ॥१७२॥

## जॄषोऽतृः ॥५।१।१७३॥

भूतार्थाज्जीर्यतेर्धातोः, सम्भवेदतृप्रत्ययः ॥
जीर्यति स्म जरन् जीनो, वृद्धो जीर्णश्च जीर्णवान् ॥१७३॥

## क्त-क्तवतू ॥५।१।१७४॥

स्यातां क्तक्तवतू धातो-र्भूतार्थतः सदर्थकौ ॥
स्तुतस्त्वया जिनो भाग्या-दर्हन्तं स्तुतवानहम् ॥१७४॥

॥ इति पञ्चमाध्याये प्रथमः पादः ॥

---

एवं क्लीजः, अजः, प्रव्राज्यः, वराहः, जातः ॥ १७१ ॥ सूत्रत्रयं स्पष्टम् ॥१७२॥१७३॥१७४॥

॥ इति प्रथमः पादः ॥

# अथ द्वितीयः पादः ॥

## श्रुसद्वस्भ्यः परोक्षा वा ॥५।२।१॥

भूतार्थेभ्यः परोक्षा वा, त्रिभ्य एभ्यो विधीयते ॥
अनूवासोपशुश्रावो–पससादात्युपाशृणोत् ॥ १ ॥

## तत्र क्वसुकानौ तद्वत् ॥५।२।२॥

परोक्षाविषये धातोः, क्वसुः कानश्च प्रत्ययः ॥
परोक्षावच्च चक्रागः, पेचानः शुश्रुवाँस्तथा ॥२॥

## वेयिवदनाश्वदनूचानम् ॥५।२।३॥

भूतेऽर्थे क्वसुकानान्ताः, कर्तरि वा निपातिताः ॥
एतेऽनाश्वाननूचानः समीयिवानगादुपैत् ॥ ३ ॥

## अद्यतनी ॥५।२।४॥

भूतेऽर्थे वर्तमानात् स्यात्, धातोरद्यतनी परा ॥
भव्यानामघनाशाय, पार्श्वोऽभूत् सर्वशर्मदः ॥४॥

## विशेषाविवक्षाव्यामिश्रे ॥५।२।५॥

विशेषस्याविवक्षायां, व्यामिश्रे चापि धातुतः ॥
भूतेऽर्थेऽद्यतनी ज्ञेया–ऽकार्षीद्रामोऽगमद् वनम् ॥५॥

---

एवम् उपाश्रौषीत्, उपासीदत्, उपासदत्, अन्ववात्सीत्, अन्ववसत् ॥१॥ एवं सेदिवान्, ऊपिवान् इत्यादि ॥ २ ॥ पक्षे उपेयाय, नाशीत्, नाश्नात्, नाश, अन्ववोचत्, अन्ववक्, अन्वब्रवीत्, अनूवाच ॥ ३ ॥ स्पष्टम् ॥४॥ अनद्यतनादिविशेषाविवक्षायां व्यामिश्रणे च सति भूतार्थाद् धातोरद्यतनी स्यात् इति स्पष्टोऽर्थः, अद्य ह्यो वाऽभुक्ष्महि इत्यादि ॥५॥

## रात्रौ वसोऽन्त्ययामास्वप्तर्यद्य ॥५॥२॥६॥

वसेर्निश्यन्त्ययामासं-स्वप्तर्यद्यतनी भवेत् ॥
भूते त्वं क्वोषितोऽमुत्रा-वात्समित्याह कश्चन ॥ ६ ॥

## अनद्यतने ह्यस्तनी ॥५॥२॥७॥

स्यादनद्यतने भूते-ऽर्थे धातोर्ह्यस्तनी परा ॥
अवःरोदभवद् भव्यं, तुर्येऽह्नि नाद्य दुःस्थितेः ॥७॥

## ख्याते दृश्ये ॥५॥२॥८॥

भूतेऽनद्यतने ख्याते, दृश्ये च ह्यस्तनी भवेत् ॥
सौराष्ट्रानजयत् सिद्धः, कटं चक्रे बभार गाम् ॥८॥

## अयदि स्मृत्यर्थे भविष्यन्ती ॥५॥२॥९॥

स्मृत्यर्थोपपदे भूता-नद्यतनेऽयदि धातुतः ॥
भविष्यन्त्यभिजानासि ? वत्स्यामस्तत्र वत्सरान् ॥ ९ ॥

## वाकाङ्क्षायाम् ॥५॥२॥१०॥

वाऽऽकाङ्क्षायां भविष्यन्ती, स्मृत्यर्थादि च पूर्ववत् ॥

---

अस्य स्पष्टोऽर्थः, रात्रौ भूतार्थवृत्तेर्वसतेरद्यतनी स्यात्, स चेदर्थो यस्यां रात्रौ भूतस्तस्या एवान्त्ययामं व्याप्यास्वप्तरि कर्तरि स्यात्, अद्यतने-नैवान्त्ययामेनावच्छिन्ने अद्यतने चेत् प्रयोगोऽस्ति नाद्यतनान्तरे । अमुत्रावात्सम् । रात्र्यन्त्ययामे तु मुहूर्त्तमपि स्वापेऽमुत्रावसमिति ॥६॥ आन्याय्यादुत्थानादान्याय्याच्च संवेशनाद्, अहरुभयतः सार्द्धरात्रं वाऽद्यतनः ॥७॥ ख्याते लोकविज्ञाते, दृश्ये-प्रयोक्तुः शक्यदर्शने । कटं चक्रे ख्यातत्वाभावाद्, बभार गां-पृथ्वीं दृश्यत्वाभावात् ॥८॥ अयदि-यच्छब्दयोगाभावे, तेन अभिजानासि मित्र ? यत् कलिङ्गेष्ववसाम ॥ ९ ॥ स्मृत्यर्थे धातावुपपदे भूता-

स्मरसि मित्र ? वत्स्यामः, काश्मीरेष्ववसाम वा ॥ १० ॥

**कृतास्मरणातिनिह्नवे परोक्षा ॥५॥२॥११॥**

कृतस्यास्मरणेऽत्यन्ता-पह्नवे चापि धातुतः ॥
परोक्षा किल सुप्तोऽहं, विललाप न सङ्गतम् ॥ ११ ॥

**परोक्षे ॥५॥२॥१२॥**

परोक्षेऽर्थे परोक्षा स्याद्, भूतानद्यतने किल ॥
रामो बभूव सन् राजा, धर्मं दिदेश तीर्थकृत् ॥१२॥

**ह-शश्वद्-युगान्तःप्रच्छ्ये ह्यस्तनी वा ॥५॥२॥१३॥**

हे शश्वति युगान्तः स्यात्, प्रष्टव्ये ह्यस्तनी तथा ॥
भूतानद्यतनाद्यर्थे, परोक्षा चेति हाऽकरोत् ॥ १३ ॥

**अविवक्षिते ॥५॥२॥१४॥**

धातुतो ह्यस्तनी ज्ञेया, परोक्षत्वाविवक्षिते ॥
अभवत् सगरो राजा-ऽहन् कंसं नन्दनन्दनः ॥१४॥

**वाद्यतनी पुरादौ ॥५॥२॥१५॥**

परोक्षे चापरोक्षे च, भूतानद्यतने नवा ॥

---

नद्यतनार्थादिति 'स्मृत्यर्थादि च पूर्ववदि' त्यस्यभावः। आकाङ्क्षायां-क्रियान्तराङ्क्षायां सत्याम्। तथा चोदाहरणे तत्रौदनं भोक्ष्यामहे अभुञ्जमहि वेत्यनुसन्धेयम् ॥१०॥ कलिङ्गेषु ब्राह्मणो हतस्त्वया ? नाहं कलिङ्गान् जगाम इत्यत्यन्तनिह्नवोदाहरणम् ॥११॥ स्पष्टम् ॥१२॥ पञ्चवर्षमितः कालो युगस्तन्मध्यप्रच्छ्ये, एवम् इति ह चकार, शश्वदकरोत्, शश्वच्चकार, किमगच्छस्त्वं मथुराम् ?, किं जगन्थ त्वं मथुराम् ? ॥१३॥ स्पष्टम् ॥१४॥ पक्षे ऊषुर्वा,

पुरायुपपदेऽद्यतन्या–च्छात्राः पुराऽवसन् ॥ १५ ॥

## स्मे च वर्तमाना ॥५।२।१६॥

पूर्वोक्तार्थे स्म शब्दे च, पुरादौ चापि धातुनः ॥
वर्तमाना तदा वक्ति, पृच्छन्ति स्म पुरोधसम् ॥ १६ ॥

## ननौ पृष्टोक्तौ सद्वत् ॥५।२।१७॥

पृष्टोक्तौ तु ननौ भूते, सद्वज्जायेत धातुनः ॥
किमकार्षीः कटं चैत्र ?. ननु दृव ? करोमि भोः ? ॥१७॥

## नन्वोर्वा ॥५।२।१८॥

नन्वोस्तु पूर्वयोर्भूते, वर्तमाना तथा मता ॥
धातुनः सा च सद्वद् न, करोमि भो अहं कटम् ॥१८॥

## सति ॥५।२।१९॥

सत्यर्थेऽवस्थिताद् धातो–र्वर्तमानाविभक्तयः ॥
विद्वांसो न हि सीदन्ति, परदेशे स्वदेशवत् ॥ १९ ॥

## शत्रानशावेष्यति तु सस्यौ ॥५।२।२०॥

सत्यर्थेऽवस्थिताच्छत्रा–नशौ त्वेष्यति धातुतः ॥

---

एवं तदाऽमाप्निष्ट राघवः, पक्षेऽभापत, बभाषे ॥१५॥ एवं वसन्तीह पुरा छात्राः, अथाह वर्णी ॥१६॥ एवं ननु कुर्वन्तं मां पश्य ॥ १७ ॥ अस्यायं स्पष्टोऽर्थः—नन्वोरुपपदयोः पृष्टोक्तौ भूतेऽर्थे वर्तमानाद् धातोर्वर्तमानैव वर्तमाना स्यात्, सा च सद्वत्; किमकार्षीः कटं चैत्र ? न करोमि भोः ? नो कुर्वन्तं मां पश्य, नाकार्षम्, नु करोमि भोः ? नु कुर्वाणं मा पश्य, न्वकार्षम् ॥१८॥ एवम् अस्ति कूरं पचति, मांसं न भक्षयति, इहाधीमहे, तिष्ठन्ति पर्वता इत्यादि ॥१९॥ सष्टम् ॥ २० ॥

सस्यौ तौ यान् शयानश्च, यास्यन् शयिष्यमाणकः ॥२०॥

## तौ माङ्याक्रोशेषु ॥५॥२॥२१॥

माङ्याक्रोशेषु धातोस्तौ, स्यातां शत्रानशौ परौ ॥
मा जीवन् यः परावज्ञा-दुःखदग्धोऽपि जीवति ॥२१॥

## वा वेत्तेः क्वसुः ॥५॥२॥२२॥

सत्यर्थेऽवस्थिताद् वेत्ते-र्वा क्वसुप्रत्ययो भवेत् ॥
साधुस्तत्त्वं विदन् विद्वान्, वेत्तीदं विदुषा कृतम् ॥२२॥

## पूङ्-यजः शानः ॥५॥२॥२३॥

पूङ्-यजिभ्यां सदर्थाभ्यां, परः स्यात् शानप्रत्ययः ॥
पवमानो भवेत् कश्चिद्, यजमानस्तथापरः ॥२३॥

## वयःशक्ति-शीले ॥५॥२॥२४॥

धातोः सदर्थकादेषु, गम्येषु शानप्रत्ययः ॥
गच्छमानाः स्त्रियं केचिन्, निन्दमानाः परान् परे ॥२४॥

## धारीङोऽकृच्छ्रेऽतृश् ॥५॥२॥२५॥

अकृच्छ्रेऽवस्थिताद्धारे-रिङश्चातृश् सदर्थतः ॥
अधीयन् द्रुमपुष्पीय-माचाराङ्गञ्च धारयन् ॥२५॥

## सुग्द्विषार्हः सत्रिशत्रुस्तुत्ये ॥५॥२॥२६॥

सुगः सत्रिणि शत्रौ तु, द्विषोऽर्हः स्तुत्य इष्यते ॥

---

एवं मा पचन् वृषलो ज्ञास्यति, मा पचमानोऽसौ मर्तुकामः । वृत्तिस्थोदाहरण-श्लोकार्धमेवं 'तस्या जननिरेवास्तु, जननीक्लेशकारिणः' ॥ २१ ॥ स्पष्टे ॥२२॥२३॥ एवं समा'नानाः ॥२४॥ अकृच्छ्रं सुखसाध्यम् ॥ २५ ॥ एवं

कर्तयंतृशू द्विषन् चौरं, पूजामर्हन् विचार्यताम् ॥२६॥

तृन् शीलधर्मसाधुषु ॥५॥२॥२७॥

शीले धर्मे च साधौ च, धातोस्तृन् प्रत्ययो भवेत् ॥
कर्ता कटं गुरून् ध्याता-ऽध्येता शास्त्रं च धार्मिकः ॥२७॥

भ्राज्यलङ्कृग्निराकृग्भूसहिरुचिवृतिवृधिचरि-
प्रजनापत्रप इष्णुः ॥५॥२॥२८॥

इष्णुरेभ्यो नु शीलादि-सदर्थेभ्यो विधीयते ॥
साधुर्नालङ्करिष्णुर्यद्, भ्राजिष्णुस्तेजसा स्वयम् ॥२८॥

उदः पचि-पति-पदि-मदेः ॥५॥२॥२९॥

उत्पूर्वेभ्यो भवेदेभ्यः, शीलादाविष्णुप्रत्ययः ॥
उन्मदिष्णुर्जनो लोके, निन्द्यते बुद्धिमानपि ॥२९॥

भूजेः ष्णुक् ॥५॥२॥३०॥

शीलादौ वर्तमानाभ्यां, भूजिभ्यां ष्णुक् भवेत् परः ॥
जिष्णुरिन्द्रो महासत्त्वः, शिशुर्भूष्णुर्नयाश्रितः ॥३०॥

स्था-ग्ला-म्ला-पचि-परिमृजि-क्षेः स्नुः ॥५॥२॥३१॥

शीलादौ स्थादिधातुभ्यः, स्नुप्रत्ययो विधीयते ॥
ग्लास्नुर्म्लास्नुस्तथा पक्ष्णुः, परिमार्क्ष्णुर्जनः पृथक् ॥३१॥

---

सर्वे सुन्वन्तः, एष्विति किम्? सुरां सुनोति ॥२६॥ स्पष्टम् ॥२७॥ एवं निराकरिष्णुः, भविष्णुः, सहिष्णुः, रोचिष्णुः, वर्तिष्णुः, वर्द्धिष्णुः, चरिष्णुः, प्रजनिष्णुः, अपत्रपिष्णुः ॥२८॥ एवम् उत्पचिष्णुः, उत्पतिष्णुः, उत्पदिष्णुः ॥२९॥ स्पष्टम् ॥३०॥ एवं स्थास्नुः, क्षेष्णुः ॥३१॥

## त्रसि-गृधि-धृषि-क्षिपः क्नुः ॥५॥२॥३२॥

शीलादौ वर्तमानेभ्य, एभ्यः क्नुप्रत्ययो भवेत् ॥
त्रस्नुर्गृध्नुस्तथा धृष्णु-र्निन्दकः क्षिप्णुरुच्यते ॥३२॥

## सन् भिक्षाशंसेरुः ॥५॥२॥३३॥

सन्नन्ताद् धातुतो भिक्षा-ऽऽशंसिभ्यां चोर्भवेत् परः ॥
शं चिकीर्षुर्न लिप्सुः स्याद्, भिक्षुराशंसुकः शुभम् ॥३३॥

## विन्दिच्छू ॥५॥२॥३४॥

भवेद्वेत्तीच्छतिभ्यामु-र्निपात्येते क्रमात्तथा ॥
नुपान्त्यच्छान्तकादेशौ, विन्दुर्ज्ञानीच्छुरिच्छुकः ॥३४॥

## शृ-वन्देरारुः ॥५॥२॥३५॥

स्याच्छीलादिसदर्थाभ्या-माभ्यामारुः परस्ततः ॥
शरारुर्हिंसकः प्रोक्तो, वन्दारुः स्तुतिकारकः ॥३५॥

## दा-ट्धे-सि-शद-सदो रुः ॥५॥२॥३६॥

शीलादौ वर्तमानेभ्य, एभ्यो रुः प्रत्ययो भवेत् ॥
दारुर्धारुस्तथा सेरुः, शद्रुः सद्रुर्विचार्यताम् ॥३६॥

## शीङ्-श्रद्धा-निद्रा-तन्द्रा-दयि-पति-गृहि-स्पृहेरालुः ॥५॥२॥३७॥

शीलादिकसदर्थेभ्य, एभ्यः स्यादालुप्रत्ययः ॥

---

सूत्रपञ्चकं स्पष्टम् ॥३२॥३३॥३४॥३५॥३६॥ एवं शयालुः...

निद्रालुर्निद्रयाक्रान्तो, दयालुर्दययान्वितः ॥३७॥

**डौ सासहि-वावहि-चाचलि-पापतिः ॥५॥२॥३८॥**

यङन्ता डौ निपात्यन्ते, चत्वार एतके यथा ॥
शीलादौ सासहिर्वाव-हिश्चाचलिश्च पापतिः ॥३८॥

**सस्नि-चक्रि-दधि-जज्ञि-नेमिः ॥५॥२॥३९॥**

एते शीलादिकार्थाः स्यु-र्द्व्युक्तमन्तो डिप्रत्ययाः ॥
निपात्यास्तद् दधिर्जज्ञिः, सस्निश्चक्रिश्च नेमिर्वत् ॥३९॥

**शॄ-कम-गम-हन-वृष-भू-स्थ उकण् ॥५॥२॥४०॥**

शीलादिकसदर्थेभ्य, एभ्य उकण् परो भवेत् ॥
वर्षासु वार्षुको मेघः, कामुके भावुको भवेत् ॥४०॥

**लष-पत-पदः ॥५॥२॥४१॥**

शीलाद्यर्थे लषादिभ्यः, स्यादुकण् प्रत्ययः परः ॥
स्या उपपादुको यद्वा, प्रपातुकोऽभिलाषुकः ॥४१॥

**भूषा-क्रोधार्थ-जु-सृ-गृधि-ज्वल-शुचश्चानः ॥५॥२॥४२॥**

भूषाक्रोधार्थकेभ्योऽनो, ज्वादेर्लषादितस्तथा ॥
शीलायौ भूषणः कोऽपि, क्रोधनः कोऽपि शोचनः ॥४२॥

---

श्रद्धालुः, तन्द्रालुः, पतयालुः, गृहयालुः, स्पृहयालुः ॥३७॥ स्पष्टे॥३८॥३९॥
एवं शारुकः, आगामुकः, घातुकः, स्थायुकः ॥४०॥ स्पष्टम् ॥ ४१ ॥
एवं कोपनः, जवनः, सरणः गर्द्धनः, ज्वलनः अभिलषणः, पतनः, अथेस्य पदनः ॥ ४२ ॥

## चलशब्दार्थादकर्मकात् ॥५॥२॥४३॥

शब्दार्थाच्चलनार्थाच्चा–कर्मकाद् धातुतः परः ॥
अनः शीलादिकार्थे स्यात्, कम्पनः शब्दनस्तथा ॥४३॥

## इङितो व्यञ्जनाद्यन्तात् ॥५॥२॥४४॥

व्यञ्जनमादिरन्तश्च, तस्माद् ङितस्तथेदितः ॥
स्यादनः शयिता मीमां–सनो वर्द्धन एधिता ॥४४॥

## न णिङ्-य-सूद-दीप-दीक्षः ॥५॥२॥४५॥

णिङन्तयान्त सूदादि–धातुभ्यो नो भवेदनः ॥
दयिता सूदिता भाव–यितोत्पुच्छयिता यथा ॥४५॥

## द्रम–क्रमो यङः ॥५॥२॥४६॥

द्रमतेः क्रमतेश्चापि, शीलाद्यर्थे यङन्ततः ॥
स्यादनः प्रत्ययो दन्द्र–मणश्चङ्क्रमणस्तथा ॥४६॥

## यजि–जपि–दंशि–वदादूकः ॥५॥२॥४७॥

एभ्यो भवेद्यङन्तेभ्यः, शीलादावूकप्रत्ययः ॥
यायजूकः पुरा लोको, जञ्जपूकोऽधुनातनः ॥४७॥

## जागुः ॥५॥२॥४८॥

शीलादौ वर्तमानात् स्या–ज्जागर्तेरूकप्रत्ययः ॥
जागरूको जनः किञ्चि–न्नो भयमधिगच्छति ॥४८॥

---

अकर्मकादिति किम् ? पठिता विद्याम् ॥ ४३ ॥ अकर्मकादित्येव– वसिता वस्त्रम् ॥७४॥ एवं क्षमायिता, दीपिता, दीक्षिता ॥४५॥ स्पष्टम् ॥४६॥ एवं दन्दशूकः, वावदूकः ॥४७॥ स्पष्टम् ॥४८॥

## शमष्टकाद् घिनण् ॥५॥२॥४९॥

शीलादौ स्यात् शमाद्यष्ट–धातुभ्यः प्रत्ययो घिनण् ॥
शमी श्रमी क्षमी चाथा–प्रमादी नावसीदति ॥४९॥

## युज-भुज-भज-त्यज-रञ्ज-द्विष-दुष-द्रुह-दुहा-भ्याहनः ॥५॥२॥५०॥

युजादिदशधातुभ्यः, शीलादौ प्रत्ययो घिनण् ॥
त्यागी योगी न रागी स्याद्, द्वेषिणो द्रोहिदोषिणः॥५०॥

## आङः क्रीडमुषः ॥५॥२॥५१॥

आङः क्रीडमुषाभ्यां स्या–च्छीलादौ प्रत्ययो घिनण् ॥
स्यादाक्रीडी तथाऽऽमोषी, वञ्चत्यात्मानमात्मना ॥५१॥

## प्राच्च यमयसः ॥५॥२॥५२॥

प्रादाङश्च पराभ्यां स्या–दाभ्यां शीलादिके घिनण् ॥
यः प्रयामी स चायामी, मुधाऽऽयासिप्रयासिनौ ॥५२॥

## मथलपः ॥५॥२॥५३॥

प्रात् पराभ्यां भवेदाभ्यां, शीलादौ प्रत्ययो घिनण् ॥
प्रमाथी भव दोषाणां, प्रलापी मा भव क्वचित् ॥५३॥

## वेश्च द्रोः ॥५॥२॥५४॥

वेः प्राच्च द्रवतेर्धातोः, शीलादौ प्रत्ययो घिनण् ॥
आदित्यो हिमविद्रावी, प्रद्राव्यर्हैस्तमस्ततेः ॥५४॥

---

एवं दमी, तमी, भ्रमी, क्लमी ॥४९॥ एवं भोगी, भागी, दोही, अभ्याघाती । अकर्मकादित्येव–गां दोग्धा ॥५०॥ सूत्रसप्तकं स्पष्टम् ॥५१॥५२॥ ॥ ५३ ॥ ५४ ॥......

## विपरिप्रात् सर्तेः ॥५॥२॥५५॥

शीलादौ विपरिप्रेभ्यः, सर्तेः स्यात् प्रत्ययो घिनण् ॥
विसारी परिसारी च, प्रसारी च यथास्थलम् ॥५५॥

## समः पृचैप्-ज्वरेः ॥५॥२॥५६॥

समो ज्वरेः पृणक्तेश्च, शीलादौ प्रत्ययो घिनण् ॥
सम्पर्की दुष्टलोकानां, सञ्ज्वरी किं न जायते ॥५६॥

## संवेः सृजः ॥५॥२॥५७॥

शीलादौ वर्तमानात् स्यात्, संविभ्यां सृजतेर्घिनण् ॥
भव्यात्मजनसंसर्गी, विसर्गी पापभागिनः ॥५७॥

## संपरिव्यनुप्राद् वदः ॥५॥२॥५८॥

स्यात् संपरिव्यनुप्रेभ्यो, वदतेः प्रत्ययो घिनण् ॥
सत्सङ्गाद्भव संवादी,, विवादी मा क्वचिद्भव ॥५८॥

## वेर्विचकत्थस्रम्भकषकसलसहनः ॥५॥२॥५९॥

विचादिसप्तकाच्छीला-द्यर्थे विपूर्वकाद् घिनण् ॥
विवेकी न विकत्थी स्याद्, विकासी न विलासिकः ॥५९॥

## व्यपाभेर्लषः ॥५॥२॥६०॥

व्यपाभिभ्यो लषेर्धातोः, शीलादौ प्रत्ययो घिनण् ॥
विलाषी चाऽपलाषी चा-ऽभिलाषी दृश्यते जनः ॥६०॥

---

...५५॥५६॥५७॥ एवं परिवादी, अनुवादी, प्रवादी ॥५८॥ एवं विस्रम्भी, विकाषी, विघाती ॥५९॥ स्पष्टे ॥६०॥

## सम्प्राद् वसात् ॥५॥२॥६१॥

सम्प्राभ्यां वसतेर्धातोः, शीलादौ प्रत्ययो घिनण् ॥
संवासी यो हि संसारे, प्रवासी सततं भवेत् ॥६१॥

## समत्यपाभिव्यभेश्चरः ॥५॥२॥६२॥

शीलाद्यर्थे घिनण् वाच्यः, समादिपञ्चकाच्चरेः ॥
सञ्चारी चातिचारी चा-ऽपचारी जायते ग्रहः ॥६२॥

## समनुव्यवाद् रुधः ॥५॥२॥६३॥

समनुव्यवपूर्वात् स्यात्, शीलाद्यर्थे रुधेर्घिनण् ॥
संरोधी चानुरोधी चा-वरोधी च विरोधिनः ॥६३॥

## वेर्दहः ॥५॥२॥६४॥

विपूर्वाद् दहतेर्धातोः, शीलादौ प्रत्ययो घिनण् ॥
किं तेन जातु जातेन, यो विदाही भवेत् पितुः ॥६४॥

## परेर्देविमुहश्च ॥५॥२॥६५॥

परेराभ्यां दहेश्चापि, शीलादौ प्रत्ययो घिनण् ॥
परिदेवी भवेद् दुःखी, परिमोही च मोहतः ॥६५॥

## क्षिपरटः ॥५॥२॥६६॥

स्यादाभ्यां परिपूर्वाभ्यां, शीलादौ प्रत्ययो घिनण् ॥
परिराटी परिक्षेपी, दुःखी मूढश्च मोहितः ॥६६॥

---

...६१॥ एवम् अभिचारी, व्यभिचारी ॥६२॥ स्पष्टे ॥६३॥६४॥ एवं परिदाही ॥ ६५ ॥ स्पष्टम् ॥६६॥

## वादेश्च णकः ॥५॥२॥६७॥

परेः क्षिपे रटेर्वदिः, शीलादौ णकप्रत्ययः ॥
स्यात् परिराटकः किं सन्, वीणायाः परिवादकः ॥६७॥

## निन्द-हिंस-क्लिश खाद-विनाशि-व्याभाषा-ऽसूया-ऽनेकस्वरात् ॥५॥२॥६८॥

निन्दादिभ्यस्तथानेक–स्वराच्छीलादिके णकः ॥
निन्दको हिंसको वापि, स्याद् दरिद्रायको भुवि ॥६८॥

## उपसर्गाद् देवृदेविक्रुशः ॥५॥२॥६९॥

उपसर्गात् परेभ्यः स्या–देभ्यः शीलादिके णकः ॥
आदेवकस्तथाऽऽक्रोश–कः परिदेवकोऽसुखात् ॥६९॥

## वृङ्-भिक्षि-लुण्टि-जल्पि-कुट्टाट्टाकः ॥५॥२॥७०॥

एभ्यः शीलादिकार्थेभ्य–ष्टाकः स्यात् प्रत्ययः परः ॥
वराकी प्राप्य भिक्षाकं, जल्पाकी स्यात् किमद्भुतम् ॥७०॥

## प्रात् सूजोरिन् ॥५॥२॥७१॥

प्रात् पराभ्यां भवेदाभ्यां, शीलादाविन् परस्ततः ॥
प्रसवी प्रसुवतीत्येवं–शीलश्च प्रजवी द्रुतः ॥७१॥

---

एवं परिक्षेपकः ॥६७॥ एवं क्लेशकः, खादकः, विनाशकः, व्याभाषकः, असूयकः, चकासकः ॥६८॥ स्पष्टम् ॥ ६९ ॥ एवं लुण्टाकः, कुट्टाकः ॥७०॥ स्पष्टम् ॥ ७१ ॥

**जी-दृ-क्षि-विश्रि-परिभू-वमा-ऽभ्यमऽव्यथः ॥५॥२॥७२॥**

शीलादौ वर्तमानेभ्य, एभ्य इन् प्रत्ययो भवेत् ॥
जय्यादरी भवेद्व, परिभवी क्षयी भवेद् ॥७२॥

**सृघस्यदोमरक् ॥५॥२॥७३॥**

एभ्यः शीलादिकार्थेभ्यो, जायते प्रत्ययो मरक् ॥
सल्लक्षणं ततो ज्ञेयं, सृमरो घस्मरोऽद्मरः ॥७३॥

**भञ्जिभासिमिदो घुरः ॥५॥२॥७४॥**

शीलादौ वर्तमानेभ्य, एभ्यः स्यात् प्रत्ययो घुरः ॥
भासुरं मेदुरं वापि, शरीरं क्षणभङ्गुरम् ॥७४॥

**वेत्ति-च्छिद-भिदः कित् ॥५॥२॥७५॥**

स्याच्छीलादिसदर्थेभ्य, एभ्यः कित् प्रत्ययो घुरः ॥
विदुरः पण्डितो ज्ञानी, भिदुरं छिदुरं समम् ॥७५॥

**भियो रुरुकलुकम् ॥५॥२॥७६॥**

शीलाद्यर्थे भियो धातोः, स्यू रुरुकलुकाः कितः ॥
भीरुको भीलुको भीरुस्त्रयोऽमी कातरा मताः ॥७६॥

**सृ-जीण्-नशष्ट्वरप् ॥५॥२॥७७॥**

शीलादौ वर्तमानेभ्य, एभ्यः कित् प्रत्ययष्ट्वरप् ॥
न स्थिरं नश्वरं चित्ते, सृत्वरी जित्वरीत्वरः ॥७७॥

---

एवम् अत्ययी, विश्रयी, वमी, अभ्यमी, अव्यथी ॥७२॥ सूत्रपदकं सष्टम् ॥७३॥७४॥७५॥७६॥७७॥...

## गत्वरः ॥५॥२॥७८॥

गमेष्ट्वरप् मकारस्य, तकारश्च निपात्यते ॥
गत्वरं यौवनं लक्ष्मी- र्गत्वरी गत्वरो मदः ॥७८॥

## स्म्यजसहिंसदीपकम्पकमनमो रः ॥५॥२॥७९॥

स्म्यादिभ्यः सप्तधातुभ्यः, शीलादौ स्याद् रप्रत्ययः ॥
हिंस्रोऽजस्रं तथा स्मेरं,नम्रः कम्रश्च दीप्रकः ॥७९॥

## तृषिधृषि स्वपो नजिङ् ॥५॥२॥८०॥

तृषेर्धृषेः स्वपेश्चापि, शीलादौ प्रत्ययो नजिङ् ॥
तृष्णक् तृष्णजौ धृष्णक्, धृष्णजौ स्वप्नजौ तथा ॥८०॥

## स्थेश-भास-पिस-कसो वरः ॥५॥२॥८१॥

शीलादौ सम्भवेदेभ्यो, धातुभ्यो वरप्रत्ययः ॥
पर्वतः स्थावरो भानु-र्भास्वरः कस्वरेश्वरः ॥८१॥

## यायावरः ॥५॥२॥८२॥

यातेर्यङन्ततः शीला-दिसदर्थाद्वरो भवेत् ॥
कुटिलं याति तच्छीलो, यायावरो मतोऽमतः ॥८२॥

## दिद्युद्-ददृद्-जगज्-जुहू-वाक्-प्राट्-धी-श्री-द्रू-स्रू-ज्वायतस्तू-कटप्रू-परिव्राट्-भ्राजादयः ॥५॥२॥८३॥

एते शब्दा निपात्यन्ते, शीलाद्यर्थे क्विबन्तकाः ॥

---

...॥७८॥ एव कम्प्रः ॥७९॥ स्पष्टम् ॥८०॥ पेस्वरः ॥८१॥ स्पष्टम् ॥८२॥ एवं वाक्, तत्त्वप्राट्, शतद्रूः, आयतस्तूः, कटप्रूः, विभ्राट् ॥८३॥

दिद्युद् ददृत् परिव्राड् भा, धीः श्रीः स्रूजूर्जगज्जुहूः

## शंसंस्वयंविप्राद् भुवो डुः ॥५।२।८४॥

एभ्यः पराद् भुवो धातो–र्भवेद् डुः प्रत्ययः परः ॥
शम्भुः सम्भुः स्वयम्भुश्च, विभुः प्रभुर्भुवि श्रुताः ॥८४॥

## पुव इत्रो दैवते ॥५।२।८५॥

सदर्थतो भवेदित्रः, पुवः कर्तरि दैवते ॥
पवित्रोऽर्हन् सदा पातु, दुःखदग्धं जगत्त्रयम् ॥८५॥

## ऋषि नाम्नोः करणे ॥५।२।८६॥

इत्रः पुवः सदर्थात् स्यात्, करणे ऋषिसंज्ञयोः ॥
पवित्रोऽयमृषिर्दर्भः, पवित्रः सर्वकर्मसु ॥८६॥

## लू-धू सू-खनि-चर-सहा-र्त्तेः ॥५।२।८७॥

सदर्थल्वादिधातुभ्यः, करणे इत्रप्रत्ययः ॥
चरित्रं कर्मणोऽरित्रं, सवित्रं धर्मशर्मणः ८७॥

## नी-दाव्-शस्-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-पा-नहस्त्रट् ॥५।२।८८॥

सत्यर्थे वर्तमानेभ्य, एभ्यस्त्रट् करणे मतः॥
नेत्रं दात्रं तथा शस्त्रं, स्तोत्रं सेत्रं च पत्रकम् ॥८८॥

---

सूत्रत्रयं स्पष्टम् ॥८४॥८५॥८६॥ एवं धवित्रं, खनित्रं सहित्रम् ॥८७॥ एवं योत्रं, योक्त्रं, तोत्रं, सेक्त्रं, मेढ्रं, पात्री, नद्ध्री ॥८८॥

## हलक्रोडाऽऽस्ये पुवः ॥५॥२॥८९॥

करणे त्रट् पुवो धातो-र्हलसूकरयोर्मुखे ॥
पुनाति पवतेऽनेन, पोत्रं स्यात् सूकराननम् ॥८९॥

## दंशेस्त्रः ॥५॥२॥९०॥

सत्यर्थेऽवस्थिताद् दंशेः, करणे त्रो भवेत् परः ॥
रदना दशना दन्ता, रदा दंष्ट्रा महारदाः ॥९०॥

## धात्री ॥५॥२॥९१॥

दधातेर्धयतेर्वा त्रट्, कर्मणि प्रत्ययो भवेत् ॥
भवेदामलकी धात्री, धात्री वा स्तनदायिनी ॥९१॥

## ज्ञानेच्छार्चार्थजीच्छील्यादिभ्यः क्तः ॥५॥२॥९२॥

ज्ञानेच्छार्चार्थधातुभ्यो, जीद्भ्यः क्तो भवेत्तथा ॥
शील्यादिभ्यः सदर्थेभ्यो, राज्ञां ज्ञातश्च शीलितः ॥९२॥

## उणादयः ॥५॥२॥९३॥

धातोः सदर्थकात् कामं, बहुलं स्युरुणादयः ॥
लोकसिद्धाः प्रसिद्धाश्च, सहस्रश उणादयः ॥९३॥

॥ इति पञ्चमाध्याये द्वितीयः पादः ॥

---

सूत्रत्रयं स्पष्टम् ॥८९॥९०॥९१॥ एवं राज्ञां पूजितः, भिन्नः, इष्टः, रक्षितः ॥९२॥ कारुः, ईड्डः इत्यादय उणादयः साधनीयाः ॥९३॥

॥ इति द्वितीयपादः ॥

## अथ पञ्चमाध्याये तृतीयपादः ॥

### वत्स्र्यति गम्यादिः ॥५॥३॥१॥

इन्नादिप्रत्ययान्ताः स्युः, साधवोऽर्थे भविष्यति ॥
गम्यादयो गमी मोक्षं, नागामी स कदाचन ॥१॥

### वा हेतुसिद्धौ क्तः ॥५॥३॥२॥

हेतोः सिद्धौ भवेद्धातोः, क्तो नवा वत्स्र्यदर्थकात् ॥
वृष्टोऽब्दस्तर्हि सम्पन्नाः, सम्पत्स्यन्ते च शालयः ॥२॥

### कपोऽनिटः ॥५॥३॥३॥

अनिटः कपतेर्धातो-र्वत्स्र्यदर्थात् क्तप्रत्ययः ॥
कपिताः शत्रवः शूरैः, कप्ता हि तमसा दिशः ॥३॥

### भविष्यन्ती ॥५॥३॥४॥

वत्स्र्यदर्थाद्भवेद् धातो - र्भविष्यन्ती परा ततः ॥
गमिष्यति शिवं स्वर्वा, चारित्रं पालयिष्यति ॥४॥

### अनद्यतने श्वस्तनी ॥५॥३॥५॥

स्यादनद्यतने धातोः, श्वस्तनी वत्स्र्यदर्थकात् ॥
परिषद् भविता तस्या-मद्य श्वो वा गमिष्यति ॥५॥

### परिदेवने ॥५॥३॥६॥

वत्स्र्यति श्वस्तनीधातो-र्भवेद् गम्येऽनुशोचने ॥
गन्ता कदा त्वियं येवं, निधत्ते चरणौ हतौ ॥६॥

---

सूत्रसप्तकं सप्तम् ॥१॥२॥३॥४॥५॥६॥७॥

## पुरायावतोर्वर्तमाना ॥५॥३॥७॥

स्यात् पुरायावतोर्योगे, वर्तमाना नु वर्त्स्यति ॥
पुरा भुङ्क्ते तथा यावद्, भुङ्क्तेऽसौ जायते निरुक् ॥७॥

## कदाकर्ह्योर्नवा ॥५॥३॥८॥

वर्त्स्यत्यर्थे कदाकर्ह्योः, स्यादुपपदयोर्नवा ॥
वर्तमाना कदा भुङ्क्ते, कदा भोक्ता च भोक्ष्यते ॥८॥

## किंवृत्ते लिप्सायाम् ॥५॥३॥९॥

किंवृत्ते वर्तमाना वा, लिप्सायां वर्त्स्यदर्थकात् ॥
को भवतां भिक्षां दाता, ददाति दास्यतीश्वरः ॥९॥

## लिप्स्यसिद्धौ ॥५॥३॥१०॥

लिप्स्यसिद्धौ भवेद् वर्त-माना वा वर्त्स्यदर्थकात् ॥
भिक्षां ददाति दाता यः, स स्वर्गं याति यास्यति ॥१०॥

## पञ्चम्यर्थहेतौ ॥५॥३॥११॥

वर्तमाना नवा वर्त्स्य-दर्थात् प्रैषादिकारणे ॥
आयाताऽऽयाति यद्वाया-स्यति गुरुरधीष्व भोः ॥११॥

---

एवं कर्हि भुङ्क्ते, कर्हि भोक्ष्यते, कर्हि भोक्ता ॥८॥ विभक्तिडतरडतमान्तस्य किमो वृत्तं किंवृत्तम्, तस्मिन्नुपपदे प्रष्टुर्लिप्सायां गम्यमानायामिति यावत् । एवं कतरः, कतमः । किंवृत्त इति किम्? भिक्षां दास्यति । लिप्सायामिति किम्? कः पुरं यास्यति? ॥९॥ एवं दास्यति, याता ॥१०॥ स्पष्टम् ॥११॥

## सप्तमी चोर्ध्वमौहूर्तिके ॥५॥३॥१२॥

ऊर्ध्वमौहूर्तिके पञ्च-म्यर्थहेतौ तु धातुतः ॥
सप्तमी वर्तमाना च, वत्स्र्यति जायते नवा ॥१२॥

## क्रियायां क्रियार्थायां तुमूणकच्भविष्यन्ती ॥५॥३॥१३

क्रियार्थायां क्रियायां स्यु-र्वत्स्र्यदर्थात् तुमादयः ॥
कर्तुं वा कारको वाऽपि, करिष्यामीति गच्छति ॥१३॥

## कर्मणोऽण् ॥५॥३॥१४॥

क्रियार्थायां क्रियायां स्यात्, कर्मणो वत्स्र्यदर्थकात् ॥
धातोरण् प्रत्ययः कुम्भ-कारो याति गृहंगृहम् ॥१४॥

## भाववचनाः ॥५॥३॥१५॥

घञ्-क्त्यादयः क्रियायां स्युः, क्रियार्थायां तु वत्स्र्यति ॥
पाकाय पक्तये याति, पचनायाथ पाचकः ॥१५॥

## पदरुजविशस्पृशो घञ् ॥५॥३॥१६॥

पदादिभ्यश्चतुर्भ्यः स्याद्, धातुभ्यो घञ् परस्ततः ॥
पादो रोग स्तथा वेशः, स्पर्शः संसाध्यते यतः ॥१६॥

## सर्तेः स्थिरव्याधिबलमत्स्ये ॥५॥३॥१७॥

सर्त्तेर्घञ् स्यात् स्थिरे व्याधौ, बले मत्स्ये च कर्तरि ॥

---

ऊर्ध्वमुहूर्तादुपाध्यायश्चेदागच्छेद् आगच्छति, आगन्ता वा अथ त्वं तर्कमधीष्व ॥१२॥ क्रियायामिति किम्? भिक्षिष्ये इत्यस्य जटाः। क्रियार्थायामिति किम्? धावतस्ते पतिष्यति वासः ॥१३॥ सूत्रत्रयं स्पष्टम् ॥१४॥१५॥१६॥ एवं विसारो मत्स्यः ॥१७॥

सारः स्थिरो बलं सार-श्वातीसारो महासयः ॥१७॥

## भावाऽकर्त्रोः ॥५॥३॥१८॥

घञ् भवेत् सर्वधातुभ्यो, भावे चाकर्तृकारके ॥
पाको रागः समाहारः, प्रासस्त्यागः कृतः पचः ॥१८॥

## इङोऽपादाने तु टिद् वा ॥५॥३॥१९॥

भावाकर्त्रोरिङो घञ् स, टिद्वाऽपादानकारके ॥
उपाध्यायादुपाध्यायी, सदाऽध्यायं समाचरेत् ॥१९॥

## श्रो वायुवर्णनिवृत्ते ॥५॥३॥२०॥

एष्वर्थेषु भवेद् घञ् श्रो, भावाकर्त्रोः परस्ततः ॥
भावरणं तु नीशारः, शारो वर्णः समीरणः ॥२०॥

## निरभेः पूल्वः ॥५॥३॥२१॥

निरभिभ्यां क्रमादाभ्यां, घञ् भावेऽकर्तृकारके ॥
अभिलावश्च निष्पावः साध्यते न च बाध्यते ॥२१॥

## रोरुपसर्गात् ॥५॥३॥२२॥

उपसर्गाद् भवेद्रौते-र्घञ् भावेऽकर्तृकारके ॥
संरवणं च संरावः, उपरावो रवोऽन्यथा ॥२२॥

## भूश्र्यदोऽल् ॥५॥३॥२३॥

भू-श्रि-अदित्यतो भावा-कर्त्रोरल् सोपसर्गतः ॥
प्रभवः संश्रयो भावः, श्रायो विघसघासकौ ॥२३॥

---

सूत्रसप्तकं स्पष्टम् ॥१८॥१९॥२०॥२१॥२२॥२३॥२४॥

न्यादो नवा ॥५॥३॥२४॥

निपूर्वकाददेर्घस्ल-भावोऽकारस्य दीर्घता ॥
अलि वा सम्भवेन्न्यादो, निघसश्चेति साध्यताम् ॥२४॥

संनिव्युपाद् यमः ॥५॥३॥२५॥

उपसर्गेभ्य एभ्योऽल् वा, भावाकर्त्रोर्यमेः परः ॥
संयामः संयमो यामो, नियामो नियमस्तथा ॥२५॥

नेर्नदगदपठस्वनक्वणः ॥५॥३॥२६॥

अल् वा नेरुपसर्गात् स्याद्, नदादिधातुपञ्चकात् ॥
निनादो ननदो नादो, निक्वाणो निक्वणः क्वणः॥२६॥

वैणे क्वणः ॥५॥३॥२७॥

वैणेऽर्थे वा क्वणेर्भावा-कर्त्रोरल् सोपसर्गतः ॥
वीणायाः प्रक्वणो रम्यः, प्रक्वाणः शृङ्खलस्य च ॥२७॥

युवर्णवृदृवशरणगमृद्ग्रहः ॥५॥३॥२८॥

भावाकर्त्रोरिवर्णान्तो-वर्णान्तेभ्यश्च त्रादितः ॥
ऋदन्तेभ्यो ग्रहेश्चाल् स्या-च्चयो रवो वरः करः ॥२८॥

वर्षादयः क्लीबे ॥५॥३॥२९॥

भावाकर्त्रोर्निपात्यन्ते-ऽलन्ता एते यथाभवम् ॥
क्लीबे वनं भयं वर्षं, खलं पदं युगं धनम् ॥२९॥

---

एवं वियामः, वियमः, उपयामः उपयमः ॥२५॥ एवं निगदः, निगादः, निपठः, निपाठः, निस्वनः, निस्वानः ॥२६॥ स्पष्टम् ॥२७॥ एवं क्षयः, लवः, आदरः, वशः, रणः, गमः, ग्रहः ॥२८॥ स्पष्टे ॥२९॥३०॥

समुदोऽजः पशौ ॥५॥३॥३०॥

भावाकर्त्रोर्भवेदाभ्यां, परादजोऽल् पशौ सति ॥
उदजः समजः शूनां, समाजोऽस्ति वसन्नृणाम् ॥३०॥

सृग्लहः प्रजनाक्षे ॥५॥३॥३१॥

भावाकर्त्रोः क्रमादाभ्या–मल् भवेत् प्रजनाक्षयोः ॥
गवामुपसरोऽक्षाणां, ग्लहो ग्रहणमुच्यते ॥३१॥

पणेर्माने ॥५॥३॥३२॥

भावाकर्त्रोः पणेर्माना–र्थकादल् प्रत्ययो भवेत् ॥
स्यान्मूलकपणः पाणो, मानाभावे निरूप्यताम् ॥३२॥

सम्मदप्रमदौ हर्षे ॥५॥३॥३३॥

हर्षे स्यातामिमौ भावा–कर्त्रोरल्प्रत्ययान्तकौ ॥
प्रमादो नापि सम्माद:, सम्मदप्रमदार्थिनाम् ॥३३॥

हनोऽन्तर्घनान्तर्घणौ देशे ॥५॥३॥३४॥

हन्तेरल् घनघणादेशौ, देशेऽन्तःपूर्वकाद् यदि ॥
भावाकर्त्रोर्निपात्येते, देशोऽन्तर्घन उच्यते ॥३४॥

प्रघणप्रघाणौ गृहांशे ॥५॥३॥३५॥

हन्तेरल् घणघाणौ च, गृहांशेऽर्थे प्रपूर्वकात् ॥
निपात्येते प्रघाणो वा, प्रघणो द्वारि वर्तते ॥३५॥

---

प्रजनाक्ष इति किम् ? उपसारो मृन्यै राज्ञाम् ॥३१॥ स्पष्टे ॥३२॥ ३३॥ एवम् अतर्घणो देशः । अन्तर्घातोऽन्यः ॥३४॥ प्रघणः, प्रघाणो वा द्वारालिङ्गकः । प्रघातोऽन्यः ॥३५॥

निघोद्घसङ्घोद्घनापघनोपघ्नं निमितप्रशस्त-
गणात्याधानाङ्गासन्नम् ॥५॥३॥३६॥

हन्तेर्निघादयोऽलन्ताः, क्रमशो निमितादिषु ॥
निपात्यन्ते निघा वृक्षाः, सङ्घो जैनश्चतुर्विधः ॥३६॥

मूर्तिनिचिताभ्रे घनः ॥५॥३॥३७॥

मूर्त्याद्यर्थेषु हन्तेरल्, घनादेशो निपात्यते ॥
अभ्रं मेघो घनाः केशा, घनोऽस्य घनं दधि ॥३७॥

व्ययोद्रोः करणे ॥५॥३॥३८॥

हन्तेरेभ्यः परादल् च, घनादेशो निपात्यते ॥
करणेऽयोघनश्चैवं, विघनो द्रुघनस्तथा ॥३८॥

स्तम्बाद् घ्नश्च ॥५॥३॥३९॥

हन्तेः स्तम्बात् परादल् घ्न-घनादेशौ निपातितौ ॥
करणे भवतः स्तम्ब-घन स्तम्बघ्न इष्यते ॥ ३९ ॥

परेर्घः ॥५॥३॥४०॥

अल् करणे परेर्हन्ते-र्घादेशश्च निपात्यते ॥
पलिघः परिघो दत्तः, सज्जनैः पापकर्मणः ॥४०॥

---

उद्घः-प्रशस्तः, अत्याधीयन्ते च्छेदनार्थं कुट्टनार्थं वा काष्ठादीनि यत्र तदत्याधानम्, उद्घनः । अपघनः शरीरावयवः, उपघ्न आसन्नः ॥३६॥ स्पष्टे ॥३७॥३८॥ स्तम्बघ्नो दण्डः, स्तम्बघनो यष्टिः॥३९॥ परिघोऽर्गला ॥४०॥

## ह्वः समाह्वयाह्वयौ द्यूतनाम्नोः ॥५॥३॥४१॥

समाङ्पूर्वात्तथाङ्पूर्वाद्, द्यूते नाम्नि यथाक्रमम् ॥
निपात्यतेऽल् ह्वयादेशो, ह्वेर्धातोराह्वयोऽभिधा ॥४१॥

## न्यभ्युपवेर्वा श्चोत् ॥५॥३॥४२॥

भावाकर्त्रोः परादेभ्यो, ह्वयतेरल् विधीयते ॥
तद्योगे वा भवेदुश्च, निह्वोऽभिह्वो यथा ॥४२॥

## आङो युद्धे ॥५॥३॥४३॥

भावाकर्त्रोर्भवेदाङो, ह्वो युद्धेऽर्थेऽल् तथा च वाः ॥
उश्च महाहवे वृत्ते, स्यादाह्वायो गृहे गृहे ॥४३॥

## आहावो निपानम् ॥५॥३॥४४॥

निपाने ह्वयतेराङो, भावाकर्त्रोर्निपात्यते ॥
अल् आहावस्तथादेश, आहावो मृगपक्षिणाम् ॥४४॥

## भावेऽनुपसर्गात् ॥५॥३॥४५॥

भावे ह्वोऽनुपसर्गादल्, स्याद् वा उश्च ह्वस्तथा ॥
व्याप्ये ह्वायस्तथाऽऽह्वायः, सोपसर्गाद्यथोचितः ॥४५॥

## हनो वा वध् च ॥५॥३॥४६॥

वाऽनुपसर्गतो हन्ते-र्भावेऽल् तथा च वध् हनः ॥
प्राणिवधो महापापं, घातश्चात्मविघातकः ॥४६॥

---

समाह्वयः प्राणिद्यूतम्, ॥४१॥ एवम् उपह्वः, विह्वः ॥४२॥
सूत्राण्येकादश स्पष्टानि ॥४३॥४४॥४५॥४६॥...

व्यधजपमद्भयः ॥५॥३॥४७॥

स्यादेभ्योऽनुपसर्गेभ्यो, भावाकर्त्रोरलुच्यते ॥
व्यधो व्याधकुले ज्ञेयो, जपो मदविमर्दनः ॥४७॥

नवा क्वणयमहसस्वनः ॥५॥३॥४८॥

स्यादेभ्योऽनुपसर्गेभ्यो. भावाकर्त्रोर्नवाऽल् ततः ॥
क्वणः क्वाणो यमो यामो, हासः स्वानो हसः स्वनः॥

आङो रुप्लोः ॥५॥३॥४९॥

रुप्लुभ्यामाङ्पराभ्यामल्, भावाकर्त्रोर्भवेन्नवा ॥
आराव आरवः शब्द; आप्लावश्चैवमाप्लवः ॥४९॥

वर्षविघ्नेऽवाद् ग्रहः ॥५॥३॥५०॥

वर्षविघ्ने ग्रहेर्धातो-रवादल्प्रत्ययो नवा ॥
भावाकर्त्रोरवग्राहो-ऽवग्रहस्तदवग्रहः ॥५०॥

प्राद् रश्मितुलासूत्रे ॥५॥३॥५१॥

ग्रहे रश्मौ तुलासूत्रे, चार्थे प्रादल् भवेन्नवा ॥
भावाकर्त्रोस्तुलासूत्रं, रश्मिः प्रग्राहप्रग्रहौ ॥५१॥

वृगो वस्त्रे ॥५॥३॥५२॥

भावाकर्त्रोर्वृगो वस्त्र-विशेषेऽल्वा प्रपूर्वकात् ॥
प्रवारः प्रवरो वस्त्र-मन्यत्र प्रवरो यतिः ॥ ५२ ॥

---

...॥४७॥४८॥४९॥५०॥५१॥५२॥...

## उदः श्रेः ॥५॥३॥५३॥

उत्पूर्वाच्छ्रयतेरल् वा, भावाकर्त्रोर्विधीयते ॥
नित्यं प्राप्ते विकल्पोऽयमुच्छ्राय उच्छ्रयो यथा ॥५३॥

## यु-पू-द्रोर्घञ् ॥५॥३॥५४॥

एभ्य उत्पूर्वकेभ्यो घञ्, भावाकर्त्रोर्भवेदयम् ।
अलोऽपवाद उद्याव उत्पावो जिनमन्दिरम् ॥५४॥

## ग्रहः ॥५॥३॥५५॥

भावाकर्त्रोर्ग्रहेर्धातो-रुत्पूर्वाद् घञ् विधीयते ॥
अलोऽपवाद उद्ग्राहः, केवलाद् ग्रहविग्रहौ ॥५५॥

## न्यवाच्छापे ॥५॥३॥५६॥

भावाकर्त्रोर्ग्रहेराभ्या-माक्रोशे घञ् विधीयते ॥
निग्राहो जाल्म ते भूया-दवग्राहोऽस्तु तेऽथवा ॥५६॥

## प्राल्लिप्सायाम् ॥५॥३॥५७॥

भावाकर्त्रोर्हि लिप्सायां, ग्रहेर्घञ् स्यात् प्रपूर्वकात् ॥
दक्षिणार्थी स्रुवस्य प्र-ग्राहेण चरति द्विजः ॥५७॥

## समो मुष्टौ ॥५॥३॥५८॥

भावाकर्त्रोर्ग्रहेर्मुष्टौ, घञ् स्यात् संपूर्वकात्ततः ॥
सङ्ग्राहो मौष्टिकस्याहो, शिष्यस्य सङ्ग्रहोऽन्यथा ॥५८॥

---

॥५३॥ एवम् उद्रावः ॥५४॥ सध्वम् ॥५५॥ शाप इति किम् ? निग्रहश्चौरस्य ॥५६॥ एवं पिण्डपातार्थी भिक्षुः पात्रप्रग्राहेण चरति । लिप्सायामिति किम् ? स्रुवः प्रग्रहः शिष्यस्य ॥५७॥ सूत्रषट्कमतिरोहितार्थम् ॥५८॥

### युदुद्रोः ॥५॥३॥५९॥

घञ् संपूर्वेभ्य एभ्यः स्याद्, भावाकर्त्रोर्यथायथम् ॥
संयावश्चाथ सन्दावः, सन्द्रावश्च निरूप्यताम् ॥५९॥

### नियश्चानुपसर्गाद् वा ॥५॥३॥६०॥

भावाकर्त्रोर्नियो घञ् वा, स्याद् युदुद्रोश्च केवलात् ॥
नयो नायो यवो यावो, दावो द्रावो दवो द्रवः ॥६०॥

### वोदः ॥५॥३॥६१॥

उत्पूर्वान्नयतेर्भावा-कर्त्रोः स्याद् घञ् विभाषया ॥
ऊर्ध्वंनयनमुन्नाय, उन्नयश्चोच्यते बुधैः ॥६१॥

### अवात् ॥५॥३॥६२॥

अवपूर्वान्नियो भावा-कर्त्रोर्घञ्प्रत्ययो भवेत् ॥
जनोऽवनीयते दुष्टै-र्योऽवनायः स कथ्यते ॥६२॥

### परेर्द्यूते ॥५॥३॥६३॥

भावाकर्त्रोर्भवेद् द्यूते, विषये घञ् परेर्नियः ॥
शारीन् स परिणायेन, हन्ति परिणयोऽन्यथा ॥६३॥

### भुवोऽवज्ञाने वा ॥५॥३॥६४॥

भावाकर्त्रोर्भवेद् घञ् वा-ऽवज्ञानार्थात् परेर्भुवः ॥
मानिनां परिभावो वा, परिभवो हि मृत्युवत् ॥

---

॥५९॥६०॥६१॥६२॥६३॥ अवज्ञान इति किम्? समन्ताद् भूतिः परिभवः ॥६४॥

यज्ञे ग्रहः ॥५॥३॥६५॥

भावाकर्त्रोर्ग्रहेर्यज्ञ-विषये घञ् परेर्युतात् ॥
यज्ञे पूर्वपरिग्राहो-ऽन्यथाऽर्थस्य परिग्रहः ॥६५॥

संस्तोः ॥५॥३॥६६॥

स्तौतेः संपूर्वकाद् भावा-कर्त्रोर्घञ्प्रत्ययः क्रतौ ॥
समेत्य संस्तुवन्त्यत्र, संस्तावः सामवेदिनाम् ॥६६॥

प्रात् स्तुद्रुस्तोः ॥५॥३॥६७॥

स्यात् प्रात्परेभ्य एभ्यो घञ्, भावाकर्त्रोस्ततस्ततः ॥
प्रस्रावश्चाथ प्रद्रावः, प्रस्तावश्च स्रवो द्रवः ॥६७॥

अयज्ञे स्त्रः ॥५॥३॥६८॥

भावाकर्त्रोः प्रपूर्वात् स्त्रो, घञ् यज्ञे चेद् भवेन्नहि ॥
प्रस्तारो गणिते प्रोक्तः, प्रस्तरो बर्हिषः क्रतौ ॥६८॥

वेरशब्दे प्रथने ॥५॥३॥६९॥

विस्तीर्णत्वे स्तृणातेर्घञ्, वेः पराच्छब्दभिन्नके ॥
घञ् स्यात् पटस्य विस्तार-स्तृणस्य विस्तरोऽन्यतः ॥६९॥

छन्दोनाम्नि ॥५॥३॥७०॥

छन्दोनाम्नि स्तृणातेर्घञ्, भावाकर्त्रोर्विपूर्वकात् ॥
विष्टारपङ्क्तिराचिद्वत्, प्रसिद्धं नाम्नि छन्दसः ॥७०॥

——सूत्रचतुष्कं स्पष्टम् ॥६५॥६६॥६७॥६८॥ अशब्द इति किम् ? वाक्यविस्तरः ॥६९॥ सूत्रसप्तकं स्पष्टम् ॥७०॥

## क्षुश्रोः ॥५॥३॥७१॥

भावाकर्त्रोर्विपूर्वाभ्या-माभ्यां घञ्प्रत्ययो भवेत् ॥
विक्षावश्चाथ विश्रावो, वेरभावे क्षवः श्रवः ॥७१॥

## न्युदो ग्रः ॥५॥३॥७२॥

आभ्यां पराद् भवेद् घञ् ग्रो, भावाकर्त्रोर्यथायथम् ॥
उद्गारश्च निगारश्चा-न्यथा स्यात् संगरो गरः ॥७२॥

## किरो धान्ये ॥५॥३॥७३॥

न्युत्पूर्वात् किरतेर्धान्ये, भावाकर्त्रोर्नु घञ् भवेत् ॥
उत्कारोऽथ निकारः स्याद्, धान्यस्य निकरोऽन्यथा ॥७३॥

## नेर्वुः ॥५॥३॥७४॥

भावाकर्त्रोर्भवेद् धान्ये, वृधातोर्घञ् निपूर्वकात् ॥
नीवारा व्रीहयः प्रोक्ता, अन्यत्र निवरा कनी ॥७४॥

## इणोऽभ्रेषे ॥५॥३॥७५॥

भावाकर्त्रोरिणोऽभ्रेषे, निपूर्वाद् घञ् भवेत्ततः ॥
सन्तश्चलन्ति न न्याया-दसन्तश्च न्ययं गताः ॥७५॥

## परेः क्रमे ॥५॥३॥७६॥

परिपूर्वादिणो धातोः, क्रमे घञ्प्रत्ययो भवेत् ॥
पर्यायो भवतो भोक्तुं, स्वाध्यायस्य तु पर्ययः ॥७६॥

---

॥७१॥७२॥७३॥७४॥७५॥७६॥

## व्युपात् शीङः ॥५॥३॥७७॥

भावाकर्त्रोर्भवेदाभ्यां, शीङ्धातोर्घञ् क्रमे ततः ॥
तत्र राजविशायो रा–जोपशायो ममापि च ॥७७॥

## हस्तप्राप्ये चेरस्तेये ॥५॥३॥७८॥

अस्तेये हस्तप्राप्ये घञ्, भावाकर्त्रोश्चिगो भवेत् ॥
सतां पुष्पप्रचायः स्यात्, स्यात् पुष्पप्रचयोऽसताम् ॥७८॥

## चितिदेहावासोपसमाधाने कश्चादेः ॥५॥३॥७९॥

चेरेष्वर्थेषु घञ् भावा–कर्त्रोरादेश्च कश्चिगः ॥
काय ऋषिनिकायश्च, स्याद् गोमयनिकायकः ॥७९॥

## सङ्घेऽनूर्ध्वे ॥५॥३॥८०॥

सङ्घेऽनूर्ध्वे चिनोतेर्घञ्, कश्चादेः सन्नियोगतः ॥
सत्तार्किकनिकायोऽत्र, भाति सारसमुच्चयः ॥८०॥

## माने ॥५॥३॥८१॥

भावाकर्त्रोर्भवेद् माने, गम्ये घञ् धातुतस्ततः ॥
एकस्तण्डुलनिश्चायो, निश्चयो निर्णयः समः ॥८१॥

## स्थादिभ्यः कः ॥५॥३॥८२॥

भावाकर्त्रोर्भवेद्भ्यः कः प्रत्ययो यथायथः ॥
आखूत्थः शलभोत्थश्च, प्रस्थः संस्था प्रपा विधः ॥८२॥

---

क्रम इति किम् ? विशयः ॥७७॥ हस्तप्राप्ये इति किम् ? पुष्पप्रचयं करोति वृक्षाग्रे ॥७८॥ चितिर्यज्ञेऽग्निविशेषस्तदाधारो वा, आकायमग्निं चिन्वीतः उपसमाधानमुपर्युपरि राशीकरणम् ॥७९॥ अनूर्ध्व इति किम् ? शूकरनिचयः ॥८०॥ सूत्रनवकं स्पष्टम् ॥८१॥८२॥...

ट्वितोऽथुः ॥५॥३॥८३॥

भावाकर्त्रोष्ट्वितो धातोः, स्यादथुः प्रत्ययः परः ॥
स्फूर्जथुर्वज्रनिर्घोषे, वेपथुः कम्पने मतः ॥८३॥

ड्वितस्त्रिमक् तत्कृतम् ॥५॥३॥८४॥

धात्वर्थकृतमित्यर्थे, भावाकर्त्रोर्ड्वितस्त्रिमक् ॥
लब्धिमं कृत्रिमञ्चैव, याचित्रिमं च पक्त्रिमम् ॥८४॥

यजिस्वपिरक्षियतिप्रच्छो नः ॥५॥३॥८५॥

भावाकर्त्रोर्भवेदेभ्यो, धातुभ्यो नः परस्ततः ॥
यज्ञः स्वप्नस्तथा रक्ष्णो, यत्नः प्रश्नः प्रसाध्यते ॥८५॥

विच्छो नङ् ॥५॥३॥८६॥

विच्छेर्धातोर्भवेद् भावा-कर्त्रोर्नङ् प्रत्ययः परः ॥
ङित्वं गुणनिषेधार्थं, कृतं विश्न उदाहृतिः ॥८६॥

उपसर्गाद् दः किः ॥५॥३॥८७॥

दासंज्ञधातुतो भावा-कर्त्रोः किरुपसर्गतः ॥
आदिराधिः समाधिश्च, निधिः सन्धिरुपावधिः ॥८७॥

व्याप्यादाधारे ॥५॥३॥८८॥

आधारे कारके किः स्याद्, व्याप्याद् दासंज्ञकात् परात् ॥
जलधिः सागरः प्रोक्त-स्तूणीरः शरधिस्तथा ॥८८॥

॥८३॥८४॥८५॥८६॥८७॥८८॥ .....

## अन्तर्द्धिः ॥५॥३॥८९॥

अन्तःपूर्वाद् दधातेः कि–र्भावाकर्त्रोर्निपात्यते ॥
अन्तर्धा, व्यवधा पुंसि, त्वन्तर्द्धिरपवारणम् ।'८९॥

## अभिव्याप्तौ भावेऽनञिन् ॥५॥३॥९०॥

भावे धातोरभिव्याप्ता–वनञिन्प्रत्ययौ मतौ ॥
सेनायां वर्तते सांरा–विणं संरवणं तथा ॥९०॥

## स्त्रियां क्तिः ॥५॥३॥९१॥

भावाकर्त्रोर्भवेद् धातोः, परः क्तिप्रत्ययः स्त्रियाम् ॥
कृतिर्नीतिर्नुतिर्भूति–र्हृतिः कारश्चिनिश्चयः ॥९१॥

## श्वादिभ्यः ॥५॥३॥९२॥

भावाकर्त्रोर्भवेदेभ्यो. धातुभ्यः क्तिः स्त्रियां परः ॥
श्रुतिः स्तुतिः प्रतिस्तुच्च, संवित्तिर्वेदना मतिः ॥९२॥

## समिणासुगः ५॥३॥९३॥

संपूर्वादिण आङ्पूर्वात्, सुनोतेश्च स्त्रियां परः ॥
भावाकर्त्रोर्भवेत् क्तिस्त–दासुतिः समितिस्तथा ॥९३॥

## साति-हेति-यूति-जूति-ज्ञप्ति-कीर्तिः ॥५॥३॥९४॥

भावाकर्त्रोर्निरुप्यन्ते, क्त्यन्ता एते निपातिताः ॥
-सातिर्हेतिस्तथा यूति–र्जूतिश्च ज्ञप्तिकीर्तयः ॥९४॥

---

॥८९॥ अभिव्याप्ताविति किम् ? संरावः ॥९०॥ सूत्रपञ्चकं स्पष्टम् ॥
॥९१॥९२॥९३॥९४॥

## गापापचो भावे ॥५॥३॥९५॥

भावे गापापचिभ्यः क्तिः, प्रत्ययः स्यात् स्त्रियां ततः ॥
सङ्गीतिश्च प्रपीतिश्च, पक्तिरिति निरूप्यताम् ॥९५॥

## स्थो वा ॥५॥३॥९६॥

भावेऽर्थे तिष्ठतेर्धातोः, स्त्रियां क्तिः प्रत्ययो नवा ॥
उपस्थितिरयोग्यस्य, प्रायो नो संसदीक्ष्यते ॥९६॥

## आस्यटि-व्रज्-यजः क्यप् ॥५॥३॥९७॥

स्त्रियामेभ्यश्चतुर्भ्यः स्याद्, भावे क्यप् प्रत्ययः परः ॥
वृथाटया खलु सा तस्या, आस्याऽपि च निरर्थिका ॥९७॥

## भृगो नाम्नि ॥५॥३॥९८॥

भावेऽर्थे क्यप् भृगो धातोः, संज्ञायां जायते स्त्रियाम् ॥
भृत्या भरणमुन्नेयं, भार्या वधूर्भृतिस्ततः ॥९८॥

## समज-निपत्-निषद्-शीङ्-सुग्-विदि-चरि-मनीणः ॥५॥३॥९९॥

भावाकर्त्रोर्भवेदेभ्यः, संज्ञायां क्यप् स्त्रियां परः ॥
विद्या शय्या समज्येत्या, चर्या संवीतिरन्यथा ॥९९॥

## कृगः श च वा ॥५॥३॥१००॥

भावाकर्त्रोः कृगः शो वा, क्यप् च स्त्रियां भवेत् परः ॥
क्रिया कृत्या कृतिश्चैते, साधनीया यथारुचि ॥१००॥

---

॥९५॥ एवं प्रस्थितिः, आस्था ॥९६॥ एवं व्रज्या, इज्या ॥९७॥ स्पष्टम् ॥९८॥ एवं निपत्या, निपद्या, सुत्या, मन्या ॥९९॥ सूत्रनवकं स्पष्टार्थम् ॥१००॥......

मृगयेच्छायाच्ञातृष्णाकृपाभाश्रद्धाऽन्तर्द्धा ॥५॥३॥१०१॥

मृगयेच्छा तथा याच्ञा, तृष्णाऽन्तर्द्धा च भा कृपा ॥
श्रद्धा चेत्यष्टशब्दाः स्युः, स्त्रियामेते निपातिताः ॥१०१॥

परेः सृचरेर्यः ॥५॥३॥१०२॥

आभ्यां यः परिपूर्वाभ्यां, भावाकर्त्रोः स्त्रियां भवेत् ॥
परिचर्याऽथवा चूर्तिः, परिसर्या च संसृतिः ॥१०२॥

वाऽटाट्यात् ॥५॥३॥१०३॥

भावाकर्त्रोर्भवेद्वा यः यङन्तादटतेः स्त्रियाम् ॥
अटाटया स्यादटाटा वा–ऽटनं पापाद् भवे भवे ॥१०३॥

जागुरश्च ॥५॥३॥१०४॥

भावाकर्त्रोर्भवेदश्च, यश्च जागुः स्त्रियां परः ॥
जागर्य्या जागरा कार्य्या, शुभस्वप्नार्थसाधिका ॥१०४॥

शंसिप्रत्ययात् ॥५॥३॥१०५॥

अः शंसेः प्रत्ययान्ताच्च, भावाकर्त्रोर्भवेत् स्त्रियाम् ॥
प्रशंसा विदुषां कार्य्या, गोपाया गुणिनां यथा ॥१०५॥

क्तेटो गुरोर्व्यञ्जनात् ॥५॥३॥१०६॥

स्यात् क्तेटो व्यञ्जनान्तादो, भावाकर्त्रोर्गुरोः स्त्रियाम् ॥
ईहोहेक्षा यथा स्रस्तिः, स्फूर्तिः संशीतिरन्यथा ॥१०६॥

---

॥१०१॥१०२॥१०३॥१०४॥१०५॥१०६॥

## षितोऽङ् ॥५॥३॥१०७॥

भावाकर्त्रोः षितो धातोः, स्त्रियामङ् प्रत्ययो भवेत् ॥
पचा क्षमा घटा चैवं, प्रथा त्वरा व्यथा जरा ॥१०७॥

## भिदादयः ॥५॥३॥१०८॥

भावाकर्त्रोर्यथालक्ष्यं, निपात्यन्ते भिदादयः ॥
स्त्रियामङ्प्रत्ययान्तास्तद्, भिदा विदा दृया क्षपा॥१०८॥

## भीषिभूषिचिन्तिपूजिकथिकुम्बिचर्चिस्पृहितोलिदोलिभ्यः ॥५॥३॥१०९॥

अङ् एभ्यो ण्यन्तधातुभ्यो, भावाकर्त्रोः स्त्रियां भवेत् ॥
भीषा भूषा कथा चिन्ता, पूजा चर्चा स्पृहा यथा ॥१०९॥

## उपसर्गादातः ॥५॥३॥११०॥

भावाकर्त्रोः स्त्रियामङ् स्या-दादन्तादुपसर्गकात् ॥
प्रदा प्रधा विधा सन्धाऽऽधोपदा चोपधा प्रमा ॥११०॥

## णिवेत्त्यासश्रन्थघट्टवन्देरनः ॥५॥३॥१११॥

ण्यन्ताद् वेत्त्यादिकेभ्यश्च, भावाकर्त्रोः स्त्रियामनः ॥
कारणा वेदना चव, वन्दनोपासनाऽऽसना ॥१११॥

## इषोऽनिच्छायाम् ॥५॥३॥११२॥

---

॥१०७॥१०८॥ एवं कुम्बा, तोला, दोला ॥१०९॥ उपसर्गादिति किम् ? दत्तिः ॥११०॥ एवं श्रन्थना, घट्टना ॥१११॥ सूत्रचतुष्कं स्पष्टम् ॥११२॥

अनिच्छायामिषेर्भावा-कर्त्रोः स्त्रियामनो भवेत् ॥
अन्वेषणैषणापिण्डै-षणा स्यादिष्टिरन्यथा ॥११२॥

पर्यधेर्वा ॥५॥३॥११३॥

भावाकर्त्रोः स्त्रियामाभ्यां, वाऽनोऽनिच्छार्थकादिषेः ॥
पर्येषणा परीष्टिश्चा-ध्येषणाऽधीष्टिरामता ॥११३॥

क्रुध्सम्पदादिभ्यः क्विप् ॥५॥३॥११४॥

समादिभ्यः पदादिभ्यः, क्रुधादितश्च केवलात् ॥
भावकर्त्रोः स्त्रियां क्विप् स्यात्, क्रुत् युत् सम्पद् विपत् समित्

भ्यादिभ्यो वा ॥५॥३॥११५॥

भावाकर्त्रोः स्त्रियां क्विप् वा, भ्यादिकेभ्यो विधीयते ॥
भीर्भीतिर्युक् तथा युक्ति-र्भूर्भूतिः क्रून् क्रूतिस्तथा॥११५॥

व्यतिहारेऽनीहादिभ्यो ञः ॥५॥३॥११६॥

स्त्रियामीहादिवर्जेभ्यो, धातुभ्यः स्याद् ञप्रत्ययः ॥
व्यतिहारे जडानां स्याद्, व्याचक्रोशी परस्परम् ॥११६॥

नञोऽनिः शापे ॥५॥३॥११७॥

भावाकर्त्रोर्नञो धातोः, शापे गम्ये स्त्रियामनिः ॥
पाप ! तेऽजननिर्भूयाद्, स्मृतिर्वा यत्त्वाऽकृतिः ॥११७॥

ग्लाहाज्यः ॥५॥३॥११८॥

---

॥११३॥११४॥११५॥ बाहुलकाद् भावे । अनीहादिभ्य इति किम् ?
व्यतीहा, व्यतीक्षा ॥११६॥ स्पष्टे ॥११७॥११८॥

भावाकर्त्रोर्भवेदेभ्य-स्त्रिधातुभ्यः स्त्रियामनिः ॥
ग्लानिर्हानिस्तथा ज्यानिः, शर्मणे जायते क्वचित् ॥११८॥

प्रश्नाख्याने वेञ् ॥५॥३॥११९॥

धातोः प्रश्ने तथाऽऽख्याने, भावाकर्त्रोः स्त्रियां नवेञ् ॥
कां कारिं कारिकां कृत्या-मकार्षीः कां कृतिं क्रियाम् ॥

पर्यायार्हर्णोत्पत्तौ च णकः ॥५॥३॥१२०॥

एष्वर्थेषु तथा प्रश्ना-ख्यानयोश्च भवेण्णकः ॥
भावाकर्त्रोः स्त्रियां धातो-र्भवतः शायिकाऽऽसिका ॥१२०॥

नाम्नि पुंसि च ॥५॥३॥१२१॥

भावाकर्त्रोः स्त्रियां नाम्नि, धातुतो णकप्रत्ययः ॥
पुंसि चापि यथालक्ष्य-मरोचको चिपादिका ॥१२१॥

भावे ॥५॥३॥१२२॥

धातोर्धात्वर्थनिर्देशे, भवेद् भावे स्त्रियां णकः ॥
शायिका जीविकेक्षोहा स्मरणेहा च कारिका ॥१२२॥

क्लीबे क्तः ॥५॥३॥१२३॥

भावाऽर्थे सम्भवेद् धातोः, क्तप्रत्ययो नपुंसके ॥
छात्रस्य हसितं नृत्तं, शिखिनः करिणो गतम् ॥१२३॥

---

एवं सर्वां कारिं, कारिकां, क्रियां, कृत्यां, कृतिं वा अकार्षम् ॥११९॥ एवमर्हसि त्वमिक्षुभक्षिकाम्, क्षणे इक्षुभक्षिकां मे धारयसि, इक्षुभक्षिका उदपादि, कां कारिकामकार्षीः? सर्वां कारिकामकार्षम् ॥१२०॥ एवं प्रच्छर्दिका, शालभञ्जिका ॥१२१॥ स्पष्टम् ॥१२२॥ क्लीबे इति किम्? हासः ॥१२३॥

## अनट् ॥५॥३॥१२४॥

लिङ्गे नपुंसके धातो-र्भावेऽर्थे सम्भवेदनट् ॥
मधुरं भोजनं यद्वद्, गमनं वचनं शिशोः ॥१२४॥

## यत्कर्मस्पर्शात् कर्त्रङ्गसुखं ततः ॥५॥३॥१२५॥

यत्कर्मस्पर्शतः कर्त्र-ङ्गसुखं कर्मणस्ततः ॥
भावे धातोरनट् क्लीबे, स्यात् सुखं मिष्टभोजनम् ॥१२५॥

## रम्यादिभ्यः कर्तरि ॥५॥३॥१२६॥

अनट् कर्तरि धातुभ्यो, रम्यादिभ्यो विधीयते ॥
रमणी कमनी कान्ता, नन्दनी ह्लादनी रमा ॥१२६॥

## कारणम् ॥५॥३॥१२७॥

अनट् कर्तरि कृग्धातोः, स्याद् वृद्धिश्च निपातनात् ॥
यदि नैवेप्सितं कार्य्यं, कारणमपसार्यताम् ॥१२७॥

## भुजिपत्यादिभ्यः कर्मापादाने ॥५॥३॥१२८॥

अनट् कर्मणि भुज्यादे-रपादाने च धातुतः ॥
पत्यादेर्भोजनं प्रश्न्यो-त्तनः प्रपतनस्तथा ॥१२८॥

---

स्पष्टम् ॥१२४॥ अस्य सूत्रस्यायं स्पष्टोऽर्थः—येन कर्मणा संस्पृष्टस्य-कर्तुरङ्गस्य सुखं स्यात् ततः पराद् धातोः क्लीबे भावेऽनट् स्यात् । पयःपानं सुखम् । कर्मेति किम्? तूलिकाया उत्थानं सुखम् । कर्त्रिति किम्? शिष्येण गुरोः स्थापनं सुखम् । अङ्गेति किम्? पुत्रस्य परिष्वजनं सुखम् । सुखमिति किम्? कण्टकानां मर्दनम् । नित्यसमासार्थमिदम् ॥१२५॥ स्पष्टं सूत्रचतुष्कम् ॥१२६॥१२७॥१२८॥

## करणाधारे ॥५॥३॥१२९॥

करणाधारयोर्धातोः, स्यादनट्प्रत्ययस्ततः ॥
एषणी लेखनी गोदो–हनी शयनमासनम् ॥१२९॥

## पुन्नाम्नि घः ॥५॥३॥१३०॥

करणाधारयोः पुंसः, संज्ञायां घश्च धातुतः ॥
प्रच्छदः प्रणवो दन्त–च्छदः परिसरो भवः ॥१३०॥

## गोचरसंचरवहव्रजव्यजखलापणनिगमबक–भगकषाऽऽकषनिकषम् ॥५॥३॥१३१॥

करणाधारयोरेते, घान्ताः पुन्नाम्नि साधवः ॥
गोचरः सञ्चरश्चैवं, भगो भगं व्यजो व्रजः ॥१३१॥

## व्यञ्जनाद् घञ् ॥५॥३॥१३२

करणाधारयोर्घञ् स्यात्, पुन्नाम्नि व्यञ्जनान्ततः ॥
वेदो वलभपामार्गौ, रागो रङ्गः क्रमस्तथा ॥१३२॥

## अवात् तॄ–स्तॄभ्याम् ॥५॥३॥१३३॥

करणाधारयोराभ्या–मवात् पुन्नाम्नि घञ् भवेत् ॥
अवतारस्त्ववस्तारो–ऽवतारः सरितोऽथवा ॥१३३॥

---

॥१२९॥ पुमिति किम् ? निचयनी । नाम्नीति किम् ? प्रहरणो दण्डः॥ ॥१३०॥ एवं वहः, खलः, आपणः, निगमः, बकः, कषः, आकषः, निकषः ॥१३१॥ स्पष्टे ॥१३२॥१३३॥

न्यायाऽवायाऽध्यायोद्यावसंहारावहाराऽऽधारदारजारम् ॥५॥३॥१३४॥

करणाधारयोरेते, घञन्ताः स्युर्निपातिताः
पुन्नाम्नि न्याय आधारो, दारा जारोऽवहारकः ॥१३४॥

उदङ्कोऽतोये ॥५॥३॥१३५॥

करणाधारयोरर्थे–हत्पूर्वाद् घञ् निपात्यते ॥
पुन्नाम्नि स्यान्न तोये स्या–त्तैलोदङ्कः पयोधृतः ॥१३५॥

आनायो जालम् ॥५॥३॥१३६॥

पुन्नाम्नि करणे जाले, घञ् स्यादाङो नियः परः ॥
आनायो मृगमत्स्यानां, सद्यः प्राणापहारकः ॥१३६॥

खनो डडरेकेकवकघं च ॥५॥३॥१३७॥

करणाधारयोरेते, घञ् च पुन्नाम्नि वै खनेः ॥
आखनिकवकश्चाख, आखान आखनाखरौ ॥१३७॥

इकिश्तिव् स्वरूपार्थे ॥५॥३॥१३८॥

धातोरर्थे स्वरूपे च, प्रत्ययाः स्युरिकिश्तिवः ॥
वेत्तिर्भञ्जिः कृधिर्बुद्धिः पचतिर्वर्तते भुजिः ॥१३८॥

दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात् खल् ॥५॥३॥१३९॥

---

एवम् अवायः, अध्यायः उद्यावः,संहारः, ॥१३४॥ अतोय इति किम् ? उदकोदञ्चनः ॥१३५॥ स्पष्टम् ॥१३६॥ एवम् आखनिकः ॥१३७॥ स्पष्टम् ॥१३८॥ एवम् ईषच्छयम् , ईषत्करः । कृच्छ्रार्थ इति किम् ? ईषल्लभ्यं धनम् ॥१३९॥

कृच्छ्रवृत्तेर्दुरोऽकृच्छ्रा-र्थस्वीषद्भ्यां च खल् भवेत् ॥
दुःशयं दुष्करो दुःखं, सुशयं सुकरः सुखम् ॥१२९॥

**च्व्यर्थे कर्त्राप्याद् भूकृगः ॥५॥३॥१४०॥**

खल् कर्तृकर्मवाचिभ्यां, भूकृग्भ्यां च्व्यर्थके क्रमात् ॥
अन्यच्च पूर्ववज्ज्ञेयं, स्याद् दुराढ्यंभवं त्वया ॥१४०॥

**शासूयुधिदृशिधृषिमृषाऽऽतोऽनः ॥५॥३॥१४१॥**

कृच्छ्राकृच्छ्रार्थदुःस्वीषत्-पूर्वेभ्य एभ्य आमतः ॥
अनश्चादन्तधातुभ्यो, दुर्योधनः सुयोधनः ॥१४१॥

॥ इति पञ्चमाध्याये तृतीयः पादः ॥

---

कृच्छ्राकृच्छ्रार्थेभ्यो दुःस्वीषद्भ्यः पराभ्यां च्व्यर्थवृत्तिकर्तृकर्मवाचिभ्यां यथासङ्ख्यं भूकृग्भ्यां परः खल् स्यादिति सूत्रार्थः । दुराढ्यंभवम् , स्वाढ्यंभवम् , ईषदाढ्यंभवं भवता । दुराढ्यंकरः, स्वाढ्यंकरः, ईषदाढ्यंकरश्चैत्रस्त्वया । च्व्यर्थ इति किम् ? दुराढ्येन भूयते ॥१४०॥ एवं दुःशासनः, सुशासनः, ईषच्छासनः, ईषद्योधनः दुर्दर्शनः, ईषद्दर्शनः, दुर्धर्षणः, सुधर्षणः, ईषद्धर्षणः, दुर्मर्षणः सुमर्षणः ईषद्मर्षणः, दुरुत्थानम् , सूत्थानम्, ईषदुपत्थानम् ॥१४१॥

॥ इति तृतीयः पादः ॥

# अथ चतुर्थः पादः ॥

## सत्सामीप्ये सद्वद्वा ॥५॥४॥१॥

वर्तमानस्य सामीप्ये, प्रत्यया वर्तमानवत् ॥
धातोर्नवाऽयमायामि, विद्धयागच्छन्तमेव माम् ॥१॥

## भूतवच्चाऽऽशंस्ये वा ॥५॥४॥२॥

आशंस्ये भूतवद् धातोः, सद्वच्च प्रत्यया नवा ॥
चेदागमदुपाध्याय–स्तर्कमेतेऽध्यगीष्महे ॥२॥

## क्षिप्राऽऽशंसार्थयोर्भविष्यन्तीसप्तम्यौ ॥५॥४॥३॥

क्षिप्राशंसार्थयोर्धातोराशंस्यार्थाद् यथाक्रमम् ॥
सप्तमी च भविष्यन्ती, गुरुश्चेदागमिष्यति ॥३॥

---

समीपमेव सामीप्यम् , वर्तमानस्य सामीप्ये भूते भविष्यति चार्थे वर्तमानाद् धातोर्वर्तमाना इव प्रत्यया वा स्युः, इति सूत्रार्थः। आगतोऽसि ? कदा चैत्र!, अयमागच्छामि, आगच्छन्तमेव मां विद्धि; पक्षे–अयमागमम् , एषोऽस्म्यागतः। कदा चैत्र ? गमिष्यसि ? एष गच्छामि, गच्छन्तमेव मां विद्धि; पक्षे एष गमिष्यन्तमेव मां विद्धि ॥१॥ अनागतस्यार्थस्य प्राप्तुमिच्छा–आशंसा, तद्विषय आशंस्यः, तदर्थाद् धातोर्भूतवत् सद्वच्च प्रत्यया वा स्युरितिसूत्रार्थः। एवमुपाध्यायश्चेदागच्छति, एते तर्कमधीमहे; पक्षे उपाध्यायश्चेदागमिष्यति, आगन्ता वा एते तर्कमध्येष्यामहे, अध्येतास्महे वा। आशंस्य इति किम् ? उपाध्याय आगमिष्यति तर्कमध्येष्यते मैत्रः ।२॥ एतत्सूत्रवृत्तावुदाहरणाग्रेऽनुसन्धेयमित्थम्–आगच्छति, आगमत् , आगन्ता, क्षिप्रमाशु एते सिद्धान्तमध्येष्यामहे; गुरुश्चेदागच्छति, आगमत् , आगमिष्यति, आगन्ता वा, आशंसे संभावये युक्तोऽधीयीय ॥३।

## सम्भावने सिद्धवत् ॥५॥४॥४॥

ज्ञेयाः सम्भावने धातोः, सिद्धवत् प्रत्यया ननु ॥
समये चेत् प्रयत्नोऽभू-द्दुदभूवन् विभूतयः ॥४॥

## नाऽनद्यतनः प्रबन्धाऽऽसत्त्योः ॥५॥४॥५॥

समासत्तौ प्रबन्धे च, नानद्यतनप्रत्ययः ॥
आजन्म भृशमन्नं ते, दास्यन्ति नृपसत्तमाः ॥५॥

## एष्यत्यवधौ देशस्यार्वाग्भागे ॥५॥४॥६॥

स्यादेष्यत्यवधौ देशस्यार्वाग्भागे यथोचितः ॥
नह्यनद्यतनो धातो-र्यथास्थलमुदाहरेत् ॥६॥

## कालस्यानहोरात्राणाम् ॥५॥४॥७॥

---

हेतोः शक्तिश्रद्धानम्-सम्भावनम्, तस्मिन् विषयेऽसिद्धेऽपि वस्तुनि सिद्धवत्प्रत्ययाः स्युरितिसूत्रविशदार्थः ॥४॥ एवम् अदुः, येयं पौर्णमास्यतिक्रान्ता एतस्यां जिनमहः प्रावर्तिष्ट, येयं पौर्णमास्यागामिन्येतस्यां जिनमहः प्रवर्तिष्यते ॥५॥ देशस्य योऽवधिस्तद्वाचिन्युपपदे देशस्यैवार्वाग्भागे य एष्यन्नर्थस्तद्वृत्तेर्धातोरनद्यनविहितः प्रत्ययो न स्यादितिसूत्रस्य व्यक्तोऽर्थः । योऽयमध्वा गन्तव्य आशत्रुञ्जयात्, तस्य यदवरं वलभ्यास्तत्र द्विरोदनं भोक्ष्यामहे । एष्यतीति किम् ? योऽयमध्वा अतिक्रान्त आशत्रुञ्जयात् तस्य यदवरं वलभ्यास्तत्र युक्ताद् द्विरध्यैमहि । अवधाविति किम् ? योऽयमध्वा निरवधिको गन्तव्यः, तस्य यदवरं वलभ्यास्तत्र द्विरोदनं भोक्तास्महे । अर्वाग्भाग इति किम् ? योऽयमध्वा गन्तव्य आशत्रुञ्जयात्, तस्य यत् परं वलभ्यास्तत्र द्विरोदनं भोक्तास्महे ॥६॥ कालस्य योऽवधिस्तद्वाचिन्युपपदे कालस्यैवार्वाग्भागे य एष्यन्नर्थस्तद्वृत्तेर्धातोरनद्यनविहितः प्रत्ययो न स्यात्, न चेत् सोऽर्वाग्भागोऽहोरात्राणाम् इतिसूत्रार्थः । योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र जिनपूजां करिष्यामः । अनहोरात्राणामिति किम् ? योऽयं मास आगामी, तस्य योऽवरः पञ्चदशरात्रस्तत्र युक्ताद् द्विरध्येतास्महे ॥७॥

स्यादेष्यत्यवधौ काल-स्यार्वाग्भागे सलक्षणः ॥
अनहोरात्रसम्बन्धे, नचानद्यतनो मतः ॥७॥

## परे वा ॥५॥४॥८॥

स्यादेष्यत्यवधौ भागे, परे कालस्य धातुतः ॥
अनहोरात्रसम्बन्धे, नवाऽनद्यतनः स्मृतः ॥८॥

## सप्तम्यर्थे क्रियातिपत्तौ क्रियातिपत्तिः ॥५॥४॥९॥

क्रियाऽनभिनिवृत्तौ हि, सप्तम्यर्थे विचार्यताम् ॥
एष्यदर्थकतो धातोः, क्रियातिपत्तिरुच्यते ॥९॥

## भूते ॥५॥४॥१०॥

सत्यां क्रियातिपत्तौ हि, धातोर्भूतार्थकात् पराः ॥
सप्तम्यर्थे विधातव्याः, क्रियातिपत्तिप्रत्ययाः ॥१०॥

## वोतात् प्राक् ॥५॥४॥११॥

---

कालस्य य ऽवधिस्तद्वाचिन्युपपदे, कालस्यैव परे भागेऽनहोरात्रसम्बन्धिनि य एष्यन्नर्थस्तद्वृत्तेर्धातोरनद्यतनविहितः प्रत्ययो वा न स्यात् इति सूत्रार्थः । आगामिनो वत्सरस्याऽऽग्रहायण्याः परस्ताद् द्विःसूत्रमध्येष्यामहे, अध्येतास्महे वा ॥८॥ सप्तम्या अर्थो निमित्तं हेतुफलकथनादिसामग्री कुतश्चिद् वैगुण्यात् क्रियाया अनभिनिवृत्तौ क्रियातिपत्तौ सत्यामेष्यदर्थाद् धातोः सप्तम्यर्थे क्रियातिपत्तिः स्यात् इतिसूत्रार्थः । दक्षिणेन चेद् अयास्यत् नशकटं पर्याभविष्यत् ॥९॥ यथा—दृष्टो मया तव पुत्रोऽन्नार्थी चङ्क्रम्यमाणः, अपरश्चातिथ्यर्थी, यदि स तेन दृष्टोऽभविष्यदुताभोक्ष्यत अप्यभोक्ष्यत ॥१०॥ उतात् प्रागिति ' सप्तम्युताऽप्योर्बाढे ' ।५।४।२१। इत्यत्र यदुतशब्दसङ्कीर्तनं ततः प्रागित्यर्थः । यथा—कथं नाम संयतः सन्ननागाढे तत्रभवान् आधायकृतमसेविष्यत, धिग् गर्हामहेः पक्षे—कथं सेवेत ? धिग् गर्हामहे । उतात् प्रागितिकिम् ? कालो यदभोक्ष्यत भवान् ॥११॥

उतात् प्राक् सप्तमीहेतौ, भूतेऽर्थे वर्तमानतः ॥
धातोर्वाच्या विकल्पेन, क्रियातिपत्तिप्रत्ययाः ॥११॥

## क्षेपेऽपिजात्वोर्वर्तमाना ॥५॥४॥१२॥

गर्हायामपिजातुभ्यां, योगे कालत्रये भवेत् ॥
वर्तमानाऽपि शास्त्रज्ञो, हिनस्ति प्राणिनो भवान् ? ॥१२॥

## कथमि सप्तमी च वा ॥५॥४॥१३॥

गर्हायां वा कथंयोगे, वर्तमाना च सप्तमी ॥
कथं नाम भवान् मांसं, भक्षयति च भक्षयेत् ? ॥१३॥

## किंवृत्ते सप्तमीभविष्यन्त्यौ ॥५॥४॥१४॥

क्षेपे गम्ये हि किंवृत्ते, भविष्यन्ती च सप्तमी ॥
किं भवाननृतं ब्रूयाद्, वक्ष्यति वा विचार्यताम् ॥१४॥

## अश्रद्धाऽमर्षेऽन्यत्रापि ॥५॥४॥१५॥

---

एवं जातु तत्रभवान् भूतानि हिनस्ति ? धिग् गर्हामहे ॥१२॥ उदाहरणेऽनुसन्धेयमेवम्-धिग् गर्हामहे अन्याय्यमेतत् । पक्षे-अवभक्षत्, अभक्षयत्, भक्षयाञ्चकार, भक्षयिता, भक्षिष्यति । अत्र सप्तमी निमित्तमस्तीति भूते क्रियातिपतने वा क्रियातिपत्तिः, कथं नाम तत्रभवान् मांसमभक्षयिष्यत् ? । पक्षे यथाप्राप्तम् । भविष्यति तु क्रियापितने नित्यमेव सा । कथं नाम तत्रभवान् मांसमभक्षयिष्यत् ? ॥१३॥ एव को नाम, कतरो नाम, कतमो नाम यस्मै तत्रभवान् अनृतं ब्रूयाद् वक्ष्यति वा ॥१४॥ यथा-न श्रद्दधे, न सम्भावयामि तत्रभवान् नामाऽदत्तं गृह्णीयात्, ग्रहीष्यति वा ?, न श्रद्दधे किं तत्रभवान् अदत्तमाददीत, आदास्यते वा ?, न मर्षयामि न क्षमे तत्रभवान् नामादत्तं गृह्णीयात्, ग्रहीष्यति वा ? ॥१५॥

अकिंवृत्ते च किंवृत्ते, स्तोऽश्रद्धाऽमर्षयोः परा ॥
सप्तमी च भविष्यन्ती, विचारयेदुदाहृतिम् ॥१५॥

### किङ्किलाऽस्त्यर्थयोर्भविष्यन्ती ॥५॥४॥१६॥

किकिलास्त्यर्थयोर्धातो-रश्रद्धामर्षयोर्भवेत् ॥
भविष्यन्ती न नामास्ति, किङ्किल पलमत्स्यति ॥१६॥

### जातु-यद्-यदा-यदौ सप्तमी ॥५॥४॥१७॥

अश्रद्धाऽमर्षयोरेषू-पपदकेषु सप्तमी ॥
न क्षमे श्रद्दधे नैव, जातु भवान् सुरां पिबेत् ॥१७॥

### क्षेपे च यच्चयत्रे ॥५॥४॥१८॥

अश्रद्धामर्षयोः क्षेपे, सप्तमी यच्चयत्रयोः ॥
यच्च कुर्याद् भवानेवं, न क्षमे श्रद्दधे न तत् ॥१८॥

### चित्रे ॥५॥४॥१९॥

सप्तमी जायते धातो-राश्चर्य्ये यच्चयत्रयोः ॥
आश्चर्य्यं यच्च सेवेत, विषयांस्तत्रभवानपि ॥१९॥

### शेषे भविष्यन्त्ययदौ ॥५॥४॥२०॥

---

न श्रद्दधे, न मर्षयामि किङ्किल नाम तत्रभवान् परदारानुपकरिष्यते ?, न श्रद्दधे, न मर्षयामि अस्ति नाम, भवति नाम तत्रभवान् परदारानुपकरिष्यते ॥१६॥ एव यत्, यदा, यदि सुरां पिबेत् ॥१७॥ धिग् गर्हामहे यच्च यत्र वा तत्रभवानस्मान् आक्रोशेत्, न श्रद्दधे, न क्षमे यच्च यत्र वा तत्रभवान् परिवादं कथयेत् ॥१८॥ एव यत्रयोगेऽपि विज्ञेयम् ॥१९॥ शेष इति किम् ? यच्चयत्रयोः पूर्वेण सप्तम्येव । अयदाविति किम् ? चित्रं यदि स भुञ्जीत ॥२०॥

अन्यत्र यच्चयत्राभ्यां, भविष्यन्त्ययदौ भवेत् ॥
चित्रे यच्चित्रमाश्चर्यं, बधिरः श्रोष्यति श्रुतम् ॥२०॥

## सप्तम्युताप्योर्बाढे ॥५।४।२१॥

बाढार्थयोरुताप्योः स्यात्, सप्तमी पूर्वशब्दयोः ॥
उत कुर्याज्जनो धर्म-मपि कुर्याद्यशस्करम् ॥२१॥

## सम्भावनेऽलमर्थे तदर्थानुक्तौ ॥५।४।२२॥

सम्भावनेऽलमर्थे चे-न्नालमर्थः प्रयुज्यते ॥
सप्तमी धातुतो ज्ञेया-ऽपि दोर्भ्यां सागरस्तरेत् ॥२२॥

## अयदि श्रद्धाधातौ नवा ॥५।४।२३॥

भवेच्छ्रद्धार्थके धाता-वलमर्थे नवाऽयदि ॥
सप्तमी श्रद्दधेऽभुङ्क्त, भुञ्जीत भोक्ष्यते भवान् ॥२३॥

## सतीच्छार्थात् ॥५।४।२४॥

सत्यर्थे वर्तमानात् स्या-दिच्छार्थात् सप्तमी नवा ॥
पक्षे तु वर्तमानैव, वाञ्छेद् वाञ्छति चेच्छति ॥॥२४॥

---

बाढे इति किम् ? उत दण्डः पतिष्यति, अपि धास्यति, द्वारम् ॥२१॥ अलमर्थे इति किम् ? निर्देशस्थायी मे चैत्रः प्रायेण यास्यति । तदर्थानुक्ताविति किम् ? शक्तश्चैत्रो धर्मं करिष्यति ।२२॥ एवम् अभुक्त इत्यपि । अयदीति किम् । सम्भावयामि यद् भुञ्जीत भवान् । श्रद्धाधाताविति किम् ? अपि शिरसा पर्वतं भिन्द्यात् ॥२३॥ एवम् इच्छेत् ॥२४॥

वर्त्स्यति हेतुफले ॥५॥४॥२५॥

वर्त्स्यत्यर्थे नवा हेतु-भूते च फलभूतके ॥
सप्तमी यद्युपासीत, गुरून् जायेत पण्डितः ॥२५॥

कामोक्तावकच्चिति ॥५॥४॥२६॥

कामप्रवेदने धातोः, सप्तमी स्यादकच्चिति ॥
कामो मेऽश्नीत सोऽत्रैव, कच्चिज्जीवति मे प्रभुः ॥२६॥

इच्छार्थे सप्तमीपञ्चम्यौ ॥५॥४॥२७॥

धाताविच्छार्थके कामो-क्तौ सप्तमी च पञ्चमी ॥
इच्छाम्यहं भवानत्र, भुङ्क्तां भुञ्जीत वा मुदा ॥२७॥

विधि-निमन्त्रणाऽऽमन्त्रणाऽधीष्ट-सम्प्रश्नप्रार्थने ॥
॥५॥४॥२८॥

सप्तमी पञ्चमी स्यातां, विध्याद्यर्थेषु धातुतः ॥
इहासीत भवानास्तां, व्रतं रक्षेच्च रक्षतु ॥२८॥

---

एवम् पक्षे यदि गुरून् उपासिष्यते शास्त्रान्तं सङ्गमिष्यते । वर्त्स्यतीति किम् ? दक्षिणेन चेद् याति न शकटं पर्याभवति ॥२५॥ स्पष्टे ॥२६॥२७॥ विधिः-क्रियायां प्रेरणा, यथा कटं कुर्यात्, करोतु भवान् । प्रेरणायामेव यस्यां प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्, यथा द्विसन्ध्यमावश्यकं कुर्यात्, करोतु । यत्र प्रेरणायामेव प्रत्याख्याने कामचारस्तदामन्त्रणम्, यथा इहासीत, आस्ताम्, प्रेरणैव सत्कारपूर्विका-अधीष्टम्, यथा व्रतं रक्षेत्, रक्षतु । संप्रश्नः-संप्रधारणा, यथा किं नु खलु भो ? व्याकरणमधीयीय, अध्ययै उत सिद्धान्तमधीयीय, अध्ययै ? । प्रार्थनम्-याच्ञा, यथा प्रार्थना मे तर्कमधीयीय, अध्ययै ॥२८॥

## प्रैषा-ऽनुज्ञा-ऽवसरे कृत्यपञ्चम्यौ ॥५।४।२९॥

प्रैषादिकविशिष्टेऽर्थे, धातोः कृत्याश्च पञ्चमी ॥
कार्यस्त्वया कटः सद्यः, कटं कुरु न चेद् व्रज ॥२९॥

## सप्तमी चोर्ध्वमौहूर्तिके ॥५।४।३०॥

ऊर्ध्वमौहूर्तिकेऽर्थे स्युः, प्रैषादिषु च सप्तमी ॥
कृत्याश्च पञ्चमी कुर्य्याः, कटमूर्ध्वंमुहूर्त्ततः ॥३०॥

## स्मे पञ्चमी ॥५।४।३१॥

ऊर्ध्वमौहूर्तिकार्थात् स्मे, स्यात् प्रैषादिषु पञ्चमी ॥
कटमूर्ध्वंमुहूर्त्तात्त्वं, कुरु स्म प्रेषितो यतः ॥३१॥

## अधीष्टौ ॥५।४।३२॥

भवेदध्येषणायां स्मे, धातुतः पञ्चमी परा ॥
अङ्ग ? स्म सर्वथा विद्वन् ? अणुव्रतानि पालय ॥३२॥

## काल-वेलासमये तुम् वाऽवसरे ॥५।४।३३॥

धातोरवसरे गम्ये, तुमेषूपपदेषु वा ॥
भोक्तुं ध्यातुं तथाऽध्येतुं, कालो वेला पृथक् पृथक् ॥३३॥

---

सत्कारपूर्विका प्रेरणा प्रैषः । एवं भवता खलु कटः कार्यः, भवान् कटं करोतु, भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥२९॥ एवम् ऊर्ध्वमुहूर्तात् कटं कुर्यात् भवान्, भवता कटः कार्यः, कटं करोतु भवान्, भवान् हि प्रेषितोऽनुज्ञातो भवतोऽवसरः कटकरणे ॥३०॥ अत्रापि भवान् हि प्रेषित इत्यादि ज्ञेयम् ॥३१॥ स्पष्टम् ॥३२॥ एवं समयो भोक्तुम्; पक्षे-कालो भोक्तव्यस्य । अवसर इति किम् ? कालः पचति भूतानि ॥३३॥

## सप्तमी यदि ॥५॥४॥३४॥

यत्प्रयोगे नु कालादि-ष्पूपपदेषु सप्तमी ॥
कालोऽधीयीत यद् वेला, यद् भुञ्जीत शयीत यत् ॥३४॥

## शक्तार्हे कृत्याश्च ॥५॥४॥३५॥

गम्ये कर्तरि शक्तेऽर्हे, कृत्याश्च सप्तमी परा ॥
खलु भारस्त्वयोह्येत, वाह्यो भारं वहेद् भवान् ॥३५॥

## णिन् चावश्यकाऽधमर्ण्ये ॥५॥४॥३६॥

अनयोर्गम्ययोर्वाच्ये, कर्मरि णिन् च कृत्यकाः ॥
शतं दायी तथाऽवश्यं, गेयो गीतस्य गीयते ॥३६॥

## अर्हे तृच् ॥५॥४॥३७॥

अर्हे कर्तरि वाच्ये तृच-प्रत्ययो धातुतो भवेत् ॥
कन्यकाया भवान् वोढा, जामातेति विभावितः ॥३७॥

## आशिष्याशीःपञ्चम्यौ ॥५॥४॥३८॥

धातोराशीर्विशिष्टार्थात् , स्यातामाशीश्च पञ्चमी ॥
अर्हन् ! वीर ! महामोहं, जीयाच्च जयताद् रणे ॥३८॥

## माङ्यद्यतनी ॥५॥४॥३९॥

---

एवं समयो यच्छयीत ॥३४॥ एवं भवान् हि शक्तः, भवता खलु कन्या वोढव्या, उह्येत, भवान् खलु कन्यां वहेत् , भवानेतदर्हति ॥३५॥ एवम् अवश्यंकारी, अवश्यंहारी, गेयो गाथानाम् ॥३६॥ स्पष्टम् ॥३७॥ आशिषीति किम् ? चिरं जीवति मैत्रः ॥३८॥ स्पष्टे ॥३९॥...

अद्यतनी भवेद् माङ्यु-पपदे धातुतः परा ॥
मा कार्षीत् कोऽपि पापानि, मा च भूत् कोऽपि दुःखितः॥३९॥

## सस्मे ह्यस्तनी च ॥५॥४॥४०॥

ह्यस्तन्यद्यतनी च स्यात्, स्मेयुक्ते माङि धातुतः ॥
मा स्म करोदकर्तव्यं, मा स्म कार्षीत् तथैव तत् ॥४०॥

## धातोः सम्बन्धे प्रत्ययाः ॥५॥४॥४१॥

धात्वर्थानां तु सम्बन्धे-,ऽयथाकालेऽपि प्रत्ययाः ॥
साधवो विश्वदृश्वाऽस्य, तनयो भविताऽऽत्मवित् ॥४१॥

## भृशाऽऽभीक्ष्ण्ये हि-स्वौ यथाविधि त-ध्वमौ च तद्युष्मदि ॥५॥४॥४२॥

पौनःपुन्ये भृशार्थे च, द्योत्ये हिस्वौ यथाविधि ॥
स्यातां धातोस्तु सम्बन्धे, तद्युष्मदि च तध्वमौ ॥४२॥

---

...॥४०॥ सम्बन्धे विशेषणविशेष्यभावरूपे सति । एवं भाविकृत्यमासीत्, गोमानासीत् ॥४१॥ अस्य विशदोऽर्थस्त्वेवम्-भृशाऽऽभीक्ष्ण्ये सर्वकालेऽर्थे वर्तमानात् धातोः सर्वविभक्तिवचनविषये हिस्वौ स्याताम्, यथाविधि धातोः सम्बन्धे-यत एव धातोर्यस्मिन्नेव कारके हिस्वौ तस्यैव धातोस्तत्कारकविशिष्टस्यैव सम्बन्धे अनुप्रयोगे सति, तथा पञ्चम्या एव तध्वमौ, तयोः सम्बन्धिनि बहुत्वविशिष्टे युष्मदर्थे ङिस्वौ च स्यातां यथाविधि धातोः सम्बन्धे । लुनीहि लुनीहीत्येवायं लुनातीत्यादि, अधीष्वाधीष्वेत्येवायमधीते इत्यादि, लुनीत लुनीतेत्येव यूयं लुनीथ, लुनीहि लुनीहीत्येवं यूयं लुनीथ, अधीध्वमधीध्वमित्येवं यूयमधीध्वे, अधीष्वाधीष्वेत्येवं यूयमधीध्वे । यथाविधीति किम् ? लुनीहि लुनीहीत्येवायं लुनाति, छिनत्ति, लूयते वेति धातोः सम्बन्धे मा भूत् ॥४२॥

## प्रचये नवा सामान्यार्थस्य ॥५॥४॥४३॥

सामान्यार्थस्य सम्बन्धे, धात्वर्थानां समुच्चये ॥
हिस्वौ च तध्वमौ स्यातां, तद्युष्मदि विभाषया ॥४३॥

## निषेधेऽलंखल्वोः क्त्वा ॥५॥४॥४४॥

निषेधे स्यादलंखल्वो-र्धातोः क्त्वा प्रत्ययो नवा ॥
अलं कृत्वा खलु कृत्वा-ऽलं रुदितेन सर्वदा ॥४४॥

## परावरे ॥५॥४॥४५॥

धातोः क्त्वाप्रत्ययो वा स्याद्, गम्यमाने परेऽवरे ॥
गिरिर्नदीमतिक्रम्य. तथाऽप्राप्य नदीं गिरिः ॥४५॥

धात्वर्थानां समुच्चयं गम्ये सामान्यार्थस्य धातोः सम्बन्धे सति धातोः परौ हि-स्वौ तध्वमौ च तद्युष्मदि वा स्याताम् । इतिसूत्रार्थः । व्रीहीन् वप, लुनीहि, पुनीहि, इत्येवं यतते, यत्यते वा; पक्षे-व्रीहीन् वपति, लुनाति, पुनाति, इत्येवं यतते यत्यते वा । सूत्रमधीष्व, निर्युक्तिमधीष्व, भाष्यमधीष्वेत्येवमधीते पठ्यते वा; पक्षे-सूत्रमधीते, निर्युक्तिमधीते, भाष्यमधीते, इत्येवमधीते पठ्यते वा । व्रीहीन् वपत, लुनीत, पुनीतेत्येवं यतध्वे, व्रीहीन् वप, लुनीहि, पुनीहीत्येवं चेष्टध्वे; पक्षे-व्रीहीन् वपथ, लुनीथ, पुनीथेत्येवं यतध्वे । सूत्रमधीध्वं, निर्युक्तिमधीध्वं, भाष्यमधीध्वमित्येवमधीध्वे, सूत्रमधीष्व निर्युक्तिमधीष्व, भाष्यमधीष्वेत्येवमधीध्वे; पक्षे सूत्रमधीध्वे, निर्युक्तिमधीध्वे, भाष्यमधीध्वे इत्येवमधीध्वे । सामान्यार्थस्येति किम् ? व्रीहीन् वप, लुनीहि, पुनीहि इत्येवं वपति लुनाति पुनातीति मा भूत् ॥४३॥ स्पष्टम् ॥४४॥ पक्षे नद्यतिक्रमणे गिरिः, नद्यप्राप्त्या गिरिः ॥४५॥

## निमील्यादिमेङस्तुल्यकर्तृके ॥५॥४॥४६॥

निमील्यादेस्तथा मेङो, धातोः स्यात्तुल्यकर्तृके ॥
क्त्वा वा निमील्य नेत्रे स, हसति याचतेऽथवा ॥४६॥

## प्राक्काले ॥५॥४॥४७॥

प्राक्कालेऽवस्थिताद्धातोः, परेण तुल्यकर्तृके ॥
सम्बन्धे क्त्वा न चाऽऽसित्वा भुङ्क्ते श्रुत्वाऽवधार्यते ॥४७॥

## खणं चाऽऽभीक्ष्ण्ये ॥५॥४॥४८॥

आभीक्ष्ण्ये परकालेन, प्राक्काले तुल्यकर्तृके ॥
धातोः खणं क्त्वा च सम्बन्धे, भोजं भोजं स गच्छति ॥४८॥

## पूर्वाऽग्रेप्रथमे ॥५॥४॥४९॥

पूर्वाग्रेप्रथमेषु स्यात्, परेण तुल्यकर्तृके ॥
प्राक्काले धातुतः खणं वा, पूर्वं भोजं स गच्छति ॥४९॥

## अन्यथैवंकथमित्थमः कृगोऽनर्थकात् ॥५॥४॥५०॥

---

एवं मुखं व्यादाय स्वपिति, अपमित्य याचते, पक्षे–अपमातु याचते । तुल्यकर्तृक इति किम् ? चैत्रस्याक्षिनिमीलने मैत्रो हसति ॥४३॥ पक्षे आस्यते भोक्तुम् । प्राक्काले इति किम् ? भुज्यते पीयते वा ॥४७॥ पक्षे भुक्त्वा याति ॥४७॥ पक्षे भुक्त्वा भुक्त्वा याति ॥४८॥ पक्षे पूर्वं भुक्त्वा गच्छति, एवम् अग्रे भोजम्, अग्रे भुक्त्वा, प्रथमं भोजं, प्रथमं भुक्त्वा; पूर्वं भुज्यते ततो याति ॥४९॥ एवम् अन्यथाकारम्, एवङ्कारम्, इत्थङ्कारम्, पक्षे अन्यथा कृत्वा । अनर्थकादितिकिम् ? अन्यथा कृत्वा शिरो भुङ्क्ते ॥५०॥

एभ्यः परात् कृगो धातोः, स्यातुल्यकर्तृकार्थतः ॥
सम्बन्धेऽनर्थकात् रुणं वा, कथङ्कारं करोति सः ॥५०॥

## यथातथादीर्ष्योत्तरे ॥५॥४॥५१॥

आभ्यामनर्थकात्तुल्य-कर्तृकार्थात् कृगो नवा ॥
वेदुत्तरयतीर्ष्यैः रुणं, यथाकारं करोम्यहम् ॥५१॥

## शापे व्याप्यात् ॥५॥४॥५२॥

आक्रोशे कर्मणस्तुल्य-कर्तृकार्थात् कृगो नवा ॥
धातोः रुणं सम्भवेच्चौर-ङ्कारमाक्रोशति क्रुधा ॥५२॥

## स्वाद्वर्थाद् अदीर्घात् ५॥४॥५३॥

स्वाद्वर्थात् स्याददीर्घान्ताद्, व्याप्यात् परात् कृगो नवा ॥
रुणं तुल्यकर्तृकार्थात् सन्, स्वादुङ्कारं पिबेत् कटु ॥५३॥

## विदृग्भ्यः कात्स्न्यें णम् ॥५॥४॥५४॥

व्याप्यात् कात्स्न्र्यवतो णं वा, विदृग्भ्यस्तुल्यकर्तृके ॥
प्राकाले जायते कन्या-दर्शं वरयति प्रज्ञा ॥५४॥

## यावतो विन्दजीवः ॥५॥४॥५५॥

---

एवं-कथं त्वं भोक्ष्यसे ? इति पृष्टोऽसूयया तं प्रत्याह-यथाकारमहं भोक्ष्ये, तथाकारमहं भोक्ष्ये किं तवानेन ?। ईर्ष्योत्तर इति किम् ? यथा कृत्वाऽहं भोक्ष्ये तथा द्रक्ष्यसि ॥५१॥ शाप इति किम् ? चौरं कृत्वा हेतुभिः कथयति ॥५२॥ एवं मिष्टङ्कारं भुङ्क्ते, पक्षे स्वादुं कृत्वा । अदीर्घादिति किम् । स्वाद्वीं कृत्वा यवागूं भुङ्क्ते ॥५३॥ एवम्-अतिथिवेदं भोजयति । कात्स्न्यें इति किम् ? अतिथिं विदित्वा भोजयति ॥५४॥ एवं यावद्वेदं भुङ्क्ते ॥५५॥

व्याप्यात् कार्त्स्न्यवतो णं वा; यावतस्तुल्यकर्तृके ॥
भवेद्विन्दतिजीविभ्यां, यावज्जीवं तपस्तपेत् ॥५५॥

चर्मोदरात् पूरेः ॥५।४।५६॥

व्याप्यचर्मोदराभ्यां णं, धातोः पूरयतेर्नवा ॥
स्यात्तुल्यकर्तृकार्थाच्च-दरपूरं रमेज्जनः ॥५६॥

वृष्टिमाने ऊलुक् चास्य वा ॥५।४।५७॥

व्याप्यात् पूरयतेर्णं वा, वृष्टिमानेऽस्य लुग् नवा ॥
ऊतो गोष्पदप्रं गोष्प-द्पूरं वारिदोऽपतत् ॥५७॥

चेलार्थात् क्नोपेः ॥५।४।५८॥

चेलार्थाद् व्याप्यतः क्नोपे-र्वृष्टिमाने विभाषया ॥
णं तुल्यकर्तृकार्थात् स्या-चेलक्नोपं घनोऽपतत् ॥५८॥

गात्रपुरुषात् स्नः ॥५।४।५९॥

णं वा स्नातेः परादाभ्यां, स्यात्तुल्यकर्तृकार्थतः ॥
वृष्टिमाने घनो वृष्टो, गात्रस्नायं यथातथम् ॥५९॥

शुष्क-चूर्ण-रूक्षात् पिषस्यैव ॥५।४।६०॥

एभ्यः परात् पिषेर्णं वा, सम्बन्धेऽस्यैव जायते ॥
शुष्कपेषं पिनष्टीदं, रूक्षपेषं तथैव हि ॥६०॥

---

एवं चर्मपूरमास्ते ॥५६॥ स्पष्टे ॥५७।५८॥ एवं पुरुषस्नायं वृष्टो-मेघः ॥५९॥ एवं चूर्णपेषम् ॥६०॥

कृग्-ग्रहोऽकृतजीवात् ॥५॥४॥६१॥

आभ्यां परात् यथासङ्ख्यं, कृगो ग्रहेश्च णं भवेत् ॥
सम्बन्धेऽस्यैव वा जीव-ग्राहं गृह्णाति कर्म सन् ॥६१॥

निमूलात् कषः ॥५॥४॥६२॥

निमूलाद् व्याप्यतो वा स्यात्, सम्बन्धेऽस्यैव णं कषेः ॥
जनो निमूलकाषं यत्, कषति स्वर्णग्राहकः ॥६२॥

हनश्च समूलात् ॥५॥४॥६३॥

णं समूलात् कषेर्हन्तेः, सम्बन्धेऽस्यैव वा भवेत् ॥
हन्ति समूलघातं स-मूलकाषं कषत्यपि ॥६३॥

करणेभ्यः ॥५॥४॥६४॥

करणार्थात् पराद् हन्तेः, सम्बन्धेऽस्यैव णं नवा ॥
पाणिघातं समाहन्ति, पादघातश्च कुडचकम् ॥६४॥

स्व-स्नेहनार्थात् पुष-पिषः ॥५॥४॥६५

करणार्थात् स्वशब्दार्थात्, स्नेहार्थाच्च यथाक्रमम् ॥
पुषः पिषश्च सम्बन्धे-ऽस्यैव णं वा विधीयते ॥६५॥

हस्तार्थाद् ग्रहवर्तिवृतः ॥५॥४॥६६॥

---

एवम् अकृतकारं करोति ॥६१॥ एवं निमूलस्य काषं कषति ॥६२॥ सांप्टे ॥६३॥ ६४॥ यथा स्वपोषं पुष्णाति, एवम् आत्मपोषम्, उदपेषं पिनष्टि, एवं-क्षीरपेषम् ॥६५॥ एवं हस्तवर्तं वर्तयति ॥६६॥

हस्तार्थात् करणादेभ्यः, सम्बन्धेऽस्यैव णं नवा ॥
हस्तग्राहं स गृह्णाति, पाणिवर्तं च वर्तते ॥६६॥

## बन्धे नाम्नि ॥५।४।६७॥

बन्धेर्नाम्न्यस्य सम्बन्धे, करणार्थात् परान्नवा ॥
णं प्रत्ययो भवेच्चौरं, क्रौञ्चबन्धं बधान सः ॥६७॥

## आधारात् ॥५।४।६८॥

आधारार्थात् पराद् बन्धेः, सम्बन्धेऽस्यैव णं नवा ॥
मुखाब्जाच्छादकान् केशान्, चक्रबन्धं बधान सा ॥६८॥

## कर्तुर्जीव–पुरुषान्नश्वहः ॥५।४।६९॥

स्यात् कर्तृभ्यां पराद्भ्यां, नशेर्वहेश्च णं नवा ॥
क्रमादस्यैव सम्बन्धे, जीवनाशं स नश्यति ॥६९॥

## ऊर्ध्वात् पूःशुषः ॥५।४।७०॥

कर्तुरूर्ध्वात् शुषः पूरः, सम्बन्धेऽस्यैव णं नवा ॥
यः शुष्यत्यूर्ध्वशोषं स, ऊर्ध्वपूरं च पूर्यते ॥७०॥

## व्याप्याच्चेवात् ॥५।४।७१॥

व्याप्यात् कर्तुस्तथेवार्थाद्, धातोर्णं वा भवेत् परः ॥
सम्बन्धेऽस्यैव नष्टः स, काकनाशं भयद्रुतः ॥७१॥

---

स्पष्टे ॥६७॥६८॥ एवं पुरुषवाहं वहति । कर्तुरिति किम् ? जीवेन नश्यति ॥६९॥ स्पष्टम् ॥७०॥ एवं सुवर्णनिधायं निहितः ॥७१॥

## उपात् किरो लवने ॥५॥४॥७२॥

किरतेर्लवनार्थस्य, सम्बन्धे णं नवा भवेत् ॥
उपपूर्वाद्रुपस्कारं, लुनन्ति मद्रकाः कुतः ॥७२॥

## दंशेस्तृतीयया ॥५॥४॥७३॥

तृतीयान्तेन योगे णं, वा तुल्यकर्तृकार्थतः ॥
उपाद् दंशेर्हि सम्बन्धे-ऽस्ति मूलकोपदंशमाः ॥७३॥

## हिंसार्थादेकाऽऽप्यात् ॥५॥४॥७४॥

धातोर्हिंसार्थकाद् धात्व-न्तरेण चैककर्मकात् ॥
तृतीयान्तेन योगे णं, वा तुल्यकर्तृकार्थतः ॥७४॥

## उपपीडरुधकर्षस्तत्सप्तम्या ॥५॥४॥७५॥

तृतीया सप्तमी चापि, तदन्तेनोपपूर्वकात् ॥
णं तुल्यकर्तृकार्थात् स्यात्, पीडादित्रितयान्नवा ॥७५॥

---

लवन इति किम् ? उपकीर्य याति ॥७२॥ एवं मूलकेनोपदंशम्, मूलकेनोपदश्य, श्लोकान्ते 'आ' इति उद्गारसूचकम् ॥७३॥ यथा दण्डेनोपघातं, दण्डेनोपहत्य च गाः सादयति । एकाप्यादिति किम् ? दण्डेनोपहत्य चौरं गोपालको गाः खेटयति ॥७०॥ यथा पार्श्वाभ्यामुपपीडं, पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडं, पार्श्वोपपीडं शेते । व्रजेनोपरोधं, व्रजोपरोधम्, व्रजोपरोधं गाः स्थापयति । पाणिनोपकर्षं, पाणावुपकर्षं पाण्युपकर्षं गृह्णाति ॥७५॥

## प्रमाणसमासत्त्योः ॥५॥४॥७६॥

स्यात् प्रमाणसमासत्त्यो–स्तृतीया चापि सप्तमी ॥
तदन्तेन च धातोर्णं, वा तुल्यकर्तृकार्थतः ॥७६॥

## पञ्चम्या त्वरायाम् ॥५॥४॥७७॥

पञ्चम्यन्तेन योगे वा, णं तुल्यकर्तृकार्थतः ॥
भवेद् धातोस्त्वरायां य–च्छय्योत्थायं स धावति ॥७७॥

## द्वितीयया ॥५॥४॥७८॥

द्वितीयान्तेन योगे णं, वा तुल्यकर्तृकार्थतः ॥
धातोर्भवेत्त्वरायां य–ल्लोष्टग्राहं स युध्यति ॥७८॥

## स्वाङ्गेनाऽध्रुवेण ॥५॥४॥७९॥

णं स्वाङ्गेनाध्रुवेण स्याद्, द्वितीयान्तेन धातुतः ॥
वा तुल्यकर्तृकार्थाद् यद्, भ्रूविक्षेपं प्रजल्पति ॥७९॥

---

अस्य विशदोऽर्थः,–आयामसानं–प्रमाणम्, समासत्तिः–संरम्भपूर्वकः सन्निकर्षः, तयोर्गम्ययोस्तृतीयान्तेन सप्तम्यन्तेन च योगे तुल्यकर्तृकार्थाद् धातोः सम्बन्धे णं वा स्यात् । द्व्यङ्गुलेनोत्कर्षं द्व्यङ्गुलोत्कर्षं द्व्यङ्गुले उत्कर्षं द्व्यङ्गुलोत्कर्षं गण्डिकाश्छिनत्ति; केशैर्ग्राहं, केशग्राहम्, केशेषु ग्राहं केशग्राहं युध्यन्ते, पक्षे-द्व्यङ्गुलेनोत्कृष्य गण्डिकाश्छिनत्ति ॥७६॥ एवं शय्याया उत्थायं धावति । पक्षे शय्याया उत्थाय धावति । त्वरायामिति किम् ? आसनादुत्थाय याति ॥७७॥ एव लोष्टान् ग्राहं, लोष्टान् गृहीत्वा युध्यन्ते ॥७८॥ यस्मिन्नङ्गेच्छिन्ने भिन्ने वा प्राणी न म्रियते तदध्रुवम् । एवं भ्रुवौ विक्षेपं, भ्रुवौ विक्षिप्य वा जल्पति । स्वाङ्गेनेति किम् ? कफमुन्मूल्य जल्पति । अध्रुवेणेति किम् ? शिर उत्क्षिप्य-वक्ति ॥ ७९ ॥

## परिक्लेश्येन ॥५॥४॥८०॥

परिक्लेश्येन स्वाङ्गेन, द्वितीयान्तेन धातुतः ॥
णं तुल्यकर्तृकार्थाद्वा, शिरश्छेदं प्रयुध्यते ॥८०॥

## विशपतपदस्कन्दो वीप्साऽऽभीक्ष्ण्ये ॥५॥४॥८१॥

द्वितीयान्तेन योगे णं, वा वीप्साऽऽभीक्ष्ण्ययोर्भवेत् ॥
विशादिधातुतस्तुल्य-कर्तृकार्थाद् यथोचितम् ॥८१॥

## कालेन तृष्यस्वः क्रियान्तरे ॥५॥४॥८२॥

द्वितीयान्तेन कालार्थ-केन योगे क्रियान्तरे ॥
तृष्यस्वभ्यां भवेद् णं वा, द्व्यहतर्षं पिबन्ति ते ॥८२॥

## नाम्ना ग्रहाऽऽदिशः ॥५॥४॥८३॥

द्वितीयान्तेन योगे स्या-न्नामशब्देन णं नवा ॥
गृह्णातेरादिशेश्चापि, नामग्राहं ददाति सः ॥८३॥

---

एवं शिरांसि छेदं, शिरांसि छित्त्वा युध्यन्ते ॥८०॥ यथा गेहं गेहमनुप्रवेशं, गेहानुप्रवेशमास्ते, गेहमनुप्रवेशमनुप्रवेशं, गेहानुप्रवेशमास्ते; गेहं गेहमनुप्रपातं, गेहानुप्रपातमास्ते, गेहमनुप्रपातमनुप्रपातं, गेहानुप्रपातमास्ते; गेहंगेहमनुप्रपादं, गेहानुप्रपादमास्ते, गेहमनुप्रपादमनुप्रपादं, गेहानुप्रपादमास्ते । गेहं गेहमवस्कन्दं, गेहावस्कन्दमास्ते, गेहमवस्कन्दमवस्कन्दं गेहावस्कन्दमास्ते; पक्षे गेहंगेहमनुप्रविश्यास्ते, गेहमनुप्रविश्यानुप्रविश्यास्ते इत्यादि ॥८१॥ एवं द्व्यहं तर्षं, द्व्यहमत्यासं गावः पिबन्ति । क्रियान्तर इति किम् ? अहरत्यस्येषून् गतः ॥८२॥ एवं नामानि ग्राहं, नामान्यादेशं, नामादेशं दत्ते, पक्षे-नाम गृहीत्वा दत्ते ॥८३॥

## कृगोऽव्ययेनानिष्टोक्तौ क्त्वाणमौ ॥५॥४॥८४॥

योगेऽव्ययेन कृग्धातोः, स्तस्तुल्यकर्तृकार्थतः ॥
क्त्वाणमौ यदनिष्टोक्तौ, किं नीचैःकृत्य कथ्यते ॥८४॥

## तिर्यचाऽपवर्गे ॥५॥४॥८५॥

कृगः क्रियासमाप्तौ हि, स्तस्तुल्यकर्तृकार्थतः ॥
क्त्वाणमौ तिर्यचा योगे, तं तिर्यक्कारमासते ॥८५॥

## स्वाङ्गतश्च्व्यर्थे नानाविनाधार्थेन भुवश्च ॥५॥४॥८६॥

च्व्यर्थे नानाविनाभ्यां च, धार्थैर्योगे कृगो भुवः ॥
क्त्वाणमौ स्वाङ्गतस्तुल्य-कर्तृकार्थाद् यथोचितम् ॥८६॥

## तूष्णीमा ॥५॥४॥८७॥

तूष्णींयोगे भुवो धातोः सम्बन्धे क्त्वाणमौ परौ ॥
स्तस्तुल्यकर्तृकात् किं, तूष्णींभावं समासते ॥८७॥

---

यथा-ब्राह्मण ? पुत्रस्ते जातः किं तर्हि वृषल ? नीचैःकृत्वा, नीचैःकृत्य, नीचैःकारं कथयसि । उच्चैर्नाम प्रियमाख्येयम् । अनिष्टोक्ताविति किम् ? उच्चैः कृत्वाऽऽचष्टे ब्राह्मण ? पुत्रस्ते जात इति । अव्ययेनेति किम् ? ब्राह्मण ? पुत्रस्ते जातः किं तर्हि वृषल ? मन्दं कथयसि ॥८४॥ एवं तिर्यक् कृत्वा, तिर्यक्कृत्य । अपवर्ग इति किम् ? तिर्यक् कृत्वा काष्ठं गतः ॥ ८५ ॥ स्वाङ्गत इति तसन्तेन स्वाङ्गेनेत्यर्थः । मुखतोभूत्वा, मुखतोभूय, मुखतोभावमास्ते । नानाभूत्वा, नानाभूय, नानाभावं गतः । विनाभूत्वा, विनाभूय, विनाभावं गतः । द्विधाभूत्वा, द्विधाभूय, द्विधाभावमास्ते । एवं पार्श्वतःकृत्वा, पार्श्वतःकृत्य, पार्श्वतःकारं शेत इत्यादि । च्व्यर्थ इति किम् ? नाना कृत्वा भक्ष्याणि भुङ्क्ते ॥ ८६ ॥ एवं तूष्णीं भूत्वा, तूष्णींभूय- ॥ ८७ ॥

## आनुलोम्येऽन्वचा ॥५॥४॥८८॥

आनुलोम्येऽन्वचा योगे, भूधातोः क्त्वाणमौ परौ ॥
स्तस्तुल्यकर्तृकार्थाद् यत्, तेऽन्वग्भावं समासते ॥८८॥

## इच्छार्थे कर्मणः सप्तमी ॥५॥४॥८९॥

इच्छार्थे कर्मभूतात् स्यात्, सप्तमी धातुतः परा ॥
सा तुल्यकर्तृकार्थाद् यद्, भुञ्जीयेति स इच्छति ॥८९॥

## शक-धृष-ज्ञा-रभ-लभ-सहा-र्ह-ग्ला-घटा-ऽस्ति-समर्था-ऽर्थे च तुम् ॥५॥४॥९०॥

शक्याद्यर्थेषु चेच्छार्थ-केषु धातुषु नामसु ॥
समर्थार्थेषु धातोस्तुं, कर्मभूताद्विधीयते ॥९०॥

॥ इति चतुर्थः पादः ॥

॥ पञ्चमोऽध्यायः परिपूर्णतामगात् ।.

---

एवम् अन्वग् भूत्वा, अन्वग् भूय- । आनुलोम्य इति किम् ! अन्वग् भूत्वा विजयते, पश्चाद् भूत्वेत्यर्थः ॥८८॥ इच्छार्थ इति किम् ? भोजको याति । कर्मण इति किम् ? इच्छन् करोति ॥८९॥ यथा-शक्नोति पारयति वा भोक्तुम्, एवं-धृष्णोति, जानाति, आरभते, लभते, सहते, अर्हति, ग्लायति, घटते, अस्ति, समर्थ इच्छति वा भोक्तुम् ॥९०॥

॥ चतुर्थः पादः समाप्तः ॥

॥ अध्यायः पञ्चमः पूर्णः ॥

पञ्चाध्यायात्मकः
प्रथमः खण्डः
पूर्णतामगात् ॥

# ॥ विशुद्धीकरणम् ॥

| अविशुद्धम् | विशुद्धम् | पत्राङ्कः | पङ्क्तिः |
|---|---|---|---|
| वर्गा | वर्गो | ३ | १४ |
| उरोद्भवः, | उरोभवः | ४ | १२-२० |
| [ ये ये सान्तास्ते तेऽद-न्ता इतिमतमाश्रित्य 'उरोद्भव' इत्यप्यशुद्धं न, परं प्रसिद्धिमनुरुध्याव-सेयम् ] | | | |
| शास्त्र | शास्त्रे | ८ | १४ |
| ऋति | ऋति | १० | ६ |
| ऋकारश्च | ऋकारश्च | १० | १८ |
| जायऽसा- | जायाऽसा- | १३ | १२ |
| स्वैरं- | स्वैर | १३ | १४ |
| -ऽनुसासिको | -ऽनुनासिको | १८ | ६ |
| कुङ्वास्ते | कुङ्ङ्वास्ते | १८ | ६ |
| कुङ्ङ | कुङ्ङु | १८ | ९ |
| इदादयः | ईदादयः | १८ | १८ |
| -च्छति | लब्धुमिच्छति | २९ | १७ |
| स्यादा | स्यादौ | ३२ | ६ |
| ऽभिसः | भिसः | ३२ | १३ |
| धनाख्याम् | धनाख्यायाम् | ३३ | १९ |
| मुने | मुनेः | ३९ | १६ |
| पुसि | पुंसि | ४१ | १४ |
| सिद्ध | सिद्धे | ४५ | १७ |
| ङौ | ङ्यां | ४८ | १ |
| नन्तसन्तयोः | न्सन्तकस्य च | ४९ | ५ |
| वर्जितस्य | वर्जितयोः | ४९ | १७ |
| सुभ्रुवा | सुभ्रुवां | ६१ | ४ |
| २।१।०१। | २।१।९१। | ६२ | २० |
| यस्म | यस्मै | ६४ | ६ |
| सः | रुः | ६५ | २ |
| अहरात्रा- | अहोरात्रा- | ६५ | १९ |
| -स्योत | -स्येति | ६८ | १९ |
| हूना | ह्नो | ७३ | ४ |
| दुभगाः | दुर्भगाः | ७३ | ६ |
| -पद | -पदे | ७३ | ७ |
| प्रकृष्ट | प्रकृष्टं | ८० | २ |
| साधक | साधकं | ८० | २ |
| पूववत् | पूर्ववत् | ८० | १४ |
| भूत | भूतं | ८१ | २ |
| दवं | दैवं | ८७ | १४ |
| पीताय | पीता | ८७ | १६ |
| चैत्रा | चैत्रो | ८९ | १० |
| ऽल्पाद्विषाज्जनः | ऽल्पेन कर्मणा | ९९ | ९ |
| मघा | मघो | ९२ | ३ |
| स्थिति | स्थितिः | ९२ | २१ |
| न्दित | न्दितं | ९४ | ६ |
| ध्यध्व | ध्येऽध्व | ९७ | १२ |
| वाचिना | वाचिनो | ९८ | ३ |
| का | को | ९९ | ७ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| असमदा | अस्मदो | ९९ | १५ | तथव | तथैव | १३९ | ४ |
| थानो | थान्नो | १०३ | ९ | सुभ्र | सुभ्रु | १३९ | २१ |
| सपि | सर्पि | १०३ | ९ | कूंस | कुंस | १४० | ८ |
| स्यात् | षःस्यात् | १०४ | १८ | भकुंसश्च | भ्रुकुंसश्च | १४० | १० |
| भूमिष्ठो | भूमिष्ठो | १०७ | ९ | भवेत् | भवेत् | १४५ | ५ |
| नव | नैव | १११ | १२ | व्रत | व्रतं | १४५ | १२ |
| सिञ्चेत | सिञ्चते | ११२ | ८ | नित्य | नित्यं | १५२ | १२ |
| प्राःदुष्या- | प्रादुःष्यर | ११२ | ३ | थाऽयं | थौंऽयं | १५५ | १० |
| सोष्यसि | सोष्यसि | ११२ | १९ | पष्ठयन्त | षष्ठयन्तं | १५७ | ११ |
| णत्व | णत्वं | ११४ | ३ | समस्यतेन | समस्यते | १५९ | ४ |
| नामि | नादि | ११४ | १९ | कालिका | कालका | १५९ | १३ |
| देनु | देनुं | ११९ | ११ | उपमान | उपमानं | १६१ | १५ |
| ऋचिः | ऋचि | १२३ | १७ | कुञ्जेरः | कुञ्जरैः | १६३ | ५ |
| द्विगाः | द्विगोः | १२५ | ७ | सहक्तौ | सहोक्तौ | १६५ | १६ |
| द्विपुरुषा | द्विपूरुषी | १२५ | ११ | जाता | जातौ | १६८ | ८ |
| धीनक्षत्रे | धीर्नक्षत्रे | १२५ | १३ | स्वैद्वन्द्व | स्वैद्वन्द्वे | १६९ | ६ |
| ऽर्थ | ऽर्थे | १२९ | १७ | क्तान्त | क्तान्तं | १७१ | ६ |
| पूवकात् | पूर्वकात् | १३१ | १७ | ,, | ,, | ,, | १२ |
| गहीते | गृहीते | १३१ | १८ | बलाच्युतो | बलाच्युतौ | १७३ | ३ |
| मूलात | मूलात् | १३२ | ५ | प्रावृषिज | प्रावृषिजं | १७८ | १९ |
| मानवीज्ञेया | स्यान्मनावीच | १३२ | १६ | कटुः | कटुः | १७८ | १९ |
| देध | देर्ध | १३३ | ३ | पुवत् कम, | पुंवत् कर्म. | १८३ | १४ |
| ध्रवम् | ध्रुवम् | १३४ | २ | कम | कर्म | १८३ | १५ |
| कपति | कर्षति | १३५ | ८ | पुव- | पुंव- | १८४ | १५ |
| लुकभवेत | लुग्भवेत् | १३८ | २ | ,, | ,, | ,, | १८ |
| लुग-लुक | लुग् लुक् | १३८ | ५ | कलास | कैलास | १८७ | ३ |

८-१७

| | | | |
|---|---|---|---|
| आजरा | अजिरा | १८७ | ११ |
| दीघत्वं | दीर्घत्वं | १८७ | १२ |
| सभवे | संभवे | १८७ | १५ |
| दीघता | दीर्घता | १८९ | ५ |
| प्राक | प्राक् | १९० | ३ |
| ,, | ,, | ,, | १७ |
| नूनं | नूनम् | १९९ | २ |
| शीषः | शीर्षः | १९२ | १-२ |
| ईरन | ईरन् | २०३ | ६ |
| पेरः | परेः | २०९ | १० |
| परा | परो | २१२ | ५ |
| तिष्ठत | तिष्ठते | २१४ | १८ |
| द्विप्र | द्विप्र | २१७ | २२ |
| पुत्रा | पुत्रो | २१८ | ३ |
| अहि | अहिं | २१९ | १९ |
| गलुप | गृलुप | २२५ | ५ |
| आहता | आहुता | २३४ | १२ |
| परस्म | परस्मै | २३४ | १३ |
| आस्थत | आस्यत् | २३४ | १६ |
| आख्यात् | आख्यत् | २३४ | १७ |
| म्लुचूग्लुचू | म्लुचूग्रूचूग्लुचू | २३५ | १ |
| दश | दृश | २३५ | १४ |
| धमतः | धर्मतः | २३६ | ६ |
| रराधि | ररोध | २३९ | १० |
| ध्रवम् | ध्रुवम् | २४२ | ६ |
| ज | जृ | २४५ | ११ |
| सस्नरा | सस्वरा | २५४ | १ |
| सङ्जात | सङ्घात | २५७ | १७ |
| अया | अयो | २६५ | १९ |
| वत्स | वत्सं | २६६ | ६ |
| द्रेपरेद् | द्रेपर्येद् | २६६ | ९ |
| श्रा-र्लु | श्रो, लु | २७१ | २ |
| खनादानां | खनादीनां | २७३ | ११ |
| ह्रदादेशा | ह्रदादेशो | २७४ | १७ |
| ता | तो | २७५ | ७ |
| स्वयते | स्वर्यते | २८६ | १२ |
| न्नरा | न्नरां | २८८ | १५ |
| शीङ | शीङ् | २८९ | ७ |
| अदेवात् | अदेवीत् | २९? | २१ |
| घाता | घातो | २९७ | ५ |
| वशाता | कृशाता | ३०५ | २२ |
| छा | छो | ३०६ | १६ |
| धीत | धीतः | ३०? | १८ |
| भशम् | भृशम् | ३१७ | २१ |
| कतः | कृतः | ३२७ | ७ |
| विक्रेय | विक्रेये | ३३३ | १२ |
| मुञ | मुञ्जः | ३३५ | १३ |
| भृगा | भृगो | ३३६ | २ |
| गोघ्नो | गोघ्नको | ३४२ | १[illegible] |
| ॥८७॥ | ॥८७॥८८॥ | ३४२ | २२ |
| दूभृता | दूभृतौ | ३४६ | ७ |
| शोको | शोका | ३५३ | १० |
| र्निश्न्त्य | र्निश्यन्त्य | ३६० | २ |
| मुखाभ्यां | सुपाभ्यां | ३६८ | ९ |
| परिव्राङ् | परिव्राढ् | ३७४ | [illegible] |
| सूजू | सूर्जू | ३७४ | १[illegible] |
| मौहर्तिक | मौहूर्तिके | ३७८ | [illegible] |